श्रीमल्लौगाक्षिमहर्षिप्रणीतानि

# लौगाक्षिगृह्यसूत्राणि

देवपालकृतभाष्योपेतानि

प्रधानसम्पादकः

सन्निधानं सुदर्शनशर्मा

कुलपतिः



श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः

तिरुपतिः

२०११

S.V. Vedic University Series No: 40
*Research and Publications*

श्रीमल्लौगाक्षिमहर्षिप्रणीतानि

# लौगाक्षिगृह्यसूत्राणि

देवपालकृतभाष्योपेतानि

प्रधानसम्पादकः

सन्निधानं सुदर्शनशर्मा

कुलपतिः





श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः

तिरुपतिः

२०११

S.V. Vedic University Series No: 40

*Research and Publications*

# The GṚHYA SŪTRAS of Laugākṣi Maharṣi

## with the Bhāśya of Devapāla

**Chief Editor**

**Sannidhanam Sudarsana Sarma**

Vice-Chancellor



**Sri Venkateswara Vedic University**

**Tirupati**

**2011**

LAUGĀKṢI GṚHYASŪTRAS

with the BHĀṢYA of DEVAPĀLA

**First Impression :** 2011

**Copies :** 1000

**Price : ₹ 320 /-**



**ISBN: 978-81-920534-7-9**

**Chief Editor :**

**Prof. Sannidhanam Sudarsana Sarma**
Vice-Chancellor

**Published by :**

The Registrar
S.V.Vedic University

**Produced by:**
Research & Publication Wing
S.V.Vedic University
Tirupati - 517 502 (A.P.)



शारदामन्दिरम्, काश्मीरम्

# श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः, तिरुपतिः

**सन्निधानं सुदर्शनशर्मा**
कुलपतिः



## ।। पुरोवाक् ।।

श्रीमदखिलजगतः ईशितुः निःश्वासरूपो वेदः अनन्तः। नानाशाखोपशाखा-शोभितस्यास्य बह्व्यः शाखाः कालगर्भे अलीयन्त। अवरादवरं समुपलभ्यमान वेद-शाखासंरक्षणम् आस्तिकलोकस्य वैधं कर्तव्यमित्यत्र नास्ति संशीतिलेशोऽपि। कार्येऽस्मिन् श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः अनवरतमात्मानं व्यापारयति।

एवं स्थिते ३०.०८.२०११ दिनाङ्के गुरुचरणकमलदर्शनप्रपित्सुना तदुदीरि-ताशीर्वचनेन आत्मानं पावयितुमिच्छुना प्राप्तकाञ्चीपुरेण मयाऽवापि श्री श्री श्री जगद्गुरु कञ्चिकामकोटिपीठाधीश्वरदर्शनभाग्यजन्यः अमन्द आनन्दः। शिष्यवत्सलैः श्री श्री श्री जयेन्द्रसरस्वतिगुरुचरणैः अनुगृहीताम् आशीर्वाचं माल्यमिव शिरसा धृत्वा श्री श्री श्री शङ्करविजयेन्द्रसरस्वतिस्वामिचरणान् उपसर्प्य कृताभिवादेन मया सद्यः अलभ्यत गुरुसन्दर्शनफलं 'लौगाक्षिगृह्यसूत्र'मातृकारूपेण। स्वामिचरणाः प्रतिलिपिं दापयन्तः - ग्रन्थोऽयं चिराय काश्मीरेषु प्रकाशितः अद्य दुर्लभोऽस्ति। ग्रन्थस्यास्य पुनर्मुद्रणेन न केवलं वैदिकलोकः अपि तु कृत्स्नाऽपि काश्मीरपण्डित-पारम्परी परं तुष्यति। अतः प्रकाशनाय यतस्व इत्यवादिषुः। तदित्थं प्राप्तगुरुप्रसादश्रीः तिरुपतिनगरमासाद्य परिशोधन-प्रकाशनविभागाध्यक्षान् ब्रह्मश्री यम्.वि.जयरामशर्म महाभागान् शीघ्रातिशीघ्रं ग्रन्थस्यास्य प्रकाशनार्थाः टङ्कणादिचर्याः प्रारब्धुं समा-दिशम्। मध्ये मध्ये स्वामिचरणाः ग्रन्थप्रकाशनकार्ये प्रगतिं परामृशन्त एव आसन्। ग्रन्थोऽयं जम्मू-काश्मीरराज्ये प्रवर्तिष्यमाणे विजयदशमीप्रयुक्तमहोत्सवे उन्मोचनीय इति श्रीचरणानामाशयः साफल्यमेतीति मोमुदीति नश्चेतः।

सोऽयं लौगाक्षिगृह्यसूत्रनामाङ्कितः विद्वल्लोककरतललीलाकमलायमानः ग्रन्थः कृष्णयजुर्वेदान्तर्गतकाठकशाखया सम्बद्धः। महाभाष्यवचनानुसारं कृष्णयजुर्वेदस्य

शाखाः ८६ आसन्। तत्रान्यतमेयं काठकशाखा, यस्याः संहिताभागः १९४२ वत्सरे श्रीपाद दामोदरसात्वलेकरमहाभागैः प्रकाशितः। तत्र कतिपयमन्त्राणां स्वरचिह्नाङ्कनं न दृश्यते। अस्य ब्राह्मणभागे केचनांशाः परस्मिन् वत्सरे डा.सूर्यकान्तमहाभागैः लोहपुरात् (लाहोर्) प्रकाशिता। काठकसङ्कलनमिति शीर्षकाङ्किते ऽस्मिन् ग्रन्थे काठकब्राह्मणस्य कतिपयभागाः, कतिपय श्रौतसूत्राणि, गृह्यसूत्राणि च आसन्। ग्रन्थस्यास्य प्रकाशनं विहितं साहाय्यमवलक्ष्य Prof. Dr. A.C. Woolner, Vice-Chancellor of Punjab University महोदयेभ्यः, तथैव पण्डित भगवद्दत्तमहाभागेभ्यश्च धन्यवादान् वितरति सूर्यकान्तमहाभागाः। वस्तुतः १९२० क्रीस्तुवत्सरे एव Dr. William Caland महाभागः काठकब्राह्मणस्य कतिपयभागान् समपादयत्। तेन काश्मीरदेशे शारदालिप्यां लिखितः मातृकाग्रन्थः प्राप्तः किल। सूर्यकान्तमहाभागानां काठक-सङ्कलनग्रन्थस्य आधारभूता अपि मातृकाः काश्मीरेष्वेव अलभ्यन्त। केवलमेका काठकश्रौतसूत्रमातृका तावत् Asiatic Society of Bengal संस्थायाः ग्रन्थालयात् आसादिता।

तथैव Prof. William Caland, Prof. of Sanskrit, University of Utecht महाभागैः सम्पादिकपरिष्कृतः काठकगृह्यसूत्रनामाङ्कितः ग्रन्थः १९२५ क्रीस्तुवत्सरे लोहपुरादेव (लाहोर्) प्राकाश्यमानीयत। तद्ग्रन्थोपोद्घाते - काश्मीरात् ऐरोपाखण्डं प्रापितेषु तालपत्रग्रन्थसमुच्चयेषु काठकगृह्यसूत्रं प्रख्यातशर्मण्यविदुषा Buhler महाभागेन १८७५ क्रींस्तुवत्सरे एव प्रत्यभिज्ञातम्। काठकशाखासम्बद्धाः असंख्येयाः मातृका-ग्रन्थाः प्रायेण शारदालिप्यां लिखिताः अधुनाऽपि शर्मण्यादिदेशेषु सुरक्षिताः वरीवर्तन्त एव। गृह्यसूत्रमातृकासु देवपालभाष्यं, ब्राह्मणबल पञ्चिका, आदित्यदर्शन विवरणञ्च खण्डशः खण्डशः उपलभ्यन्ते इत्यलिखन्।

विरलायाः अस्याः शाखायाः अध्यापकाः अध्येतारश्च यत्नेन मृग्यन्ते। अस्यां दशायाम् एतस्य शाखीयस्य ग्रन्थान्तरस्य प्रकाशनमवश्यं विद्वल्लोकमुपकरिष्यतीति, पुनरपि अध्ययनाध्यापनव्यवस्थायां शाखामेनामानेतुमुत्साहं जनयिष्यतीति च नः सुदृढः विश्वासः। ६४४ सूत्रैः सन्दृब्धोऽयं ग्रन्थः काश्मीरराजधान्यां श्रीनगरे १९२७ क्रीस्तुवत्सरे तत्रभवतां मधुसूदनकौल्शास्त्रिणा पुरोवाचा साकं प्रकाशितः। स च देवपालविहितभाष्येण सुशोभितस्सन् विराजते। स्वाऽमुखवचनेषु ते न्यवेदयन्

यदस्य ग्रन्थस्य मातृका श्रीमद्भिः जे.सि.चटर्जीमहाभागैः प्रकाशनवत्सरात् दश-वत्सरेभ्यः पूर्वं धनं दत्त्वा क्रीत इति।

१९२७ वत्सरे प्रकाशनसमये कौल्महाभागानां हस्ते द्वे मातृके आस्ताम्। देवनागराक्षराङ्कितायामस्यां मातृकायां १३५ पुटान्यासन्। जीर्णानां, त्रुटितानां च पुटानां स्थाने नूतनपुटानि संयोजितान्यासन्। एषु शारदालिपिरुपयुक्ता। अस्याः मातृकायाः रचनाकालः प्रायः १८५७ क्रीस्तुवत्सरः भवितुमर्हति। इयं मातृका पूर्व-राज्ञा श्रीहरिसिंहमहाराजेन सञ्चालिते काश्मीरसर्वकारविभागग्रन्थालये आसीत्। द्वितीया मातृका तत्रभवतां काश्मीरपण्डितानां श्रीनगरवासिनां सहजभट्टमहाभागानां सकाशात् गृहीता। असम्पूर्णोऽयं मातृकाग्रन्थः शारदालिप्यामलिख्यत। प्रथमप्रकाशने तत्रभवद्भ्यः मधुसूदनकौल्शास्त्रिमहाभागेभ्यः स्वीयममूल्यं सहयोगं प्रायच्छन् आचार्याः आर्.यल्. कञ्जीलाल्महाभागाः, श्रीमन्तः महेश्वरराजानक महाभागाः, श्रीमन्तः रघु-नाथजादू महाभागाश्च।

सोऽयं लौगाक्षिगृह्यसूत्रग्रन्थः जगद्गुरु **श्री श्री श्री शङ्करविजयेन्द्रसरस्वती स्वामिपादानाम्** आशीर्वचनेन प्रोत्साहनेन च श्रीवेङ्कटेश्वरवेदविश्वविद्यालयद्वारा पुनःप्रकाश्यते। पठितॄणां लाभाय पूर्वप्रकाशिते ग्रन्थे विद्यमानं प्राक्कथनम्, उपोद्घातवाक्य-जातं च यथातथम् अस्मिन्नपि प्रकाशने न्यधायि। किञ्च पूर्वप्रकाशने अयं सूत्रग्रन्थः सम्पुटद्वयात्मक आसीत्। स च द्वितीयसम्पुटः १९३२ वत्सरे श्रीमहाराजा हरिसिंहस्य साहाय्येनैव प्रकाशितः। अस्माभिस्तु पाठकजनसौविध्यं मनसि निधाय एकेनैव सम्पुटेन कृत्स्नोऽपि ग्रन्थः उदनीयत। नूतनतया पठितॄणां सौकर्याय अस्माभिः सूत्राणा-मकारादिक्रमानुसारिणी सूची ग्रन्थान्ते न्यबध्यत। पाठकजनज्ञानाधिक्याय पूर्वप्रकाशिते ग्रन्थे उपोद्घातः आङ्ग्लभाषायामग्रथ्यत। यस्मिन् अपूर्वाः बहवो विशेषाः न्यक्षिप्यन्त। अतः अस्मिन्नवीने संस्करणे वयम् आंग्लभाषानभिज्ञवैदिकानां लाभाय तानपि विषयान् समगृह्णीम।

याज्ञवल्क्यस्मृतेः व्याख्याता अपरार्कः कैश्चिदितरैस्साकं लौगाक्षिं गृह्यसूत्र-कर्तारं व्याचष्टे - 'लौगाक्षिश्च तथा काण्वस्तथा भागुरिरेव च। ...। गर्ग गौतम गार्गेया गालवो गोभिलस्तथा।' इति। लौगाक्षिशब्दः ईषद्विषमेण लौकाक्षिरूपेण काशिकायां,

न्यासग्रन्थे च दृश्यते - 'लोकाक्षेण प्रोक्तमधीयते लौकाक्षाः। लौकाक्षस्य वाऽपत्यं लौकाक्षिः। तस्य छात्रा लौकाक्षाः।' इति। काशिकाकारयोः वामनजयादित्ययोः समयः ६५० क्रीष्टाब्दः। न्यासकारः जिनेन्द्रबुद्धिः यस्य समयः ७००-७५० क्रीष्टाब्दयोः मध्ये आसीत्, निर्दिशति यल्लोकाक्षस्य सुतः लौकाक्षिः इति।

लौगाक्षिमहाभागेन काठकश्रौतसूत्रग्रन्थः गृह्यपद्धतिरिति लौगाक्षिस्मृतिरिति अपरश्चेति त्रयः अन्ये ग्रन्थाः प्रणीता इति विज्ञायते। लौगाक्षिगृह्यसूत्रशीर्षकं लौगाक्षि-महाभागं गृह्यसूत्राणामेषां कर्तारं ज्ञापयति। अस्य लौगाक्षिमहाभागस्य, अर्थसंग्रहकर्तृः लौगाक्षिभास्करस्य च अस्ति कश्चनसम्बन्धः नवेति विषयः गवेषणामर्हति।

## गृह्यसूत्रम्

लौगाक्षिगृह्यसूत्रमिति नाम्ना प्रकाश्यमानोऽयं ग्रन्थः काठकगृह्यसूत्रम्, चरक-गृह्यसूत्रम्, चारायणीयगृह्यसूत्रमिति त्रीणि नामान्तराणि धत्ते। चरक इति वैशम्पायनस्यैव नामान्तरमिति काशिकाकारः लिखति। अयं चरकः 'आलम्बि' नाम्नि प्राच्यभारतदेशे समुत्पन्नः। कदाचित् चरकादिशाखासु गृह्यसूत्रानुपलब्धौ लौगाक्षिविनिर्मितमिदं काठकगृह्यसूत्रमेव विद्वद्भिरादृतं स्यादिति सम्भावयितुं शक्यते। तत्र कारणं सर्वा इमाः प्रागुक्ताः शाखाः कृष्णयजुर्वेदेनैव सम्बध्यन्ते।

यद्यप्यत्र सूत्रेषु स्पष्टः कश्चन अध्यायविभागः न दृश्यते तथापि देवपाल-विनिर्मितभाष्यमवलम्ब्य काण्डिकेति नाम्ना कश्चन विभागः प्रादर्शि।

सूत्रग्रन्थोऽयं विवरणवाक्यैः, मन्त्रोद्धरणैश्च संश्लिष्ट आस्ते। क्वचित् क्वचित् सुदीर्घपङ्क्तिषु सूत्रं कियत्पर्यन्तम्? कुत आरभ्य विवरणम् ? इत्येतत् ज्ञातुमपि किञ्चित् कष्टं भवति। महता परिश्रमेण सूत्र-विवरण-मन्त्राद्युद्धरणांशान् पृथक् कृतवतां प्रथमसम्पादकानां मधुसूदनकौल्महाभागानाम् अभिप्रायमनुसृत्य अस्य प्रमादस्य मूलं तदानीन्तनानां वैदिकानां श्रद्धाराहित्यपूर्णम् अलसत्वमेव। ते कण्ठपाठैकायत्तचित्ताः विषयान्तराणि अन्ततो गत्वा अर्थविशेषपरिग्रहञ्च व्यस्मार्षुः। कर्मठानां वैदिकानां शब्दार्थनिरपेक्षा दृष्टिः पाकयज्ञवृत्तिनामके स्वग्रन्थे आदित्य-दर्शनः स्पष्टमनिन्दत् -

**इहैते छान्दसाः प्रायः सर्वे वेदमधीयते।**
**पदमप्येकमेतस्मान्न बुध्यन्ते कदाचन।।**
**पाठमात्रेण वेदस्य मन्यमानाः कृतार्थताम्।**
**गर्जन्ति श्रोत्रियाः गेहे निष्फलं शरदभ्रवत्।।**
**अर्थेन किं नो वेदस्य वदन्ति इति ते मिथः।**
**अर्थज्ञानसमासज्ञानर्थज्ञान्विहसन्ति च।।**
**अर्थमप्रतियन्तश्च प्रारभन्तेऽप्रदक्षिणम्।**
**विद्वत्साध्यानि कर्माणि विपरीतार्थसिद्धये।।**
**ब्राह्मणं किञ्चिदेवाथ ज्ञात्वा यादृशतादृशम्।**
**अपरे पण्डितम्मन्याः कुर्वते सततं क्रतुम्।।**

सम्भवतः अनेनैव हेतुना प्रकृतग्रन्थे सूत्र-विवरण-मन्त्रोद्धारणसाङ्कर्यं लब्धास्पदं सत् कृष्णयजुर्वेदीयत्वं विडम्बयति।

क्वचित् क्वचित् काठकगृह्यसूत्रेषु सूत्रान्तरसादृश्यं स्पष्टं विलोक्यते। विशिष्य कानिचित् सूत्राणि लौगाक्षिगृह्यसूत्रे मानवगृह्यसूत्रे वाराहगृह्यसूत्रे च समानाकारेण परिदृश्यन्ते। कानिचित्तु स्वल्पभेदेन। तथाविधानां कतिपय सूत्राणामुल्लेखः मधुसूदन-कौल्महाभागानाम् आङ्ग्लोपोद्धाते द्रष्टव्यः।

**व्याख्याः**

लौगाक्षिगृह्यसूत्रमवलम्ब्य प्रवर्तमानाः त्रयो ग्रन्थाः उपलभ्यन्ते। यथा -

१) आदित्यदर्शनविरचितं विवरणम्।

२) ब्राह्मणबलेन लिखिता पञ्चिका।

३) देवपालविनिर्मितं भाष्यञ्चेति।

ऐतिह्यक्रमेण पश्यामश्चेत् सर्वप्रथममुपतिष्ठते पञ्चिकाकारः ब्राह्मणबलः। डा. कलण्ड्महाभागैः सम्पादिते काठकसूत्रेऽपि पञ्चिकायाः प्रणेता ब्राह्मणबल इति निर्दिष्टम्। पञ्चिकायां ब्राह्मणबलः आदित्यदर्शनं वा देवपालं वा न स्मरति। अतः अयमुभयोः पूर्वतन इति सम्भाव्यते। पञ्चिकायाः मातृका काश्मीरेषु उपलब्धा। तत्रैव पद्धतिः इति अन्याऽपि मातृका उपलब्धा, यस्याः कर्ता ब्राह्मणबलः। द्वयोर्मध्ये

विराजमानसादृश्यमवलम्ब्य, पद्धतिकारः ब्राह्मणबल एव पञ्चिकायाः प्रणेता इति मधुसूदनकौल्महाभागा अभिप्रयन्ति।

यतः भाष्यकारः देवपालः बहून् सूत्रकारान् स्मरन् आदित्यदर्शनस्यापि नाम गहणाति, अतः आदित्यदर्शनेन देवपालात् पूर्वतनेन भवितव्यम्। आदित्यदर्शनस्य विवरणं लौगाक्षिगृह्यसूत्रार्थजिज्ञासून् नितान्तमुपकरोति। पूर्वमेव बहुभिर्बहुधा व्याख्याने कृते सत्यपि लौगाक्षिगृह्यसूत्रार्थविवरणस्य इतोऽप्यावश्यकताऽस्तीति आदित्यदर्शनः स्वयमेव निर्दिशति -

**प्रायेण मन्त्रविवृतौ विवृतं मयेदं गृह्यं तथापि बहुभिः शबलीकृतत्वात्।**
**स्पष्टं सुयुक्ति लघुवाक्यविदामभीष्टमिष्टं चिकीर्षुरहमत्र पुनर्विचित्रम्।।**
**व्याख्यातमेतद्बहुभिः प्रगल्भैर्निर्युक्तिकं किञ्चिदबुद्धमस्ति।**
**सुयुक्तिकं चापि सुबोधमेतद्व्याख्यातमस्माभिरतः क्षमध्वम्।।**

आदित्यदर्शनः वेददर्शनस्य पुत्रः, माधवरातस्य शिष्यश्च आसीत्। अयं काश्मीरेष्वेव लब्धजन्म, तत्रैव न्यवसदिति चारित्रिकाः अभिप्रयन्ति। किञ्च महम्मदीयशासनस्य मध्यकाले सः जीवन्नासीदिति च तेषामाशयः।

भाष्यकारो देवपालः साम्प्रतिक जलन्धरनगराभिजनः। तस्य पिता हरिपालः, पितामहश्च उपेन्द्रभट्टः। देवपालः जयपुरे स्थित्वा भाष्यरचनामकरोत्। स्वयं देवपालः बहुश्रुतः। बहुत्र सः विविधान् प्रातिशाख्यग्रन्थान् चारायणीयादिसूत्राणि, पूर्वमीमांसासूत्राणि च समुद्धरति। तत्र तत्र सः 'केचित्' 'अन्ये' इत्यादिशब्दैः आदित्यदर्शनादीन् स्वपूर्वव्याख्यातॄन् सम्बुध्य, तन्मतखण्डनमपि विधत्ते।

बहुसहस्रवर्षेभ्यः काश्मीरदेशः विद्यास्थानम् सत् व्यराजत। लौगाक्षिप्रभृतयः परमवैदिकाः भामहमम्मटादयः आलङ्कारिकाश्च तेनैव विषयेण सम्बद्धाः। श्रूयते यत् तत्र सरस्वती नदीरूपेण वहतीति। प्रत्यक्षं दरीदृश्यन्ते वाग्देव्याः शारदायाः मन्दिराणि। कदाचित् सरस्वतीकण्ठसीम्नि मध्यरत्नमिव विराजमानं काश्मीरग्रन्थजातं यवनादि दुराक्रमणवशात् ह्रासमुपगतं सत् क्षीणशोभं सत् सहृदयानां मनः क्लिश्नाति। काश्मीरविषयसमुद्भूतस्यन् वैदिकवाङ्मयजातस्य पुनरुद्धरणम् आस्तिकलोकस्य परमं

कर्तव्यं भवति। हितकरेऽस्मिन् कार्ये मां व्यापारितवतां **काञ्चीकामकोटिपीठाधीश्वराणां श्री श्री श्री जयेन्द्रसरस्वतिजगद्गुरुचरणानां** सविधे, विशिष्य **श्री शङ्करविजयेन्द्रसरस्वतिस्वामिचरणानां** सविधे च पतन्तु मदीयाः अनेककोटयः कार्तज्ञ्यपूर्णाः प्रणामाः। ग्रन्थप्रकाशने सोत्साहमुत्तरदायित्वम् ऊढवतः संशोधनप्रकाशनविभागाध्यक्ष्यान् **ब्रह्मश्री यम्.वि.जयरामशर्माणः, डा.यम्.जयसीतारामशास्त्रि महाभागान्**, चिरञ्जीविनं **यम्.वि.शिववीरनागेन्द्रञ्च** अभिनन्द्य, प्रकृतोऽयं लौगाक्षिगृह्यसूत्रग्रन्थः वेदविदुषां करतलमलङ्कृत्य हृदये आनन्दसन्दोहं जनयिष्यतीति विश्वसन्, कार्यसाफल्यकारणं भगवन्तं वेङ्कटेश्वरं मनसा ध्यायन् विरमामि विस्तरात्।

**तिरुपतिः**
**२५.०९.२०११**

**सन्निधानं सुदर्शनशर्मा**
**कुलपतिः**



THE

Kashmir Series of Texts and Studies.

No. XLIX.

# THE LAUGĀKSHI-GṚHYA-SŪTRAS

[illegible] OF

## DEVAPĀLA.

EDITED WITH PREFACE AND INTRODUCTION

BY

PANDIT MADHUSUDAN KAUL SHĀSTRĪ, M. A., M. O. L.

VIDYĀVĀRIDHI, M. R. A. S.

Superintendent Research Department,

JAMMU & KASHMIR GOVERNMENT,

SRINAGAR.

Published under the Authority of the Government of His Highness Rājarājes'wara Mahārājādhirāja S'rī MAHĀRĀJA HARISINGHJI BAHĀDUR, K. C. I. E., K. C. V. O., MAHĀRĀJA OF JAMMU AND KASHMIR GOVERNMENT.

Volume I.




BOMBAY:

PRINTED AT THE 'NIRNAYA SAGAR' PRESS.

1928. A. D.

Kashmir Series of Texts and Studies.

No. LV.

# THE LAUGĀKSHI-GṚHYA-SŪTRAS

WITH

THE BHĀSHYAM OF

## DEVAPĀLA.

EDITED

BY

PANDIT MADHUSŪDAN KAUL SHĀSTRĪ, M. A., M. O. L.

VIDYĀVĀRIDHI.

Superintendent Research Department,

His Highness' Government,

JAMMU & KASHMIR,

SRINAGAR.

Published under the Authority of the Government of His Highness Rājarājes'wara Mahārājādhirāja S'rī MAHĀRĀJA HARISINGHJI BAHĀDUR, G. C. I. E., K. C. V. O., MAHĀRĀJA OF JAMMU AND KASHMIR.

Volume II




BOMBAY:

PRINTED AT THE 'NIRNAYA SAGAR' PRESS.

1934. A. D.

# The Laugākṣi-gṛhya-sūtras

## PREFACE

The set of manuscripts, that has been principally utilised in preparing the present edition of the Laugākṣi-gṛhya-sūtras of the Kāṭhaka school of the Kṛṣṇa Yajurvedins, was purchased over a decade of years ago by Mr. J.C. Chatterji, B.A.(Cantab), Vidyāvāridhi, late Superintendent of the Research Department. Edition of them could not be taken up early, as the manuscrips were almost all untrustworthy and as the Department had many other works to handle immediately. The manuscripts used herein are detailed below:

MS.A. - Belongs to the Departmental Library. Contains 135 leaves of the old type local paper of different colours, having a rectangular painting on the borders, representing an old system of decorating the Kaśmirian MSS, not in vogue at present. The first three leaves are missing. The fourth and the fifth as also the last six are mutilated. Leaf 135 is a restoration. Character Dēvanāgari. Restora- tions are in Śāradā character. Lines in the pages vary from 19 to 23. Size 10 x 8. Has a country binding. Dateless. Aged about 70 years. Complete but incorrect. It ends -

इति चारायणीयमन्त्रभाष्यं कृतिः श्रीमदाचार्यवर्य-स्वामिभट्टाकरहरिपाल-पूज्यपादानाम् (?)। ओं तत्सत्परब्रह्मणे नमः।।

MS.B. - Belongs to the late Pandit Sahaja Bhatta of Srinagar. Condition fresh. Incomplete towards the end. Incorrect. Bears no date. Contains 135 leaves. Lines per page 27 to 31. Written on local paper. Character Śāradā. Size 6 x 8.

Begins:-

ओं श्रीगणेशाय नमः।। ओं नमो भगवते वासुदेवाय।। ओं नमो नरहरिं घोर-दंष्ट्रानखरदारुणम्। सन्मार्गोत्सादिदुर्दान्तदैत्यनिर्मूलनोद्यतम्।।

Abruptly ends with:

रुद्राञ्जपेत्।। ततो रुद्राभिधानान्षडनुवाकाञ्जपेत्।। जीववत्सायाः पयस्विन्याः पुत्रमेकरूपं द्विरूपं वा यो वा यूथं च्छादयेत्। यूथे च तेजस्वितमः ........।

Here and now I take opportunity to thankfully acknowledge the help of Mr. R.L. Kanjilal, M.A., Vedāntatīrtha etc., Senior Professor of Sanskrit, Sri Pratap College, Srinagar, who favoured me with the loan of his transcript of the Devapāla and to record my appreciation of the hard and intelligent work of, and the scholarly suggestions given ungrudgingly and with pleasure by, Maheśvara Rājānaka and Raghunātha Zādoo, Pandits of the Department.

Srinagar, KMR
30th Nov. 1927

MADHUSUDAN KAUL



# INTRODUCTION

The Gṛhya-sūtras, or the ceremonial formulas, compiled by Laugākṣi for the benefit of the followers of the Kāṭhaka School of the Black Yajurveda, which were once in wide currency among the Brāhmaṇas of Kaśmir and around which sprang up a vast literature in Sanskrit and which even till today govern the life of a twice-born from before his conception to the time he joins the manes, are preserved, after escaping various ravages both human and natural, in the three ancient works. These are:

(1) Vivaraṇa of the Laugākṣi-gṛhya-sūtras by Āditya Darśana.

(2) Pañcikā, or Paddhati, of the same by Brāhmaṇabala, son of Mādhavādhvaryu

(3) Bhāṣyaṃ of Devapāla on the Sūtras and the mantras connected with them.

## Vivaraṇa

Among the works refered to above, the earliest is that of Āditya Darśana. It is a brief gloss of the Laugākṣi-gṛhya-sūtras and not that of the Pañcikā. He expressly mentions in his Vivaraṇa[1] that he undertakes the writing of a gloss on the gṛhyasūtras. Pañcikā is later than Vivaraṇa and is, in my opinion, not a commentary but a manual, pure and simple, giving rules and regulations regarding rites and ceremonies of the followers of the Kāṭhaka School. The name Pañcikā, as applied to the work in question, denotes nothing but a detailed treatise. As such, it supplements the information obtainable from the Laugākṣi-gṛhya-sūtras with additional instructions from the pertinent quotations from other gṛhya-sūtras of the Kṛṣṇa Yajurveda and even goes for

---

1. प्रायेण मन्त्रविवृतौ विवृतं मयेदं गृह्यं तथापि बहुभिः शबलीकृतत्वात्।
स्पष्टं सुयुक्ति लघुवाक्यविदामभीष्टमिष्टं चिकीर्षुरहमत्र पुनर्विचित्रम्।।

Page 1, Departmental transcript, No.90

व्याख्यातमेतद्बहुभिः प्रगल्भैर्निर्युक्तिकं किञ्चिदबुद्धमस्ति।
सुयुक्तिकं चापि सुबोधमेतद्व्याख्यातमस्माभिरतः क्षमध्वम्।। Page 131, ibid

help to the Smṛtis, Purāṇas and what not. One would, if he were told to look upon the Pañcikā as a commentary, feel at a loss to understand what necessity Āditya Darśana felt for writing a Vivaraṇa which is a mere gloss when there was the Pañcikā already in use for the gṛhya-sūtras of Laugākṣi and how the Pañcikā could refer to its own glossator.[2]

## Date and parentage of Āditya Darśana

The name of the father of Āditya Darśana was Veda Darśana[3]. He (Āditya Darśana) was a pupil to Mādhavarāta. As he happens to directly refer to the customs and rites of the Kaśmirian Brāhmaṇas not infrequently, it is reasonable to hazard that Āditya Darśana was a Kaśmirian both by birth and actual residence. His date of birth cannot be far removed from the middle of the Mohammedan period of the Kaśmir history as his depiction of the sad tale of the contemporary Kaśmirian priests[4] cannot otherwise be acceptable. For, we know from the following quotations from the Śrīkāntacarita of Maṅkha Kavi (C.1300 A.D.) and the Stuti-Kusumāñjali of Paṇḍita Jagaddhara Bhaṭṭa (C.1500 A.D.) that even in the day of these writers the land of Kaśmir could boast of a number of Vedic scholars and experts in the Pūrva-Mīmāṃsa school.

"Śrī Trailokya who was, as it were, the second Kumārila Bhaṭṭa, expert in subtle reasoning and yet well-versed in the art of poetry."[5]

---

2. Cf. प्र वां दंसांसीति मण्डपानाम्।। १४।।
ब्रा०। ............ सेतुप्रतिष्ठायामिति आदित्यदर्शनभाष्यम्।।

Page 284, Calands Edition, Kāṭhakasūtras.

3. यो वेददर्शन इति द्विजवर्गमुख्यः सत्यार्जवाशयविशुद्धगुणैः प्रसिद्धः।
आस्तिक्यनिर्मलमतिर्विहितानि चक्रे चारायणीयचरणैकगुणः प्रदाता।।
तस्यात्मजो विगतमत्सरमानसानां मन्त्रार्थतत्त्वविदुषां जयनिन्द्रियाणि।
श्लाघ्यः श्रुताभिजनमाधवरातशिष्य आदित्यदर्शन इमां विवृतिं व्यधत्त।।

Pākayajñavivṛtti, Dept. MS. No.96, leaf.21

4. Cf. इहैते च्छान्दसाः प्रायः etc. etc., Page 8, Introduction.

5. दृढोऽपि तर्ककार्कश्ये प्रगल्भः कविकर्मणि।
यः श्रीतुतातितस्येव पुनर्जन्मान्तग्रहः।। ६५।।
तं श्रीत्रैलोक्यं .........................।
.......................................... ।। ६६।। canto.25

"Lakṣmi Deva who, by virtue of the right performance of the Vedic rituals, made the recitation and knowledge of the Vedas fruitful."[6]

"Gauradhara, whose clear exposition of the Yajurveda called Vedavilāsa, displays his wonderful and world-famous knowledge of the Scriptures."[7]

## Pañcikā

The Pañcikākāra, Brāhmaṇabala, does not refer to Devapāla and, there fore, it is probable that he might have lived before him. Assertion of the name of the author of the Pañcikā is based on the manuscript evidence given by Dr. Caland in his edition of the Kāṭhaka-Sūtras. The manuscript of the Departmental Library is entirely silent as to the name of the author. On comparison I have found that the Paddhati of Brāhmaṇabala is identical with the Pañcikā. Therefore, I also attribute the authorship of the Pañcikā to Brāhmaṇabala.

## Adhyāya divison of the Sūtras

As I have had my attention confined chiefly to the Bhāṣyaṃ of Devapāla, such as is available in my manuscript of the said work, and as he says nothing with regard to the Adhyāya division of the sūtras, I could not give the divison into Adhyāyas of the sūtras indicated by Brāhmaṇabala. Devapāla relates only this much that Laugākṣi composed a work in the sūtra form of which the first thirty-nine Adhyāyas dealt with the Vaitānika or the Śrauta ceremonies and the rest with the Gṛhya.[8]

---

6. धिन्वन् पवित्रचारित्रो विश्वामित्र इव त्रयीम्।
पाठबोधावनुष्ठानसौष्ठवेन पुनाति यः।। ८९।।
.......................................।
लक्ष्मीदेवः ..............................।। ९२।। canto.25

7. ..........................................।
................. गौरधरः किलाग्रणीः।। १।।
........................................।
ऋजुर्यजुर्वेदपदार्थवर्णना व्यनक्ति यस्याद्भुतविश्रुतं श्रुतम्।। ३।। 39 Stotra.

8. See Devapāla Bhāṣyam, Vol.I, Page 1, line 14.

## Kāṇḍikā division

The works that I could lay my hands upon do not furnish any direct clue as to the division of the sūtras by giving a colophon at the end of each Kāṇḍikā or chapter. It is specially so with regard to the Bhāṣyam of Devapāla. The MSS. of the Vivaraṇa and the Pañcikā give the chapter numbering here and there. By following the method of the Pañcikā, that invariably gives at the beginning of its manual of each ceremony all the sūtra in extenso governing that ceremony, and that of Devapāla who comments upon Mantras used in each chapter at its end, the way is found out to determine the Kāṇḍikā division of the sūtras. Devapāla refers to the name of the chapter by the word Kāṇḍikā more than once.[9]

## Devapāla Bhāṣyam

The Bhāṣyam of Devapāla owes its origin to the need that the author felt for giving in one place, for the facility of the reader, an interpretation both of the sūtras and of the Mantras of which the application was required by the former. Although the MS. in my possession of his work, on account of various mistakes, presents him in very bad colours, yet an impartial study reveals that he was better acquainted with the Vedic literature and had more material at his disposal for doing the task, than other known Vedic commentators. While discussing the formation of the word Kṛcchra[10] he quotes a sūtra from the Cārāyaṇi-sūtras, a grammatical work belonging to the class of Prātiśākhyas, which are not extant now. He makes use of aphorisms from the Pūrvamīmāṃsa, showing forth thereby his wide familiarity with that school of the Indian philosophy. He criticises here and there the interpretations of the sūtras by his predecessors, referring to Āditya Darśana by name and others by the words 'kechit' and 'anye'.[11]

9. See pages 41 and 138, Devapāla Bhāṣyam.

10. See Devapāla Bhāṣyam, pages 51, line 09.

11. See Devapāla Bhāṣyam, pages 67, 69, 92, 97 etc.

## Birthplace and parentage of Devapāla

One of the colophons[12] of the Bhāṣyam indicates that Devapāla was a native of Jullundhar (either because of his own birth or because of the birth of his forefathers) and lived at the time of composing the present Bhāṣyam in Jayapura.[13] His father was called Haripāla and his grandfather Bhaṭṭa Upēndra.[14] While recording the tradition preserved in his family in connection with the Sacred Thread Ceremony he tells that Haripāla was proficient[15] in the Vedas.

## Other works of Devapāla

Devapāla, we learn from the Laugākṣi-gṛhya-sūtrȧ Bhāṣyam , composed also a commentary on the Yoga-sūtra of Patañjali[16] and a hymn in praise of Viṣṇu.[17] These both are yet unavailable.

## Laugākṣi-sūtras variously named

The Laugākṣi-gṛhya-sūtras under edition are known by different names, i.e. Kāṭhaka-gṛhya-sūtras, Caraka-gṛhya-sūtras, Cārāyaṇīya-gṛhya-sūtras. It is so because the school of the Black Yajurveda to which the sūtras relate also bears the name of Kaṭha, Caraka and Cārāyaṇīya. There was, it seems, practically no difference between the readings, coming as they did from the same teacher, of the Black Yajurveda prevalent among these minor branches of the Caraka school founded by the pupils of the teacher Vaiśampāyana alias Caraka, born in Ālambi, one of the eastern countries of India.[18] It is also on

---

12. See Devapāla Bhāṣyam, page 152.
13. Does it stand for the present Zovur-a village towards the south-east of Śrīnagar, about 7 miels from the Rājagarḥ Palace?
14. See the colophon, page 152
15. See page 25, Devapāla.
16. See Devapāla, page 09.
17. See page 30, Devapāla.
18. हरिद्रुरेषां प्रथमस्ततश्छगलितुम्बुरू।
    उलपेन चतुर्थेन कालापकमिहोच्यते।।
    आलम्बिश्चरक: प्राचां पलंगकमलावुभौ।
    ऋचाभारुणिताण्ड्याश्च मध्यमीयास्त्रयोऽपरे।।

..... cntd.

account of this close affinity of these minor branches that Pāṇini refers in the singular number to Kaṭha and Caraka.[19]

## Text and commentaries intermixed

It is a very sad thing indeed not to find the sūtras in isolation from the expository texts. It, therefore, defies the attempt even of the most vigilant reader at distinguishing between each sūtra and its commentary. Quotations also, as often as not, run into the portions of the commentary in such an inextricable manner that it is difficult to say where the former ends and the latter begins. It is with the help of numerous reference books now available on the Vedic literature that I could rectify mistakes in the quotations by tracing them to their sources.

## Negligence of the priests

The regrettable condition in which the sūtras have for centuries been lying is partly due to the negligence shown by those custodians of the sacred literature, who officiated at sacrifices. For this breach of their duty, they have received a well-merited condemnation at the hands of Āditya Darśana. In his treatise of the food sacrifices called Pāka-yajña-vivṛtti he opines:

"All the officiating priests are, as a rule, found devoted to the superficial reading of the Vedas. They never try to learn the meaning of a syllable from them. They think that their object of life is gained simply through the mere muttering of the Mantras, and are, like the autumnal clouds, fruitlessly uproarious in their hearth. They carry on their conversation with one another saying - Why to bother ourselves with the meaning of the scriptural texts? and cut jokes at those who take to the critical study of the Vedas in right earnest.

---

श्यामायन उदीच्येषु उक्तः कठकलापिनोः।

चरक इति वैशम्पायनस्याख्या। तत्सम्बन्धेन सर्वे तदन्तेवासिनश्चरका इत्युच्यन्ते।

Kāśikā, page 352 (Pūrvārdha, edi. Caukhāmbā Series)

तत्र आलम्बिर्नाम प्राचां देशः। तत्र उत्पन्नश्चरकः।।

Kāśikā Nyāsa, (edi. Gauḍagranthamālā), page 1007, line 22.

19. कठचरकाल्लुक्। Aṣṭādhyāyī, 4.3.107.

Not knowing the meaning of the Mantras, they undertake in a careless manner the religious performances, such as are only within the competence of the learned, leading to the undesirable consequences. Some of them after having a very imperfect knowledge of this of that Brāhmaṇa, pose for the learned and engage themselves eternally in the sacrificial performances." [20]

In his Bhāṣyam of the Laugākṣi-gṛhya-sūtras, Devapāla confirms the aforesaid opinion of Āditya Darśana saying that the thread of tradition regarding the structure and the meaning of the Mantras of the Yajurveda (Śatādhyayana)[21] was broken for long.[22]

## How the length of each sūtra was determined?

Even though the sūtras had a host of commentaries long before Devapāla thought of furnishing one of his own, inter-connection of the individual sūtras and the determination of the length of each sūtra in the case of the present sūtras remained for a long time, as he says, a matter of controversy. Some commentators linked a particular sūtra with the preceding and some with the following.[23] In constructing the text of each sūtra I have kept in view

---

20. इहैते छान्दसाः प्रायः सर्वे वेदमधीयते।
पदमप्येकमेतस्मान्न बुध्यन्ते कदाचन।।
पाठमात्रेण वेदस्य मन्यमानाः कृतार्थताम्।
गर्जन्ति श्रोत्रियाः गेहे निष्फलं शरदभ्रवत्।।
अर्थेन किं नो वेदस्य वदन्ति इति ते मिथः।
अर्थज्ञानसमासज्ञानर्थज्ञान्विहसन्ति च।।
अर्थमप्रतियन्तश्च प्रारभन्तेऽप्रदक्षिणम्।
विद्वत्साध्यानि कर्माणि विपरीतार्थसिद्धये।।
ब्राह्मणं किञ्चिदेवाथ ज्ञात्वा यादृशतादृशम्।
अपरे पण्डितम्मन्याः कुर्वते सततं क्रतुम्।।

Pākayajñavivṛtti, Ms.No.96 (of our Dept.) leaves, 21-22, See also page 2, Intro.

21. एकाशतमध्वर्युशाखाः etc. etc.

Page 65, Mahābhāṣyam (Nirṇaya Sāgar ed.)

22. See page 125, Devapāla Bhāṣyam

23. See Devapāla Bhāṣyam, page 78, lines 1-2; also page 66-67 ibid.

that the sense of each sūtra was complete in itslef and only that portion of the textual words was taken as forming one individual sūtra which was accompanied with the Bhāśyam of Devapāla.

The author of the sūtras had adopted a device throughout of quoting the Mantras from the Kāṭhaka school by the initial words and those of other schools in too. Only such regarding of the Mantras have been retained in the edition as were commented upon by Devapāla.

## The Sūtrakāra

I have purposely give the name of the author, along with that of the Śākhā, of the sūtras firstly because the tradition in Kaśmir associates them with Laugākṣi as their author, secondly because Aparārka[24] and other lawgivers quote the sūtras under his authorship and lastly because the name of Laugākṣi occurs in combination with authors of other gṛhyas such as Gobhila, etc. in the Ślokatarpaṇa of Agastya[25] which is much in use in Kaśmir even now. Laugākṣi is the Kaśmirised form of Laugākṣi which figures in the Kāśikā[26] (650 A.D.) and Nyāsa (700-750 A.D.). Both Vāmana-Jayāditya, the joint authors of the Kāśikā, and Jinendrabuddhi of the Nyāsa mention him as a son of Lōkākṣa. He had a large number of pupils who were called Laukākṣas.

## Works

Other works of Laugākṣi known through the internal evidence are -

---

24. See Yājñavalkya Smṛti with commentary by Aparārka, (Edi. Anandasarma Series), Vol.I, pages 28, 29 etc.etc. Also see Parāśara Dharma Saṃhitā, (edi. Bombay Sanskrit Series No.XLVIII), vol.I, part II, pages 21, 26, 27 etc.

25. लौकाक्षिश्च तथा काण्वस्तथा भागुरिरेव च। एते मे० ।
गर्गगौत्‌मगार्गीया गालवो गोभिलस्तथा। एते मे० ।

Ms. Yajurvēda Tarpaṇa Khaṇḍa, leaf 5.

26. See Sūtra VI, 2, 37 - कार्तकौजपादयश्च etc.
लोकाक्षेण प्रोक्तमधीयते लौकाक्षाः। लौकाक्षस्य वाऽपत्यं लौकाक्षिः। तस्य छात्रा लौकाक्षाः।
Kāśikā (edi. Caukhāmbā Series), pages 174-176. Part II. Also see page, 347. (Kāśikā Nyāsa, Vol.II, part II, Gauḍagranthamālā)

1) Śrautasūtras of Kāṭhaka school.

2) Gṛhyapaddhati (a metrical work)

3) Laugākṣismṛti

## Modernity and kinship with other Sūtras

Some of the Laugākṣi-gṛhya-sūtras are in a fullfledged Ślōka form and assume more or less the tinge of modernity.[27] They are mostly akin to the Mānavagṛhyasūtras and the Vārāhagṛhyasūtras. Their mutual resemblance is so great that the identity in some cases is found not only in the sense but also in the verbal form used to express the sense. The following parallel passages are given from the above Gṛhyasūtras to illustrate their mutual kinship:

| Laugākṣi | Mānava | Varāha |
|---|---|---|
| उपनयनप्रभृति व्रतचारी स्यात्।<br>मार्गवासाः etc. to सप्तमुञ्जां<br>मेखलां धारयेत्।। ५ ।। न रथमा-<br>रुहेत्।। १६ ।। न मुषितां प्रेक्षेत् | same.<br>same<br>न मुषितां स्त्रियं प्रेक्षेत्। | same.<br>same<br>nil |
| छन्दस्यार्थान् बुद्ध्वा स्नास्यन् गां<br>कारयेदाचार्यमर्हयेत्।। १।।<br>श्रोत्रियोऽन्यो वेदाध्यायी।। २।।<br>न तस्य स्नानम्।। ३।।<br>षडर्घ्यार्हा भवन्त्याचार्य ऋत्वि-<br>प्राजा विवाह्यः प्रियः स्नातक इति। | छन्दस्य...... आचार्यमर्हयेच्छो-<br>त्रियः।।<br>अन्यो वेदपाठी न तस्य स्नानम्।<br>षडर्घ्या भवन्त्यृत्विगाचार्यो विवाह्यो<br>राजा स्नातकः। प्रियश्चेति।। | छन्द ........ अर्हयेत्।।<br>षडर्घ्यार्हा भवन्त्यृत्वि.....<br>प्रियश्चेति। |
| तस्मा असिपाणिर्गां प्राह।। २५।।<br>तां शास्ति।। १६।। मम चामुष्य<br>च पाप्मानं जहि हतो मे पाप्मा<br>पाप्मानं मे हत।। १७।। ओं<br>कुरुतेति।। १८।। चतुरो नाना<br>गोत्रान् ब्राह्मणान्भोजयेत्।। | असिपणिर्गां प्राह। हतो मे पाप्मा<br>पाप्मानं मे हत। ओं कुरुत इति<br>प्रेष्यति। चतुरो ब्राह्मणान् नाना-<br>गोत्रान् भोजयेत्।। | असिपणिर्गां प्राह। हतो मे पाप्मा<br>पाप्मानं मे हत। ओं कुरुतेति<br>सम्प्रेष्यति। चतुरवरान्ब्राह्मणान्<br>नानागोत्रान् etc. |

27. See Devapāla Bhāṣyam, Sūtra 33, page 07, also pp. 51-53

The Gṛhya ceremonies, with which the first forty Kāṇḍikās of the Laugākṣi sūtra presented in this volume deal, are described in brief in Sanskrit in the list of contents. In the introduction to the volume II of the present Gṛhyasūtras which is in press, I will refer at length, it is hoped, to the domestic ceremonies which are even now performed in Kaśmir and which have fallen into disuse and are now only traceable in certain vernacular words of Kaśmir.



# विषयसूची

| काण्डिका | विषयः | पृष्ठ. |
|---|---|---|

| काण्डिका | विषयः | पृष्ठ. |
|---|---|---|
| ५० | उपहाराः | 298 |
| ५१ | पशुकल्पः | 299 |
| ५२ | शूलगवः | 305 |
| ५३ | आग्रायणम् | 308 |
| ५४ | वैश्वदेवम् | 316 |
| ५५ | आर्तवस्वस्त्ययनानि | 320 |
| ५६ | कपोतनिलयशान्तिः | 323 |
| ५७ | वाहनस्वस्त्यनम् | 327 |
| ५८ | गोस्वामिस्वस्त्यनम् | 329 |
| ५९ | वृषोत्सर्गः | 333 |
| ६० | आग्रहायणीस्वस्त्ययनम् | 336 |
| ६१ | अष्टकाः | 341 |
| ६२ | अष्टकासु गोकल्पः पशुकल्पो वा | 350 |
| ६३ | श्राद्धम् | 352 |
| ६४ | अन्वष्टकाश्राद्धम् | 368 |
| ६५ | अन्वष्टक्यम् | 370 |
| ६६ | सपिण्डीकरणम् | 372 |
| ६७ | नान्दीमुखादिश्राद्धम् | 377 |
| ६८ | पशुश्राद्धान्तरम् | 378 |
| ६९ | पिण्डान्वाहार्यम् | 379 |
| ७० | फाल्गुनीपाकयज्ञः | 380 |
| ७१ | गोयज्ञः | 383 |
| ७२ | अद्भुतशान्तिः | 391 |
| ७३ | राकाहोमः | 402 |
| ७३ | प्रकीर्णकम् | 402 |
| | सूत्रानुक्रमणिका | i-xii |

List of Abbreviations used in the

## Laugākṣi-Gṛhya-Sūtra

| | | |
|---|---|---|
| आप० ध० सू० | - | आपस्तम्बधर्मसूत्रम् |
| उ० | - | उणादिसूत्रम् |
| ऋ० | - | ऋग्वेदः |
| क०शा० | - | कठशाखा |
| का० | - | काण्डिका |
| ग० पु० | - | गरुडपुराणम् |
| तै० | - | तैत्तिरीयसंहिता |
| तैत्ति० | - | तैत्तिरीयोपनिषद् |
| तै०आ० | - | तैत्तिरीयारण्यकम् |
| दक्षस्मृ० | - | दक्षस्मृतिः |
| पात० | - | पातञ्जलयोगसूत्रम् |
| पा०सू० | - | पाणिनिसूत्रम् |
| पा०वा० | - | पाणिनिसूत्र-वार्तिकम् |
| पू०मी० | - | पूर्वमीमांसा |
| बृ०आ० | - | बृहदारण्यकम् |
| भ०गी० | - | भगवद्गीता |
| म० मनु० | - | मनुस्मृतिः |
| मु० | - | मुण्डकोपनिषद् |
| या०प्रा० | - | याज्ञवल्क्यस्मृति, प्रायश्चित्तभागः |
| लिङ्गपु० | - | लिङ्गपुराणम् |
| श्वेत० | - | श्वेताश्वतरोपनिषद् |
| संवर्त० | - | संवर्तस्मृतिः |



अथ

काठके चरकशाखायां

# लौगाक्षिगृह्यसूत्राणि

## देवपालकृतभाष्योपेतानि



### ।। प्रथमा काण्डिका ।।

**नमो नरहरिं घोरदंष्ट्रानखरदारुणम्।**
**सन्मार्गोत्सादिदुर्दान्तदैत्यनिर्मूलनोद्यतम्।। १।।**
**अवावरीं धीतिमिरस्य पीवरीं**
**संसारसिन्धोः परमार्थदृश्वरीम्।**
**सुधीवरीं सत्पुरुषार्थसम्पदां**
**नमामि भक्त्या परया सरस्वतीम्।। २ ।।**
**पितुः श्रीहरिपालस्य नुत्वा पादौ निबन्धनम्।**
**समन्त्रकाठगृह्यस्य देवपालोऽभिधास्यते।। ३।।**

एकोनचत्वारिंशताध्यायैर्वैतानिकानि कर्माणि प्रतिपादितानि। साम्प्रतं गृह्याग्निसाध्यानि कथ्यन्ते। यद्यपि गृह्यानुष्ठानपूर्वाणि वैतानिकानि, तथापि प्रत्यक्षविधिमूलत्वात् सूत्रकृता पूर्वं प्रतिपादितानि। ततो विध्युद्देशवाक्यत्वेन निकटतरत्वादर्थवादानां तद्गम्यं व्रताद्यं विधाय, मन्त्रवर्णगम्यान् संस्कारान् वक्ष्यति। तत्र त्रैवर्णिकानां कृतविवाहानां गृह्यकर्मण्यधिकारः। विवाहोऽप्यधीतवेदस्य - 'वेदमधीत्य स्नात्वा भार्यामधिगच्छेत्' इत्यादिस्मृतेः। अध्ययनमप्युपनीतस्य ब्रह्मचारिणः। तत्रोपनयनं वक्ष्यति।

संस्कारव्रतानि तावदाह -

**उपनयनप्रभृति व्रतचारी स्यात्।। १।।**

व्रतशब्दो यमनियमवाचकः। तत्र प्रसक्तिप्रतिषेधात्मका यमाः अमांसभक्षणादयः। नियमास्तु अप्राप्त्यङ्गपरिपूरका भैक्षवृत्त्यादिविषयाः। 'अहिंसासत्याऽस्तेयब्रह्मचर्याऽपरिग्रहाः' यमाः। (पात.२.३०) 'शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि' नियमाः (पात.२.३२.) इति तु यमा नियमाश्च तैरुक्तास्तेऽपि यथासम्भवमिह निर्धार्यन्ते। उपनयनादारभ्य आवेदाध्ययनपरिसमाप्तेर्व्रतचरणशीलो भवेत्।। १।।

**मार्गवासाः।। २।।**

स्यादित्यनुषङ्गः। उत्तरत्रापि योज्यमेवैतत्। मृगस्येदं मार्गं, सामान्यशब्देनाप्येणस्येति विशेषो वक्ष्यमाणत्वात्। वस्ते आच्छादयतीति वासः परिधानम्। तच्च मृगचर्म, मार्गं वासो यस्येति मार्गवासाः स्यात्।। २।।

**संहतकेशः।। ३।।**

हन्तिर्हिंसाकर्मा। सम्यक् क्षुरेण न तु कर्तर्यादिना अपसारिताः केशा यस्य, मुण्डितशिरा इत्यर्थः, तेन मुण्डनेन वक्ष्यमाणेन पौनरुक्त्यमित्याहुः। अथवा संहता एकरूपाः केशा यस्य सः। एतदुक्तं भवति - 'मुण्डो जटिलः शिखी वा' इति वक्ष्यति, तत्रैकस्य त्रैवर्णिकस्य ब्रह्मचारिणः कालभेदेन विकल्पनिवृत्त्यर्थं नियमाभिधानमेतत् एकरूपा एवैकैकेन केशाः कर्तव्याः, जटी चेन्न मुण्डी शिखी वेति। एवं मुण्डादिषु।। ३ ।।

**भैक्षाचार्यवृत्तिः।। ४।।**

भिक्षाणां समूहो भैक्षम्। आचार्यस्तु 'उपनीय तु यः शिष्यम्' (मनु.२.१४) इत्यादिलक्षणः। भैक्षेणैव ब्रह्मचारिणा शरीरं सन्धारणीयमिति नियमः। आचार्याधीना चास्य वृत्तिः स्थितिरूपा शरीरपोषणरूपा च स्यात्। आचार्यो हि प्रेर्य कांश्चिद्भिक्षां दापयतीत्याचार्येणापि तस्य शरीरपोषणलक्षणावृत्तिरन्यचेष्टावदुपपद्यते, अन्यतो वा कदाचिद्भैक्षस्यालाभे आचार्य एव भोजनादिकं ददातीति।। ४।।

**सशल्कदण्डः।। ५।।**

इह सामान्याभिधानेऽपि दण्डः पालाशादिः यथायथं वक्ष्यमाणः। सह शल्केन त्वचा वर्तमानो दण्डो यस्य स सशल्कदण्डः स्यादित्यनुषङ्ग एव।। ५।।

**सप्तमुञ्जां मेखलां धारयेत्।। ६।।**

सप्तभिर्मुञ्जव्यक्तिभिस्त्रिवृत्त्या वृत्ती भवति तां मेखलां धारयेत्। अत्र मेहनसम्बन्धिनः खस्य माला मेखलेति निर्वचनं कुर्वन्ति। मयूरव्यंसकादित्वात्साधु किल। मिह सेचने, मिह्यते सिच्यते वीर्यादिकमनेनेति मेहनमानन्देन्द्रियं तस्योपरि नाभेरधोभागे यत्खं तस्य माला।। ६।।

**न मधुमांसे अश्नीयात्।। ७।।**

माक्षिकं मांसं न भक्षयेदिति तृप्त्यर्थतया प्रसक्तस्य प्रतिषेधः। मधु मद्यमपि तत् क्षत्रियवैश्ययोर्निषिध्यते इत्युपाख्यानमेकीयम्। तन्न, प्रसक्त्यभावात् 'तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्' इति त्रयाणामपि न निषेधः स्यात्।। ७।।

**क्षारलवणवर्जी।। ८।।**

क्षारं च तल्लवणमौषरं सामुद्रिकादि तद्वर्जी तद्वर्जनशीलः। सैन्धवसौवर्चलादिकं भक्षयेदेव। क्षारद्रव्यं सर्वं च लवणं वर्जयेदिति केचित्।। ८।।

**आचर्यस्याप्रतिकूलः।। ९।।**

अनुकूल इत्यर्थः।। ९।।

**सर्वकार्यास्वतन्त्रः।। १०।।**

आस्तामध्ययनादिकम्, क्रियामात्रमप्याचार्यानुज्ञया विना न कुर्यादित्यर्थः।।

**पूर्वोत्थायी ।। ११।।**

**जघन्यसंवेशी।। १२।।**

शयनादिकमाश्रिते गुरौ उत्थातुकामे प्रथममेवोत्तिष्ठेत्, शयनावस्थिते चाचार्ये तत्पादसंवाहनादिकं च कृत्वा पश्चात् शयनादिकं संविशेत्। जघन्यसंवेशीत्यस्यायमर्थः - यदाचार्यः खट्वायां तिष्ठति तदा ब्रह्मचारिणा खट्वायाः सकाशाद्यज्जघन्यमासनं पट्टतलशय्यादिकं तत्र संवेशनीयम्। एवं शय्यामासीने गुरौ ततो निम्न इत्याद्यनुमन्तव्यम्।।

**यदेनमुपेयात्तदस्मै दद्यात्।। १३।।**

यत् सुवर्णादिकं किलैनमुपेयादागच्छेत् तत् ब्रह्मचारी अस्मै आचार्याय दद्यात्।।

**बहूनां येन संयुक्तः।। १४।।**

यद्यपि ब्रह्मचारी सकलवेदवेदाङ्गोपाङ्गज्ञानार्थं यथायोग्यं क्रमेण बहूनाचार्यानुपास्ते, तथापि यत् यस्य संनिधौ निवसँल्लभेत तत्तस्मै दद्यात्, न तु सर्वदा सर्वं सर्वेभ्यो विभज्येत्यर्थः।।

**नास्य शय्यामाविशेत्।। १५।।**

यस्यां शय्यायामाचार्यः स्थितस्तामपाटवादिदशायां कारुण्यात् स्नेहातिशयाद्वा पाटवे वाचार्यानुज्ञातोऽपि नाधितिष्ठेदित्यर्थः। तेन जघन्यसंवेशीत्यनेन पौनरुक्त्याभावः।। १५ ।।

**न रथमारुहेत्।। १६।।**

अस्येत्यनुषङ्गः। अयमप्यनुज्ञातस्य प्रतिषेधः। अन्ये तु शय्याग्रहणमाचार्याधिष्ठितासनयानाद्युपलक्षणार्थं रथवाक्यं वर्णयन्ति, रथग्रहणं तु करितुरगाद्युपलक्षणार्थं वर्णयन्ति - 'न संवस्त्रयेत' इत्यत्र स्थितेन द्वितीयेन नञा, तन्त्रेणावृत्त्या वा सम्बन्धयन्ति। रथं न समारोहेन्न, किं तर्हि, ग्रामादिकं गच्छन्नसमर्थो वाहनान्तरं च न लभते तदाचार्यानुज्ञातस्तेनाधिष्ठितमपि करितुरगं समारोहेदेवेत्यर्थः।। १६।।

**न संवस्त्रयेत।। १७।।**

समानं वस्त्रं न कुर्यात्, आचार्यपरिहितं वस्त्रं न परिदधीत। नाप्याचार्यवस्त्रेण सह समाने करण्डादिभाण्डे स्ववस्त्रं संश्रितं कुर्यात्।। १७ ।।

**सर्वाणि सांस्पर्शिकानि स्त्रीभिः सह वर्जयेत्।। १८।।**

संस्पर्शनिमित्तानि यानि पाणिग्रहणाभ्यञ्जनादीनि कर्माणि तानि सर्वाण्येव सर्वाभिः स्त्रीभिः सह वर्जयेत्। 'गुराविव तत्पुत्रदारेषु वर्तनीयम्' इत्यस्याः स्मृतेरप्ययमपवादः पादसंवाहनादिविषयः।। १८।।

**न मुषितां प्रेक्षेत्।। १९।।**

मुषितामिव नग्नां न पश्येदित्यर्थः।। १९।।

**न विहारार्थं जल्पेत्।। २०।।**

विहारः क्रीडा। तदर्थं परिहासादिकं न वदेत्। अथवा 'सर्वकार्यास्वतन्त्रः' इत्यनेन सर्वक्रियास्वाचार्यानुज्ञाग्रहणपूर्विकायां प्रवृत्तौ स्थितायां विहारं मूत्रमलोत्सर्गमाह विहारार्थं न जल्पेदनुज्ञाग्रहणाय।। २०।।

**न रुच्यर्थं किञ्चन धारयेत्।। २१।।**

रुचिर्दीप्तिः रतिः प्रीतिश्च। तदर्थं द्रव्यविशेषादिकं न संगृह्णीयात् अलङ्करणं क्रीडादिकम्।। २१।।

**न स्नायात्।। २२।।**

रुच्यर्थमित्यनुवर्तते।। २२।।

**उदकं वाभ्युपेयात्।। २३।।**

अयमर्थः - रुच्यर्थं स्नानं निषिद्धं, नित्यं तु कर्तव्यमेव - 'नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम्।' (मनु. २.१७६) इत्यादिना ब्रह्मचारिणोऽपि विधानात्। तत्र च विकल्पः - स्नानं कदाचिन्मन्त्रसंस्कृतेनोदकेन प्रोक्षणं कदाचिन्मज्जनम्। तत्राद्यमनेनोक्तम् - 'उदकं वाभ्युपेयात्' इति।। २३।।

मज्जनमधिकृत्याह -

**यदि स्नायाद्दण्ड इवाप्सु परिप्लवेत।। २४।।**

यदिशब्दः प्रतिबद्धो विधायकोऽनुवादं प्रार्थयते - 'यदि शालिं भुञ्जीत तदा दध्युपसिञ्चेत्' 'यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इत्यादिवत्। तेनायमर्थः - यदा मज्जनरूपः स्नानपक्षस्तदा ब्रह्मचारिणा दण्डेनेवाप्सु परिप्लवमात्रं कर्तव्यम्। न तु कान्त्यादिसिद्धये मलापसारणादिना यतनीयम्।। २४।।

**मुण्डो जटिलः शिखी वा।। २५।।**

मुण्डः शिखारहितः।। २५।।

**सायं प्रातः सन्ध्यामुपासीत।। २६।।**

सकलादित्योपलक्षितः कालो दिवसः। आदित्यशून्यकालो रात्रिः। अर्धोदितेनार्धास्तङ्गतेन चादित्येनोपलक्षितः कालः सन्धिः। सन्धौ भवा सन्ध्या। तामुभयीमपि प्रत्यहमुपासीत। उपासनं सेवा।। २६।।

कथमुपासीतेत्याह -

**तिष्ठेत्पूर्वाम्।। २७।।**

पूर्वाह्णभागगतां तिष्ठेत् निवृत्तगतिः पूर्वां प्राङ्मुखो जपन्नवतिष्ठेत सनक्षत्र-कालादारभ्य आ सूर्यज्योतिर्दर्शनात्।। २७।।

**आसीतोत्तराम्।। २८।।**

अपराह्णसंनिहितामुपविष्टः प्रत्यङ्मुखः सभास्करकालादारभ्य जपन्नासीत आ तारकज्योतिर्दर्शनात् आसीतोत्तरां, सन्ध्याकालस्यातिसूक्ष्मत्वादेवं तदुपासनमिष्टम्।।

**ओं भूर्भुवः स्वरित्युक्त्वा तत्सवितुरिति सावित्रीं त्रिरन्वाह।। २९।।**

दिङ्मात्रदर्शनमेतत्। ब्राह्मे मुहूर्तेऽभ्युत्थायानुष्ठितशरीरधर्मः,

'अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः।
स्रवत्येष दिवा रात्रौ प्रातःस्नानं विशोधनम्।।' (दक्ष.स्मृ.२.७)

इति स्मरणात् मुख्यं गौणं वा स्नानं विधाय, 'त्रिराचम्य द्विरुन्मृज्य खान्युपस्पृश्य प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति' इति स्मरणात् त्रीन्प्राणायामान् पञ्चदशमात्रा-परिमाणान्स्मार्तोक्तान्कृत्वा प्रतिप्रणवयुक्तव्याहृतिसप्तकान्वितसशिरस्कसावित्र्या त्रिरभ्यासेन परिच्छिन्नांस्त्रीन्प्राणायामान्कृत्वा अघमर्षणादिसूर्योपस्थानान्तं भूर्भुवःस्व-रिति महाव्याहृतित्रययुक्तां तत्सवितुरिति सावित्रीमभ्यस्तां जपेत्। सावित्रीमन्वाहेत्यनु-शब्दोऽभ्यासार्थः। तत्सवितुरिति प्रतीकः सवितृदेवताकत्वेऽपि 'आकृष्णेन रजसा' इत्यादीनां सावित्रान्तराणां निवृत्त्यर्थः।। २९।।

**प्रागस्तमयान्निष्क्रम्य समिध आहरेद्धरिणीर्ब्रह्मवर्चसकाम इति श्रुतेः।।३०**

अनस्तङ्गते भानौ ग्रामान्निष्क्रम्याष्टौ समिधो अग्निसमिन्धनार्थं हरितवर्णा आर्द्रा आहरेद्यो वेदाध्ययनतदर्थानुष्ठानादिसमृद्धिलक्षणं कामयते। एतद्धि श्रुत्यावेदितं श्रुतिमूलत्वात्स्मृतेः।। ३०।।

**सायंप्रातः सन्ध्यानिःसरणं भैक्षाचरणमग्नीन्धनम्।। ३१।।**

सायंप्रातः सन्ध्योपासनार्थं ग्रामाद्बहिर्निःसरणं कर्तव्यम्। सायंप्रातश्च भैक्षाचरणं कर्तव्यम्। उभयकालं हि भोजनमाम्नातम् - 'सायंप्रातर्मनुष्याणामशनं देवनिर्मितम्।'

(संवर्त.१.१२) इति। एवमग्निसमिन्धनं कालद्वयेऽपि कर्तव्यम्। चतस्रः प्रातः चतस्रः सायं समिधो होतव्याः। एवमन्यकालविशेषविधानार्थान्येतानि त्रीणि वाक्यानि। पूर्वश्च मध्याह्नात् प्रातःकालः, उत्तरश्च सायंकालः।। ३१।।

**सायमेवाग्निमिन्धीतेत्येके।। ३२।।**

'सायमेवाग्निसमिन्धनम्' इत्येकेषां वेदविदां मतम्। अत्र च पक्षे चतस्रः समिध आहर्तव्याः।। ३२।।

**भैक्षस्याऽचरणे दोषः पावकस्याऽसमिन्धने।**
**सप्तरात्रमकृत्वैतदवकीर्णिव्रतं चरेत्।। ३३।।**

उपलक्षणमेतत्। भैक्षस्याऽचरणे अग्नेश्चाऽसमिन्धने सन्ध्यालोपादिके च दोषः, प्रत्यवायो भवति, विहितातिक्रमणात्। यथोक्तम् -

'नोपतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद्बहिः कार्यः सर्वस्माद्द्विजकर्मणः।।' (मनु.२.१०३)

इति। अथ सन्ध्योपासनभ्रंशे भैक्षार्थमचरणे अनटने अग्नेश्चासमिन्धने सति यत्पापं भवति तस्य विनाशाय अवकीर्णिव्रतं प्रायश्चित्तमाचरेत्। अवकरणमवकीर्णोऽविधानोत्सर्गः कामतो ब्रह्मचारिणो रेतस उत्सर्गः। अवकीर्णं विद्यते यस्य सोऽवकीर्णी। तस्य व्रतमाम्नातम्।

'सप्तागारं चरेद्भैक्षं स्वकर्म परिकीर्तयन्।
तेभ्यो लब्धेन भैक्षेण वर्तयेदेककालिकम्।।
उपस्पृशंस्त्रिषवणमब्देन स विशुद्ध्यति।।'

इति। एतत्सन्ध्योपासनादिकमकृत्वा अवकीर्णिव्रतमाचरेत्। किं परिपूर्णमाब्दिकमेव? नेत्याह सप्तरात्रमिति। अन्ये तु व्याचक्षते सन्ध्योपासनादिकं सप्तरात्रमकृत्वा अवकीर्णिव्रतं चरेत् परिपूर्णमेवेति। सप्तरात्रान्न्यूनाधिके वा अवकरणं न्यूनमधिकं चेति। याज्ञवल्क्य आह -

'भैक्षाग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः।
कामावकीर्ण इत्याभ्यां हुत्वा चाज्याहुतिद्वयम्।।

नैर्ऋतं गर्दभं वैतत्संवत्सरव्रतं चरेत्।।' (या.प्रा.श्लो.२८१) इति।

अत्रापि पूर्ववद्योजना।। ३३।।

अधुना सन्ध्योपासनोपयोगिन ओं भुर्भुवः स्वरित्यादीन्मन्त्रान् व्याख्यास्यामः। तत्र सर्वमन्त्रेषु देवता ऋषिश्छन्द इत्येतत् त्रयं श्रुतिराबोधयति अज्ञाननिन्दामुखेन ज्ञानसंस्तवात् - 'यो ह वानधिगतर्षिच्छन्दोदेवतो ब्राह्मणेन मन्त्रेण वा याजयति वाध्यापयति स स्थाणुं वर्च्छति' इति। तत्र सर्गादावभ्रष्टसंस्कारा: पुण्यकर्माणो विदितसकलवेदितव्याः सुप्तप्रबुद्धात्मान ऋषयो याज्ञवल्क्याद्याः। हिरण्यगर्भादिपरम्परया च नित्या वेदाः। तथा च श्रूयते - 'तत एव परमेष्ठी प्राजापत्यो यज्ञमपश्यद्दार्शपौर्णमासौ।' इत्यादि। मन्त्राभिधेया देवताः।

'गायत्र्युष्णिगनुष्टुभो बृहतीपंक्तित्रिष्टुभः।
जगती चेति विज्ञेयाश्छन्दसां सप्तजातयः।।'

मन्त्रार्थं च सम्यग्बुभुत्समानेन उपसर्गाणां 'छन्दसि परेऽपि व्यवहिताश्च' इत्यादिलक्षणमनुसर्तव्यम्। 'वर्णागम' इत्यादि निरुक्तम्। व्यत्ययश्च सप्तंजातीनाम्। एवमादि प्रतिमन्त्रं नाम्नाभिधीयमानं ग्रन्थगौरवमातनोतीत्यर्थप्रदर्शनमेव करिष्यते। ओं भूः ओं भुवः ओं स्वः ओं महः ओं जनः ओं तपः ओं सत्यम् इति सप्तमहाव्याहृतयः सप्रणवाः सप्तलोकनामानि। तत्राद्यास्तिस्रो महाव्याहृतयः, महतोऽर्थस्याभिधानात्। महःप्रभृतयस्तु न महत्त्वेन विशेष्यन्ते स्वर्गैकदेशाभिधानात्।

'भुवनानां समस्तानामधस्तान्निबिडं तमः।
लक्षपञ्चाशीत्यधिककोटियोजनसंमितम्।।
अवीचिर्नाम नरकस्तस्य चोपरि वर्तते।
अवीचिनरकादूर्ध्वं मेरुपृष्ठपरावधिः।।
भूर्लोको भाषितः सर्वैः पुराणेषु महर्षिभिः।।'

सैषा सप्तद्वीपा मेदिनी। तानि पुनरुक्तानि पौराणिकैः -

'जम्बुः शाकः कुशः क्रौञ्चः शाल्मलिश्च तथापरः।
गोमेदः पुष्करश्चेति सप्तद्वीपगणो मतः।।' (लिङ्ग.पु.४६.२) इति।

एषां विभागः पातञ्जले योगशास्त्रे दर्शितोऽस्माभिर्विभूतिपादे - 'भुवनज्ञानं सूर्ये संयमात्'(३.२६) इत्यत्र सूत्रे। तारानक्षत्रविचित्रस्त्वन्तरिक्षलोको भुवोलोको मेरुशिखरादारभ्य ध्रुवावधिः। ततः परस्तात्स्वर्गलोकः। स च पञ्चविध इति सप्त लोका भवन्ति। पञ्चविधत्वं च स्वर्गस्य - माहेन्द्रः एकः, महेन्द्रस्वामिकत्वात्। एवं प्राजापत्यो द्वितीयः, अस्य मह इति नाम। ब्रह्मलोकस्त्रिविधः जनस्तपः सत्यमिति। पञ्चानामप्येषां स्वर्गशब्दः साधारणः। अतो व्याहृतिमन्त्राणामभिधेयानि भुवनानि देवताः। एतासां प्राणायामे विनियोगस्तैत्तिरीये दृश्यते। स्मृतावपि -

'प्रणवे नित्ययुक्तस्य व्याहृतीषु च सप्तसु।
त्रिपदायां च सावित्र्यां न भयं विद्यते क्वचित्।।' इति।

'पृथिव्यादिलोकदेवता वीर्यभूताः।' इति ब्राह्मणात्। ऋषयस्तासां निदर्शिताः शौनकेन तावत् -

'व्याहृतीनां तु सर्वासामृषिराद्यः प्रजापतिः।
व्यस्तानां च समस्तानां ब्राह्ममक्षरमोमिति।।' इति।

अन्येनापि -

'विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः।
ऋषिरत्रिर्वसिष्ठश्च कश्यपश्च यथाक्रमम्।।' इति।
'अग्निवायू रविश्चैव वाक्पतिर्वरुणस्तथा।
इन्द्रो विश्वे व्याहृतीनां दैवतानि यथाक्रमम्।।
अग्निः सोमस्तथा सूर्यो वाक्पतिर्वरुणस्तथा।
क्वचिदिन्द्रस्तथादित्यो व्याहृतीनां यथाक्रमम्।।'

अन्यो बभाण - 'सत्यसङ्कल्पेन प्रजापतिना लोकनिवासिनां भोगाय सप्तलोकान् सिसृक्षुणा एवं व्याहृतं सप्तलोका भविष्यन्ति।' इति। तेन प्रजापतिरेवासां ऋषिः व्याहृतित्वं च। तथा च पुराणम् -

'चतुर्दशविधं सर्गं सृष्ट्वेदं व्याहृतं स्वयम्।
सप्तलोका भविष्यन्ति तस्माद्व्याहृतयः स्मृताः।।'

युज्यन्ते चैकत्रानेके द्रष्टारः कालभेदेन, युगपच्च।

**ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।**
**धियो यो नः प्रचोदयात् ओम्।।**

गायत्रं छन्दः, प्रजापतिः ऋषिः, सविता देवता, जपोपनयनहोमादिषु विनियोगः। तथा च द्वैपायनः -

'विश्वामित्र ऋषिश्छन्दो गायत्रं सविता तथा।
देवतोपनये जप्ये विनियोगो हुते तथा।।' इति।

सर्वमित्रो विश्वामित्रः प्रजापतिरेव विवक्षितः। अभिधेयत्वाच्चात्र सवितुर्देवतारूपत्वम्। जपमन्त्राणामपि प्रतीयमानत्वाद्दुरपह्नवोऽर्थः, यद्यपि जपमन्त्रः प्रतीतस्तथापि जपिता जपमन्त्रेण तदर्थं ध्यायति। युक्तियुक्तमेतत् जल्पतिजपत्योः व्यक्तायां वाचि वृत्तेः। एतदेव व्यक्तत्वं यदर्थप्रतिपादनयोग्यत्वं, विपर्यये तु अव्यक्तत्वं कुक्कुटादिवाचाम्। न च प्रतीयमानोऽप्यविवक्षित इत्यभिधेयो न भवतीति भणितुं प्रभवति कश्चित्। न हि चक्षुरादिना प्रतीयमानो जलादिरजलाद्यर्थिनो नेन्द्रियविषयः। न चाविवक्षायाः सवितुः कारणमस्ति ध्यानेन तदर्थजपोपगृहीतेनाराधितस्य परापरपुरुषार्थसिद्धिहेतुत्वात्, 'य एवं विद्वान् जपति' इति जपमन्त्रेष्वपि विद्वत्ताया अपेक्षणात्। किञ्च सर्वोपनिषत्सु प्रणवगायत्रीरूपत्वं ब्रह्मणोऽभिधीयते, सर्वभावात्मकत्वं च गायत्रीप्रणवयोः। तथा च छान्दोग्योपनिषदि पठ्यते -

'गायत्री वा इदं सर्वं यदिदं किञ्च, वाग्वै गायत्री, वाग्वा इदं सर्वं भूतं, गायति च त्रायते च या सा गायत्रीयं वाव सा येयं पृथिवी, अस्यां हीदं सर्वं प्रतिष्ठितम्।' (३.१२) इत्यादि।

सामान्यवाच्यपि गायत्रीशब्दः प्रकृतायामिह सावित्र्यां वर्तते। अत एव गायन्तं त्रायते इति गायत्रीति तत्र तत्र निर्वचनम्। त्राणं च पालनमुपद्रवनिवारणमुपकाराधानं च। एतां च सन्ध्यादौ जपतोऽनाद्यविद्यावासनोपप्लवोपप्लुतजीवेन्द्रियाद्युपद्रवविद्रवे सति अखिलप्रपञ्चविहीनचैतन्यसुखस्वभावमयपरब्रह्मलक्षणमोक्षप्राप्तिर्भवति। कामिनां च स्वर्गादिप्राप्तिरुपात्तदुरितविद्रवणं च। आदावन्ते च वेदवाचां प्रपञ्चस्यापि ओंकारात्मके ब्रह्मण्यवस्थितिं दर्शयितुमादावन्ते च ओंकारोच्चारणमिष्यते -

'ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा।
स्रवत्यनोङ्कृतं पूर्वं पुरस्ताच्च विशीर्यते।।' इति।

तथा च स्मृतावपि - 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।' (भ.गी.१७.२३) इत्युक्तम्। योगशास्त्रे च -'तस्य वाचकः प्रणवः।' (१.२७) 'तज्जपस्तदर्थभावनम्।' (१.२८) इति। तस्येश्वरस्य - 'ईश्वरप्रणिधानाद्वा।' (१.२३) इत्यनन्तरोक्तस्य। ईश्वरस्य च प्रजापतिर्विष्णुरित्यादि पर्यायमात्रम्। ब्रह्मात्मिकैव गायत्री सर्वभावात्मनापदेशेन व्यवस्थितेति। वाजसनेयब्राह्मणेऽपि श्रूयते -

'भूमिरन्तरिक्षं द्यौरित्यष्टाक्षराणि, अष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हास्या एतत्स यावदेतेषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद ।। १।।

ऋचो यजूंषि सामानि इत्यष्टाक्षराणि, अष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हास्या एतत्स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ।। २।।

प्राणापानोदानव्याना इत्यष्टाक्षराणि, अष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हास्या एतत्स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेद।। ३।।

अथ एतदेव तुरीयं दर्शितं पदं परोरजा य एष तपति इति, यद्वै चतुर्थं तत्तुरीयं, दर्शितं पदमिति ददृश इव ह्येष, परोरजा इति सर्वमु ह्येष रज उपर्युपरि तपत्येवं हैव एष श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद।। ४।।

सैषा गायत्री एतस्मिंस्तुरीये दर्शिते पदे परोरजसि प्रतिष्ठिता, तद्वै तत्सत्ये प्रतिष्ठितं, चक्षुर्वै सत्यं, चक्षुर्हि वै सत्यं, तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमद्राक्षमहमश्रौषमिति य एवं ब्रूयादहमद्राक्षमिति तस्मादेव श्रद्दधाम तद्वै तत्सत्यं बले प्रतिष्ठितं, प्राणो वै बलं, तत्प्राणे प्रतिष्ठितं, तस्मादाहुर्बलं सत्यादोघीय इत्येवम्वेषा गायत्र्यध्यात्मं प्रतिष्ठिता, सा वैषा गायांस्तत्रे, प्राणा वै गायास्तांस्तत्रे यत्तस्माद्गायत्री नाम, स यामेवामूमन्वाहैषैव सा, स यस्मा अन्वाह तस्य प्राणांस्त्रायते।। ५।।

तां हैके सावित्रीमेवानुष्टुभमन्वाहुर्वागनुष्टुबे तद्वाचमनुब्रूम इति न तथा विद्याद्गायत्रीमेव सावित्रीमनुब्रूयात् यदि ह वा अप्येवं विद्बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या एकंचन पदं प्रति।। ६।।

स य इमांस्त्रील्लोंकान्पूर्णान्प्रतिगृह्णीयात् सोऽस्या एतत्प्रथमं पदमाप्नुयात्, अथ यावतीयं त्रयीविद्या यस्तावत्प्रतिगृह्णीयात् सोऽस्या एतद्द्वितीयं पदमाप्नुयात्, अथ यावदिदं प्राणि यस्तावत्प्रतिगृह्णीयात् सोऽस्या एतत्तृतीयं पदमाप्नुयात्, अथास्या एतदेव तुरीयं दर्शितं पदं परोरजा य एष तपतीति, नैव केनचनाप्यं, कुत एव तावत्प्रतिगृह्णीयात्।। ७।।

तस्या उपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पदी अपदसि नहि पद्यसे नमस्ते तुरीयाय दर्शिताय पदाय परोरजसेऽसावदो माप्रापदिति यं द्विष्टादसावस्मै कामो मा समर्द्धीयेति वा न हैवास्मै स कामः समृद्ध्यते यस्मा एवमुपतिष्ठतेऽहमदः प्रापमिति वा।। ८।।

एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वितराश्विमुवाच यन्नु हो तद्गायत्रीविदब्रूथा अथ कथं हस्तीभूतो वहसीति मुखं हास्याः सम्राट् न विदाञ्चकारेति होवाच तस्या अग्निरेव मुखं यदि ह वा अपि बह्विवाग्नावभ्यादधाति सर्वमेवैतत्संदहत्येवं हैवैवंविद्यद्यपि बह्विव पापं करोति सर्वमेतत्संप्साय शुद्धः पूतोऽजरोऽमृतः सम्भवति।। ९।। (बृ.आ.५.१४) इति।

अस्यामुपनिषदि 'भूमिरन्तरिक्षं द्यौरित्यष्टाक्षराणि' इत्यादिकस्यायं तात्पर्यार्थः - ब्रह्मात्मिकाया गायत्र्यास्त्रैलोक्यं विवर्तः परिणामो वा, अतस्तत्रानेकशक्तिकत्वात् भूम्यादिशक्तियोगित्वमस्तीति। 'ऋचो यजूंषि सामानि' इत्यादिकस्यापि, यद्यपि. त्रय्याः प्रमाणान्तरानवगतार्थप्रकाशकत्वं विद्यते। तद्गायत्र्यां ब्रह्मात्मिकायां यच्चैतन्यं तदेव विवृत्तं परिणतं वा प्रथितमिति।

'प्राणापानोदानव्यानाः' इत्यादिकस्यापि, अनन्तरपादप्रतिपादितवाच्यवाचकभावापन्नलोकत्रयीगतस्य जगत्सूत्राख्यस्य वायोः प्राणरूपस्य या चेष्टा लक्ष्यते सा ब्रह्माख्यायाः सवितुर्गायत्र्या एव शक्तिः, तद्वशेनैव तथा परिणामाद्विवर्तनाद्वा। 'एतदेव तुरीयं दर्शितं पदम्' इत्यादिना तु वेदविदा निखिललोकावलोक्यमानविरजस्कपदगततमस्कविगलिताखिलकल्लोलालोलजलनिधिनिभपरब्रह्मनिकटविवर्तरूपे सवितरि वाच्यैकभावेन व्यंवस्थिते पादत्रयस्य पर्यवसानं प्रतिपादितम्। य एव ह्यत्र शब्दानन्तरमर्थः प्रतीयते स एव हि वाक्यार्थः। तेन सवितुरेव देवतात्वमभिधेयत्वेनेह युक्तमवभासते।

एतदक्तं भवति - परमार्थतो ब्रह्म प्रणवगायत्रीशब्दाभिलाप्यतत्त्वातिरिक्तमद्वैतवादे तत्त्वं नास्ति। कल्पनया त्वेकत्रैव वाच्यवाचकादिव्यवहारः समाप्यते। तत्र पादत्रयात्मकेन कल्पितेन रूपेण वाचकत्वं, सवित्रात्मना तु वाच्यत्वम्। तुरीयपादवाचो युक्तिरपि सवितरि कल्पनया पादत्रयवत्क्रियते पारमार्थिकतत्त्वैकप्रतिपादनायेत्यलमतिरसरभसवशप्रसारितरहस्यस्वधास्वादप्रमोदानुभवविभवप्रविततविपिनगहनवेदान्तोद्यानावगाहननैपुण्यचापल्येन। अस्मिन्नवसरे स्थितमेतत् जपविनियुक्तायामप्यस्यामृचि सविता देवतेति।

अयं च पदार्थः - यत्तदिति सामान्यशब्दः, सामान्यं च सर्वभेदानुगतं ब्रह्मरूपं यथार्थम्। यथोक्तम् - 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।' (भ.गी.१७.२३) इति। एतदपि हि सामान्यवचनमेवाविचारितसिद्ध्यर्थत्वेन प्रयुज्यमानत्वात्। यत्किलाविचारितमेव गृह्यते तत्र ओमिति प्रयुज्यते। अविचारितसिद्धता चासन्देहवस्तुनि उपपद्यते। सन्देहश्च भेदनिष्ठानेककोट्यवलेहित्वात्। तस्माद्ब्रह्मण्येवाद्वैतेऽविचारितसिद्धत्वमुपपद्यते। अतो यत्तदिति ब्रह्मविधेयौ शब्दौ। य इत्यपि लिङ्गव्यत्ययः। धीशब्दश्च कर्मनामसु पठ्यते। तेन धीशब्देन ज्ञानवत्कर्माण्यप्युच्यन्ते। ते च सर्वलोका वयं चेति वयम्। त्यदादिषु परशेषः। तेषां नोऽस्माकमस्मद्युक्तानामित्यर्थः। धीमहीति 'ध्यै चिन्तायाम्', छान्दसं सम्प्रसारणम्, व्यत्ययेन लडर्थे लिङ्, ध्यायामश्चिन्तयामो भावयाम उपास्मह इत्यर्थः। एवं प्रचोदयादित्यत्रापि। अथवा प्रचोदयादिति सम्भावनायां लिङ्। भर्ग इति दीप्तिरुच्यते भासनप्रकाशादिपर्यायः। 'भा दीप्तौ' इत्यस्य औणादिको गप्रत्ययः, छान्दसौ च वर्णागमविकारौ, भाति दीप्यते प्रकाशते नित्यानन्दचैतन्यात्मकतयेति भर्गः। 'भ्राजृ दीप्तौ' इत्यस्य वा भ्राजत इति भर्गः। 'भ्रस्ज पाके' इत्यस्य वा भ्रस्जति पचत्यौषधादिकमिति भर्गः। सर्वं हि सस्यादिकं ब्रह्म आदित्यरूपेण पचति सम्पादयति। जलपवनावपि हि रविरूपौ। तथा च निरुक्तकारः - 'पर्जन्यो वायुरादित्यः शीतोष्णवर्षैरोषधीः पचन्ति।'(२.२२) इति। तथारण्यके पर्वणि युधिष्ठिरस्य धौम्येन दिवाकराराधनसमयेऽभिहितम् -

'यथोत्तरायणे सूर्यः पृथिव्या रश्मभी रसान्।
उद्धृत्यान्नमोषधीः षड्रसांश्च सृजति......।।'

दक्षिणायने चन्द्रतेजोभिरन्वितो दिवस्तेज उद्धृत्य वारिणान्नादिकं जनयतीत्युक्त्वोक्तम् - 'एवं भानुमयं ह्यन्नं लोकानां प्राणधारणम्।' (३.९) इति। 'डुभृञ् धारणपोषणयोः' इत्यस्य वा बिभर्ति धारयति पुष्णाति वा लोकानिति भर्गः। 'गल्भ धार्ष्ट्ये' इत्यस्य वा वर्णविकारविपर्ययाभ्यां, प्रगल्भते शक्नोति धार्ष्ट्यं भजते जगदुदयस्थितिविलयतत्प्रकाशनादाविति भर्गः सामर्थ्यम्। 'वृजी वर्जने' इत्यस्य वा वर्जयति अविद्यानिबन्धभेदप्रपञ्चदुःखमिति भर्गः। तदनेनाध्यात्ममधिदैवतं वा सवितुर्भर्गो रूपमुक्तम्। तथाच श्रुतिः - 'स एष वै सविता य एष तपति।' इति। 'वृञ् वरणे' छान्दसः केन्यप्रत्ययः, वरणार्हं वरेण्यं ध्येयतया ध्यानफलकमुक्तिरूपप्राप्यतया चाभिलषणीयमित्यर्थः। दीव्यति क्रीडति जगन्निर्माणावस्थापनविलापनैर्विजिगीषते व्यवहरति स्तौति चार्थवादादिभिर्विवर्तात्मना गच्छति च विवर्तसंवर्तरूपमिति देवः, तस्य। सूते सस्यादीनीति सविता, तस्य। एष पदार्थः उक्तः।

अथ वाक्यार्थः - सवितुर्देवस्य सम्बन्धि वरेण्यं भर्गो धीमहि। तद्धि यत्तद्रूपं सामान्यस्वभावब्रह्मात्मकं यथायोग्यतं कर्माणि ज्ञानानि च लोकस्य प्रकर्षेण चोदयति प्रवर्तयति प्रचोदयात् प्रवर्तयेदिति वा सम्भाव्यते। एषा तावदेका पदघटना। यद्वा तदिति षष्ठ्याः 'सुपां सुलुक्' (७.१.३९) इति लुक्। य इति यथाश्रुतमेव। तस्य देवस्य सवितुर्वरेण्यं भर्गो धीमहि। कस्य सवितुः। यः सवितास्माकं कर्माणि ज्ञानानि च प्रकर्षेण चोदयति।

**आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन।**
**महे रणाय चक्षसे।।**

गायत्रं छन्दः। अब्दैवतं सूक्तम्। त्वाष्ट्रस्त्रिशिरा अपश्यदम्बरीषो वा सिन्धुद्वीपः। मार्जनादौ विनियोगः।

मय इति सुखनाम। ऊर्गित्यन्ननाम। तेनेह सकलं भोग्यं लक्ष्यम्। हे आपः, हिर्यस्मादर्थे, यस्माद्यूयं मयोभुवः सुखस्य भावयित्र्यः स्थ भवथ, तस्मात्ता एवंविशिष्टा भवत्यः कर्मभूतान्नोऽस्मान् दधातन धारयत 'तप्तनप्तनथनाश्च' (७.१.४५) इति तनादेशः। किमर्थं दधातन। ऊर्जे अन्नाद्युपभोगाय। एवं भोगार्थमभ्यर्थ्य, अपवर्गार्थमर्थयते - महे रणाय चक्षसे। महे महते। परब्रह्मणोऽन्यस्य महत्त्वमापेक्षिकं ब्रह्मण एव तु

तात्त्विकं परममहत्त्वमिति ब्रह्मैव महच्छब्देनोच्यते। दधातनेत्यनुषङ्गः। कीदृशाय महते। रणाय रमणीयाय नित्यानन्दचैतन्यरूपाय। तथा, चक्षसे दर्शनीयाय योगिनां ध्यानजपप्रत्यक्षविषयायेत्यर्थः। तेन दर्शनयोग्याय नित्यानन्दचैतन्यस्वभावाय, महते ब्रह्मणे ब्रह्मप्राप्तये अस्मान् धारयतेति वाक्यार्थः।

**यो वः शिवतमो रसस्तस्य भाजयतेह नः।**

**उशतीरिव मातरः।**

अपामाधारभेदेन शिव-शिवतर-शिवतमा रसाः सन्ति। अथवा अपां रसः परब्रह्मरूपः शिवतमः सुखतमो मतः। स यथायोग्यं त्रैवर्णिकैरभ्यर्थ्यते - हे आपः, युष्माकं यः सुखतमो रसस्तमस्मान् भाजयत भोजयत प्रापयत वा। नः अस्माकम्, द्वितीयार्थे च व्यत्ययेन षष्ठी अंशापेक्षिणी वा। यथावयविसम्बन्धे शिवतम-रसांशभागिनोऽस्मान्विधत्तेत्यर्थः। भोगार्थिनां क्षीरादिरसाप्तयेऽभ्यर्थना, मुमुक्षूणां तु परब्रह्मस्वरूपलाभाय। किंवद्भाजयतेत्याह उशतीरिव मातरः 'वश कान्तौ' यथा मातरो बालापत्यकानां वृद्धिं कामयमाना वात्सल्यातिशयात् स्तनपानादिदानेन स्वापत्यकान् शिवतमं क्षीरादिरसं भोजयन्ति तद्वत्।।

**तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ।**

**आपो जनयथा च नः।।**

यस्येति व्यत्ययेन कर्मणि षष्ठी। हे आपः, यं रसं प्राणिषु जिन्वथ। 'जि जये'। लट्। व्यत्ययेन श्नुः, ततः शप्। बाहुलकात् क्वचिद् द्विविकरणादिता 'हुश्नुवोः सार्वधातुके' (६.४.९७) इति यणादेशः। अनेकार्था धातवः। तेनायमर्थः - जयथोप-चिनुथ वा। किमर्थम्। क्षयाय। 'क्षि निवासगत्योः' भूतानां निवासाय स्थितये गम-नाय च नानारूपकर्मोपभोगार्थचेष्टायै ज्ञानाय च। तस्मै अरङ्गमाम वः। 'गत्यर्थ-कर्मणि' (२.३.१२) इति कर्मणि चतुर्थी। तं युष्माकं सम्बन्धिनं रसं तूर्णमलं पर्याप्तं वा कृत्वा गच्छेम जीवनार्थमासादयामाशास्महे इति भोगासक्तैरद्भ्य आशास्यते।

मुमुक्ष्वभिप्रायेण त्वित्थं योजना - हे आपः, यस्य परमात्मनः क्षयाय नित्यानन्दद्वारेणानुज्ञानाय जिन्वथ यतध्वम्, तं युष्माकमेव सम्बन्धिनं परं स्वभावं वयं युष्मत्प्रसादात्पूर्णं पर्याप्तं वा कृत्वा गच्छेम जानीयाम प्राप्नुयाम च, मोक्षप्राप्तिर-

स्माकमस्त्वित्याशास्महे इत्यर्थः। आपो जनयथा च नः। यस्माद्युष्मत्प्रसादादेवमाशास्महे तस्मादस्मान् मोक्षप्राप्तियोग्यान् जनयध्वं कुरुध्वम्। महानुभावत्वादेकैव च सर्वत्र देवता ब्रह्मरूपा आदित्यरूपा वा श्रूयते। गमामेति यद्यप्याशीर्लिङो 'लिङाशिषि' (३.४.११६) इत्यार्धधातुकत्वं, तथापि 'छन्दस्युभयथा' (३.४.११७) इति सार्वधातुकत्वमप्यस्तीति शपः सम्बन्धः। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (पा.वा.) इति छत्वाभावः। एवमन्यत्रापि अनुसर्तव्यम्।

**शन्नो देवीरभिष्टय आपो भवन्तु पीतये।**

**शं य्योरभिस्रवन्तु नः।।**

अब्दैवत्या। गायत्री। सिन्धुद्वीपस्याम्बरीषस्य वाऽऽर्षम्।

दानादिगुणयुक्ता देव्यः आपः नोऽस्माकं शं भवन्तु। शमिति सुखनाम, सुखरूपाः सुखकारिण्यो वा भवन्तु, तादर्थ्ये वा ज्ञेयं सुखाय भवन्त्वित्यर्थः। किञ्च अभिष्टये शं भवन्तु। इष्यत इतीष्टिः स्वर्गादिफलाभिमुख्येनेष्टिरभीष्टिः। छान्दस एवादेशवर्णविकारः अभीष्टिरिति प्राप्ते। इष्यमाणान्नादिप्राप्तये आपोऽस्माकं भवन्तु। आपो हि अन्नादिरूपेण परिणमन्ति। तथा च ब्राह्मणम् - 'आपश्च पृथिवी चान्नम्।' इति, 'एतन्मयानि ह्यन्नानि भवन्ति।' इति च। तथा पीतये भवन्तु, पानमुपलक्षणं भुक्तपीतसुखपरिणामकारिण्यो भवन्त्वित्यर्थः। अथवा अभियजनमभीष्टिः, पीतिः सोमपानं, ज्योतिष्टोमादियागाय सोमपानाय चास्माकमापो भवन्त्वित्यर्थः। अधिष्ठात्री देवतेत्थं समभ्यर्थ्यते - शं य्योरभिस्रवन्तु नः। 'यु मिश्रणे' यौति मिश्रीभवतीति युर्व्याधिः संसारो ज्वरादिश्च। शमिति लक्षणया दुःखाभावमत्राह। आपोऽस्माकमभिस्रवन्तु कुर्वन्त्वित्यर्थः। तेनैष वाक्यार्थः - योर्व्याधेः सम्बन्धिनं दुःखाभावमापोऽस्माकं कुर्वन्त्विति। अथवा यौति शरीरादिभिर्मिश्रीभवति इति युशब्देनात्मोच्यते। योरात्मनो यत् शं नित्यसुखं, तदस्माकमभिस्रवन्तु व्यञ्जयन्त्वित्यर्थः।

**शन्न आपो धन्वन्याः शन्नः सन्त्वनूप्याः।**

**शन्नः समुद्रिया आपः शमु नः सन्तु कूप्याः।।**

अब्दैवत्या। अनुष्टुप्। सोमपुत्रस्याध्वरस्यार्षम्।

धन्वनि मरौ जङ्गले भवा धन्वन्याः। एवमनूपे जलस्राविणि देशे भवा अनूप्याः।

तथा समुद्रे भवा समुद्रियाः। कूपे भवाः कूप्याः। ताः सर्वा नोऽस्माकं सुखाय भवन्त्वित्यर्थः। शमु न इत्यत्रोकारो निपातः पादपूरणार्थः।

**आपो अस्मान्मातरः सूदयन्तु घृतेन मा घृतप्वः पुनन्तु।**
**विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूत एमि।।**

त्रिष्टुप्। ऋषिरनन्तरोक्तः। एषैव देवता च। आपो मातरः जगतां निर्मात्र्यः। अस्मानिति षष्ठ्यर्थे द्वितीया। अस्माकं रिप्रं पापं घृतेन सारेण सूदयन्तु नाशयन्तु। रिप्रनाशनेन च मां घृतेन पुनन्तु पवित्रीकुर्वन्तु अस्माकं पापं नाशयन्त्विति। एतत्कियद्वा चित्रं यतो विश्वं सर्वं जगत् त्रयगतमपि पापं प्रवहन्ति प्रवाहयन्ति अपसारितुं शक्नुवन्ति। ता हि देवीः देव्यो दानद्योतनादिगुणयुक्ताः। उदिदाभ्यः शुचिरापूत एमि इति। इदिति पादपूरणार्थे निपातः। उदिति एमीत्यनेन सम्बध्यते। आभ्य अद्भ्य आपूतः पवित्रीभूत एव शुचिरुदेमि आगच्छामि स्वर्गापवर्गमाप्नुवानीत्यर्थः।

**इदमापः प्रवहत यत्किञ्चिद्दुरितं मयि।**
**यद्वाहमभि दुद्रोह यद्वा शेप उतानृतम्।।**

ऋषिः पूर्ववत्। अनुष्टुप्। हे आपः यत्किञ्चिन्मयि दुरितं दुश्चेष्टितं पापरूपं कर्म तत्प्रवहतापसारयत। यद्वाहमभिदुद्रोह यत् द्रुग्धं हिंसितं किञ्चिन्मया, यच्चानृतमलीकं निष्कारणमेवाहं किञ्चनाभिशेप आक्रुष्टवान् तत्सर्वं प्रवहत। दुरितपदेन सामान्याभिधानेऽपि द्रोहाभिशापयोः पुनर्वचनमतिशयार्थम्।

**द्रुपदादिवेन्मुमुचानः स्विन्नः स्नात्वी मलादिव।**
**पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः।।**

अनुष्टुप्। ऋषिः कोकिलराजपुत्रः। आपो मामेनसः पापाच्छुन्धन्तु मोचयन्तु सुगतियोग्यं कुर्वन्तु। कः कस्मान्मुक्तो यथा यथेष्टविहारी भवति, द्रुपदादिवेन्मुमुचानः। द्रुपदाः पादुकाः, तथाच मन्त्रवर्णः 'कनीनकेव विद्रधे नवे द्रुपदे' (ऋ.४.३२.२३) इति। यद्वा द्रुतं पदं यत्र स द्रुपदो दस्यूपहतो देशः, द्रुमयं वा पदं द्रुपदं बन्धनकाष्ठम्। इच्छब्दः पादपूरणः। 'मुच्लृ मोचने' व्यत्ययेन लडर्थे लिट् कानच्। यथा - द्रुपदात्पादुकासभयदेशबन्धनकाष्ठलक्षणान्मुच्यमानो नरः स्वैरविहारी भवति। स्विन्नः स्नात्वी मलादिव। स्विन्नः प्रस्वेदयुक्तो निदाघादौ। 'स्नात्व्यादयश्च' (७.१.४९) इति स्नात्वी-

शब्दो निपातितः। यथा प्रस्वेदेन व्याप्तगात्रः स्नानं कृत्वा मलाद्विमुक्तो निर्वृतो भवति, यथा वा दर्भपवित्रेण पूतमाज्यं निर्मलं भवति, तितउना सक्तव इव, तथा मामापो निर्मलं निष्पापं सम्पादयन्त्वित्यर्थः।

**अव ते हेलो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः।**
**क्षयमस्मभ्यमसुर प्रचेतो राजन्नेनांसि शिश्रथः कृतानि।।**

त्रिष्टुप्। शुनःशेपस्यार्षं देवासुराणां वा। वरुणो देवता। अवेत्युपसर्गः ईमहे इत्यनेन सम्बन्धते 'व्यवहिताश्च' (१.४.८२) इति स्मृतेः। हे वरुण ते तव हेलः क्रोध-मवेमहेऽपनयामः। कैः। नमोभिः स्तोत्रैः, यज्ञेभिः पञ्चमहायज्ञादिकैः, हविर्भिः पुरो-डाशादिकैः। अतस्त्वमपसारितकोपः प्रसन्नचित्तः सन् अस्मभ्यं क्षयं निवासमन्नं वा प्रयच्छ। तथा च यान्यस्माभिरेनांसि निषिद्धसेवनादीनि कृतानि तानि शिश्रथः शिथिलीकुरु नाशयेत्यर्थः। हे असुर, हे प्रचेतः, हे राजन् इत्यामन्त्रणत्रयं वरुणविशेष-णम्। असुः प्राणः, शक्तिविशेषः, स विद्यते यस्य सोऽसुरः, हे बलवन्। प्रकृष्टं चेतो ज्ञानं मनो वा यस्य तस्य सम्बोधनं हे प्रचेतः। राजन् दीप्यमान।।

**उदुत्तमं वरुण पाशमस्मदबाधमं वि मध्यमं श्रथाय।**
**अथा वयमादित्य व्रते तवानागसो अदितये स्याम।।**

अनन्तरवत् छन्दोदेवतावगतिः। उत्तरत्राप्येवम्। शुनःशेपस्त्रिभिः पाशैर्यूपे मूलमध्यप्रान्तदेशेषु बद्धो मुक्तये वरुणस्तुतिं चकार। उदित्युपसर्गः श्रथायेत्यनेन सम्बद्ध्यते। हे वरुण उत्तमं पाशमस्मत्सकाशादुच्छ्रथाय ऊर्ध्वं शिथिलीकुरु शिथिलं कृत्वा ऊर्ध्वसारणेन प्रान्तपाशमपसारयेत्यर्थः। अवाधमम्, अधमं मूलप्रदेशस्थमव-श्रथाय शिथिलं कृत्वाधोनयनेन मूलपाशमपसारयेत्यर्थः। वि मध्यमं, मध्यमं विश्रथाय मध्यप्रदेशस्थं पाशं विविधरूपेण श्रथय शिथिलं कृत्वा मूलेन प्रान्तेन मध्यमं पाशं यूपान्निसारयेत्यर्थः। अथ पाशत्रयविमुक्त्यनन्तरं हे आदित्य अदितेः पुत्र तव व्रते कर्मणि वर्तमाना वयमनागसो निष्पापाः स्याम। किमर्थम्। अदितये अदैन्याय दैन्यस्य पापनिबन्धनत्वात्।

**तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः।**
**अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः।।**

हे वरुण यद्यजमानो हविर्भिः पुरोडाशसोमप्रभृतिभिराशास्ते तदहं त्वा यामि त्वां याचे। किं कुर्वाणः। ब्रह्मणा मन्त्ररूपेण वेदेन वन्दमानः स्तुवन्। तदिह याचनं स्तवनं च बोधि बुध्यस्व। अहेळमानः 'हेड्ट अनादरे' अनादरमकुर्वन्। शंसनं शंसः उरुभिर्बहुभिः शंसो यस्य स उरुशंसतस्य सम्बोधनं हे उरुशंश बहुस्तुत। मा न आयुः प्रमोषीः, अस्माकमायुर्विलोपं मा कार्षीः।।

**उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं श्रथ।**
**अवाधमानि जीवसे।।**

वारुणी। गायत्री। ऋषिः शुनःशेप एव। पाशविमोचनमभ्यर्थ्याजरामरण-मभ्यर्थयते। उदित्युपसर्गो मुमुग्धीत्यनेन सम्बध्यते। अस्माकमुत्तमं पाशमुन्मुमुग्धि ऊर्ध्वं मोचय। वि पाशं मध्यमं श्रथ, मध्यमं पाशं विश्रथ। अधमानि च बन्धनानि अवश्रथ अधोभागे विमुच्यापसारय। किमर्थम्। 'जीवसे जीवप्राणधारणे' जीवनाय पाशमोचनं कृत्वा बह्वस्मभ्यमायुर्देहि इत्यर्थः। अथवा जीवनमिह कैवल्यम्। बन्धनानि देवर्षिपितॄणामृणानि उत्तमाधममध्यमानि यथासंख्यं, तद्विमोचनेन मोक्षः प्रार्थ्यते, यथोक्तम् - 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।' (मनु.६.३५) इति।

**हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः।**
**या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु।।**

अब्दैवत्या। त्रिष्टुप्। हिरण्यस्येव शुद्धो निर्मलो वर्णो यासां ता हिरण्यवर्णाः। शुचयः पवित्रभूताः। अत एव पावकाः पवित्रताया आपादिकाः। यासु कश्यपप्रभृतय ऋषयो जाता इन्द्रप्रभृतयश्च देवाः। का गणनान्येषाम्। तथाच मनुः -

'अप एव ससर्जादौ तासु वीर्यमथासृजत्।
तदण्डमभवद्धैमं सहस्रार्कसमुद्युति।।' (मनु.१.९) इत्यादि।

याश्च विविधरूपा गगनसागरादिव्यवस्थिता अपि अग्निं वैद्युतवडवामुखादिकं गर्भं दधिरे। तथा च मन्त्रवर्णः - 'आपो ह यन्महतीर्विश्वमायन्गर्भं दधाना जनय-न्तीरग्निम्।' (क.शा.४०.१) इति। ता आपो नोऽस्माकं शंस्योनाः सुखतमा भवन्तु।

**यासां देवा दिवि कृण्वन्ति भक्ष्यं या अन्तरिक्षे बहुधा भवन्ति।**
**या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु।**

यासामपां त्रैवर्णिकदत्तानां देवाः पितृप्रभृतयो दिवि स्वर्गे भक्षणं कुर्वन्ति, भक्षितेन बलेन हविष्यरूपेणापि परिणतानां देवोपयोगित्वं प्रतीयते। तथाच श्रुतिः - 'ततः प्रजनं देवा उपजीवन्ति।' इति। तत एव मनुष्येभ्य एवोपजीवन्ति नतु विद्यमान-मपि स्वयं गृह्णन्ति मेघादावित्यर्थः। याश्चान्तरिक्षे बहुप्रकारा हिमकरकपानीयरूपा भवन्ति। शेषं व्याख्यातम्।

**यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम्।**

**या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु।।**

यासामपां मध्ये राजमानो वरुणो याति। किं कुर्वन् जनानां सत्यानृते धर्माधर्मौ पश्यन्।

**शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे।**

**मधुश्चुतः शुचयो याः पावकास्ता न आपः शंस्योना भवन्तु।।**

गतार्थम्।

**हिरण्यवर्णाः शुचयः पावका विचक्रमुर्हित्वावद्यमापः।**

**शतं पवित्रा विततान्यासां ताभिर्मा देवः सविता पुनातु।।**

हिरण्यवर्णाः, शुद्धाः, शुचित्वात्पवित्रत्वापादिकाः, आपः अवद्यमवदानार्हं खण्डनयोग्यं पापं त्यक्त्वा विचक्रमुः विविधं क्रान्ता भूर्लोकमागताः। शतग्रहण-मतिबहुत्वोपलक्षणम्। पवित्रा इति लिङ्गव्यत्ययः। अतिविततानि सुभूयांसि च पवित्रीकरणानि रूपाणि आसां यस्मात्तस्मादासामधिपतिः सविता ताभिरद्भिर्मां पुनातु।

एता हिरण्यवर्णाः समाख्याता ऋचः। इत ऊर्ध्वं पावमानीः समाख्याताः षडृचो भविष्यन्ति। तासामृषिः पवमानः। सोमो देवता अर्धाश्रिताधिष्ठातृरूपेण। अनुष्टुप् छन्दः -

**यः पावमानीरध्येति ऋषिभिः सम्भृतं रसम्।**

**सर्वं स पूतमश्नाति स्वदितं मातरिश्वना।।**

**यः पावमानीरध्येति पवित्रीकरणीरपाम्।**

**तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम्।।**

पवित्रीकरणीरपां वाचिका इति कृत्वा ऋच एव पावमान्यः। ऋषिभिर्ज्ञानिभिरेवात्र सम्भृतो ढौकितो यो रसस्तत्स्वभावाः पावमानीः ऋचो यः पठति, स सर्वमेवान्नादिरसमुत्तममश्नाति भुङ्क्ते स्वभावपवित्रेण वायुनाप्यास्वादितं शोधितं पावितम्। तथा सरस्वती वाक् दुहे दुग्धे पूरयति क्षीरं शुद्धत्वादुपचाराद्धर्मम्। सर्पिरिति स्निग्ध त्वसामान्यात् स्वर्गादिकं कामम्। मध्विति नित्यानन्दात्मकमपवर्गं मधुरैकरसत्वात्। उदकमिति क्षीरादिकमुदकप्रभवमित्यर्थः, इति केचिदन्ये तु उदकशब्देन सन्तानभावात्मको दुःखाभावो लक्ष्यते इत्याहुः।

**पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः।**
**ऋषिभिः सम्भृतो रसो ब्राह्मणेष्वमृतं हि तत्।।**

पावमान्यः पावयित्र्यः। स्वस्त्ययनीः स्वस्ति अविनाशः अविनाशकारिण्यः आयुष्प्रदा इत्यर्थः। सुदुघाः सुदोहनाः। घृतश्चुतो घृतस्राविण्यः। ऋषिभिर्मन्त्रसारवेदिभिरयं सम्भृत एवात्र राशीकृतो रसो या एताः पावमान्यः - यतो ब्राह्मणेषु तदमृतम्, अमरणकारी आयुष्प्रदो भोगासक्तानां, मुमुक्षूणां तु मोक्षदोऽयं रस इत्यर्थः।

**पावमानीः स्वस्त्ययनीर्याभिर्गच्छति नन्दनम्।**
**पुण्यांश्च भक्ष्यान्भक्षयत्यमृतत्वं च गच्छति।।**

तथा पावमान्यः स्वस्त्ययन्यः, याभिरधीताभिर्नरो नन्दनं वनं देवोद्यानं गच्छति प्राप्नोति, तथा भक्ष्यांश्च पुण्यफलभूतान् स्वर्गादिकान् भुङ्क्ते अमृतत्वं च मोक्षलक्षणं लभते।

**पावमानीर्दिशन्तु न इमं लोकमथो अमुम्।**
**कामान् समर्धयन्तु नो देवैर्देवीः समाहृताः।।**

एवं चैताः पावमान्योऽस्माकमिमं पृथिवीलोकममुं च स्वर्गलोकं दिशन्तु दर्शयन्तु, कामांश्च काम्यमानान् सर्वानर्थानस्माकं सम्यग्वर्धयन्तु देवैर्द्योतनैः ऋषिभिः समाहृता एकीकृताः सत्यः।

**येन देवाः पवित्रेण आत्मानं पुनते सदा।**
**तेन सहस्रधारेण पावमान्यः पुनन्तु नः।।**

येन पवित्रीकरणेन उदकविशेषात्मना देवा आत्मानं पवित्रीकुर्वन्ति, तेनानन्तधारेणास्मान् पावमान्यः पुनन्तु।

**मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत।**
**अथो यमस्य पड्वीशात्सर्वस्माद्देवकिल्बिषात्।।**

आथर्वणस्य भिषज आर्षम्। अनुष्टुप्। आप उच्यन्ते ऋषिणा। शपथ्याच्छपथप्रभवात् पड्वीशात्पाशात् किल्बिषाच्च। तथा वरुण्याद्वरुणपाशनिमित्तात् येन पापेन सता वरुणः पाशैर्बध्नाति तस्मात् किल्बिषात् तन्निमित्ताच्च पाशात्। उतेति समुच्चये। तथा यमस्य च सम्बन्धिनः पाशात्पापाच्चापो विमुञ्चन्तु माम्। येन पापेन सता यमः प्रभवति तद्यमस्य पाशः। किञ्च सर्वस्माद्देवकिल्बिषात्, अवश्यकर्तव्यं यद्देवानां यागहोमादिकं तदकरणाद्यत्पापमुपजायते तद्देवकिल्बिषम्, तस्मात्समग्रात्पापादापो मां मुञ्चन्तु।

**यज्जाग्रद्यत्सुप्तः पापमभिजगाम।**
**सर्वस्मान्मा तस्मादेनसः प्रमुञ्चतु।।**

गायत्री। आप उच्यन्ते। यत्पापं जाग्रदहमभिजगाम आभिमुख्येन कृत्वा कृतवान्, यच्च सुप्तः सुप्त इव सुप्तः अज्ञानात् तस्मात्सर्वस्मादेनसो मामापः प्रमुञ्चतु विमुञ्चन्त्वित्यर्थः।

**तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः।**
**दिवीव चक्षुराततम्।।**

विष्णोर्व्यापकस्य परमं ब्रह्मरूपं पदं मोक्षलक्षणं प्राप्नुयामेत्याशास्महे।

संमार्जनमन्त्रा व्याख्याताः। संमार्जनादनन्तरं 'ऋतं च सत्यम्' इत्यादिकमघमर्षणसूक्तं जपेत्, सृष्टिस्थितिसंहारकारिणं सूक्ताभिधेयं प्रजापतिं ध्यायन्। सूक्ताभिधेयाश्च सृष्टिस्थितिप्रलयाः प्रजापत्यधीना इत्येतदुपनिषत्सु तत्र तत्र प्रतिपादितम्। प्रजापतिर्हि अनेकशक्तिखचितः सङ्कल्पमात्रेण त्रैलोक्यं स्वतनोरेव सृजति, संहारसमये च स्वात्मन्येव पुनः शक्तिरूपेणोपसंहरति। तथा च श्रुतिः - 'हिरण्यगर्भः समवर्तताग्रे।' (ऋ.१०.१२१.१) इति।

'असद्वा इदमग्र आसीत्ततो वै सदजायत। तदात्मानं स्वयमकुरुत।' (तै.आ.८.७.१.) इति।

ब्राह्मणमपि -

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये।। (श्वेत.६.१८)
एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी।।' (मु.२.१.३) इति।

तदेतत्सृष्टिकर्तृकत्वापन्नप्रजापतिप्रकाशकं सूक्तं व्याचक्षते।

**ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत।**
**ततो रात्रिरजायत ततः समुद्रो अर्णवः।।**
**समुद्रादर्णवादधि संवत्सरो अजायत।**
**अहोरात्राणि विदधद्विश्वस्य मिषतो वशी।।**
**सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।**
**दिवं च पृथिवीं चान्तरिक्षमथो स्वः।।**

ऋषिरघमर्षणः। अनुष्टुप् छन्दः। प्रजापतिर्देवता जगत्स्रष्टृत्वेन सूक्तजपसमये ध्यातव्यः। तपो ज्ञानं 'सम्यग्ज्ञानमयं तपः' इति श्रुतेः। तस्मादभीद्धात्स्रष्टव्यपदार्थसांमुख्येन दीप्ताद्वर्तमानात् ऋतं च सत्यं चाजायत। जगत्सूत्रभूतः प्राणः सत्यं 'प्राणो वै सत्यम्' इति श्रुतेः। ऋतमपि प्राणस्वरूपमेव गतिमत्त्वात्। ऋतमिति हि गत्यर्थस्यार्ते रूपम्। मनोऽपि ऋतं सत्यं च सत्यसङ्कल्पत्वात् विद्युद्वत्सुवेगगामित्वाच्च। सङ्कल्पमात्रात् मनःसहितः प्राणः प्रजापतिना निर्मित इत्यर्थः। ततः प्राणोत्पत्त्यनन्तरं तत एव सङ्कल्पमात्रात्प्राजापत्याद्रात्रिरजायत। अञ्जनपुञ्जवर्णसाम्याद्रात्रिशब्द आकाशे वर्तते। प्राणोत्पत्त्यनन्तरं तत्र तत्राकाशोत्पत्तिश्रुतिरुपनिषत्सु। तत आकाशोत्पत्त्यनन्तरं समुद्रो अर्णवः जलमर्णवरूपं गतियुक्तं पोप्लूयमानं जलं जातमित्यर्थः। समुद्रग्रहणं भूतत्रयस्यान्यस्याप्युत्पत्तिं लक्षयति। तथाच श्रुतिः - 'आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी' (तै.उ.२.१) इति। क्रमानियमं च तत्र तत्र दर्शयन्नृषिरविद्यानिर्मितत्वेन भेदविवर्तस्याद्वैते क्रमस्यापारमार्थिकतामाह - समुद्रादर्णवात् संवत्सरः सम्राट् 'अधि-

रीश्वरे' (१.४.१७) 'यस्मादधिकम्' (२.३.९) इति समुद्रशब्दात्सप्तम्यां जातायां व्यत्ययेन पञ्चमी। समुद्रग्रहणं च भूतपञ्चकोपलक्षणम्। अधिभूतेषु सम्राट् जातः भूतस्वामी भूत इत्यर्थः। किं कुर्वाणः सम्राडजायत। अहोरात्राणि तत्परिच्छेदकारिणौ सूर्याचन्द्रमसौ विदधत् जनयन्। कथं विराड् जनयति, विनियुङ्क्ते चादित्यादिकं कार्यशेषेषु इति चेत् तत्राह यतोऽसौ मिषतो निमेषोन्मेषवतो विश्वस्य समस्तभुवनस्य धाता निर्माताऽतो विदधाति, तस्य च वशीति कृत्वा यथायोग्यत्वं युङ्क्ते। कथं विदधत्। यथापूर्वं पूर्वकल्पानतिक्रमेण अनादिरेतदीयः सर्गप्रलय इत्यर्थः। अथवा यथापूर्वं पूर्वकर्मानुसारेण, तेन न मुक्तान् शरीरादिना योजयति। यद्वा यथापूर्वं यथाक्रमं, न सर्वान् तुल्यान् निर्मितवान् उपभोगाभावप्रसङ्गात् किं तर्हि उच्चावचान् अकल्पयत् कल्पितवान्। अथवा पृथिवीमन्तरिक्षं च स्वश्च स्वर्गमिति लोकत्रयं यथाक्रममकल्पयदिति सम्बन्धः। पृथिव्या उपर्यन्तरिक्षं नक्षत्रादिलोकं, ततः पञ्चविधं पूर्वप्रदर्शितं स्वर्गमिति। किं तस्य जगन्निर्माणे प्रयोजनमिति चेदत आह दिवमिति, 'दिवु क्रीडायाम्' क्रीडयेत्यर्थः।

एवं 'संमार्जनानन्तरभूतमृतं च सत्यं चेत्येतद्ध्यानयुक्त आवर्तयेत्' इति काठकश्रुतेः अघमर्षणसूक्तजपः कर्तव्यः। तदनन्तरं प्राणसंयमः। तथाच याज्ञवल्क्येन - 'मार्जनं प्राणसंयमः।' (१.२२) इति मार्जनोत्तरकालेऽपि प्राणसंयमश्चोदितः। किञ्च स्नानादावप्यस्योपयोगोऽस्ति। तथा च वसिष्ठेन प्रायश्चित्तार्थत्वमस्य पापक्षयहेतुत्वेनोक्तम् -

'आवर्तयेत्सदा युक्तः प्राणायामान्पुनः पुनः।
आलोमाग्रान्नखाग्राच्च तपस्तप्स्यन्ननुत्तमम्।।
प्राणायामान्धारयेत्त्रीन्यथाशास्त्रमतन्द्रितः।
अहोरात्रकृतं पापं तत्क्षणादेव नश्यति।।' इति।

तथा च -

'अहोरात्रं च याञ्जन्तून्हिनस्त्यज्ञानतो द्विजः।
ततः स्नात्वा विशुद्ध्यर्थं प्राणायामान् षडाचरेत्।।' इति।

योगशास्त्रेषूपनिषत्सु च प्राणायामैरेव पवनजये सति भूतेन्द्रियजयः प्राधान्येन प्रतिपादितः। तेनास्य प्रयत्नतरेण लक्षणमभिधेयम्। तच्च तथैव याज्ञवल्क्यादिभिः प्रतिपादितम्।

'गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम्।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः।।' (या.१.२३) इति।

वसिष्ठोऽपि -

'व्याहृतिप्रणवैर्युक्तां गायत्रीं शिरसा सह।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते।।' इति।

तत्र कुम्भकेनैव प्राणापानवृत्तेर्निरोधमिच्छन्ति सन्ध्योपासनप्रायश्चित्तादिषु, समाधौ कुम्भकेन रेचकेन च। कुम्भको बाह्यवायोराचमने क्रियमाणो उदरस्य कुम्भवत्पूरणाद्भवति, रेचकत्स्वान्तरवायोर्निःसारणादुदरस्य रिक्तताऽऽपादनात्। तत्रायं क्रमः - ओं भूः ओं भुवः ओं सुवः ओं महः। केचित्तु तकारान्तं महच्छब्दं पठन्ति ओं महदिति। तथाच पातञ्जलभाष्ये -

'ब्राह्मस्त्रिभूमिको लोकः प्राजापत्यस्ततो महान्।
माहेन्द्रश्च स्वरित्युक्तो दिवि तारा भुवि प्रजाः।।' (३.२६) इति।

ओं जनः ओं तपः ओं सत्यम्। ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ओं आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्।

एतद्यावता कालेन त्रिः पठ्यते तावन्तं कालं प्राणनिरोधः प्राणायामः सोऽभ्यसनीयः। एतं च प्राणायाममुपक्रमेऽपि सन्ध्योपासनस्येच्छन्ति। इयांस्तु विशेषः- 'त्रयः प्राणायामाः पञ्चदशमात्रापरिणामाः।' इत्ययं गौतमोक्तः प्रथममनुष्ठेयः, पश्चादयं गौतमीयव्यतिरेकेणात्राधिकारात्। यथोक्तम् - 'प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति।'

एवमेव चास्माकं वृद्धेभ्य आगमः - उपक्रम इव सन्ध्योपासनस्य वयमुपनयन-काल एव द्विविधमपि प्राणायामं यत्नेनानुष्ठापिता वेदार्थविदुत्तमैः पितृपादैः। तत्र व्याहृतीनां सावित्र्याश्चार्थो व्याख्यातो ब्रह्मरूपः। लोकसप्तकमपि हि ब्रह्मणो रूपमोंकार-सावित्रीवाच्यस्योक्तम्। आपो ज्योतिरित्यस्यापि सर्वाङ्गोपरिस्थितत्वात् प्राधान्याच्च साक्षाद्ब्रह्मशब्दवत्तया शिरःशब्दवाच्यस्य ब्रह्मरूपमेवाभिधेयं ब्रह्माद्वैते ज्ञानकाण्डार्थं, द्वैतेऽपि कर्मकाण्डार्थम्। तत्र ब्रह्मेति विशेष्यपदम्। आप इत्यादीनि चत्वारि विशेषण-पदानि। 'आप्लृ व्याप्तौ' इत्यस्यापः, व्यापकः सर्वकार्यानुबन्धित्वादतो ब्रह्मण एव व्यापकत्वमुक्तम्। ज्योतिरिति ज्ञानप्रकाशकत्वमुक्तम्। रस इति सारत्वम्। अमृत-

मिति नित्यानन्दात्मकत्वं परमविनाशित्वं च। भूर्भुवःस्वरिति लोकत्रयात्मकत्वम्। अस्य च शिरसः प्रभावोऽप्युक्तः -

'षोडशाक्षरकं ब्रह्म गायत्र्यास्तु शिरः स्मृतम्।
सकृदावर्तयन्विप्रः संसारादाशु मुच्यते।।'

छन्दः शिरसो नास्ति यजुष्ट्वात्। ऋषिस्तु प्रजापतिः। देवतास्त्वग्निब्रह्मवायु-सूर्याः। तथाच पाराशर्यः -

'गायत्र्यास्तु शिरः प्रोक्तमापो ज्योती रसोऽमृतम्।
तत्र प्रजापतेरार्षं छन्दोहीनं यजुः स्मृतम्।।
ब्रह्माग्निवायुसूर्याश्च देवतास्तस्य कीर्तिताः।।' इति।

प्राणायामादनन्तरं समन्त्रकमाचमनं कुर्यात्। यथाह शङ्खः -

'एवं संमार्जनं कृत्वा प्रणायामांश्च धर्मवित्।
उपस्पृशेत्ततः पश्चान्मन्त्रेणानेन सन्ध्ययोः।।
आपश्चरसि भूतेषु गुहायां सर्वमूर्तिषु।
त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम्।।' इति।

ब्रह्मोच्यते तद्रूपा अपः स्तोतुम्। त्वमेव सर्वभूतेषु चरसि। तथाहि त्वमे-वापः। त्वमेव गुहायां हृदयाकाशे मन इत्यर्थः। सर्वेन्द्रियोपलक्षणं चैतत्। सर्वासु च मूर्तिषु ये स्थिता जीवात्मानस्तेऽपि त्वमेव। त्वं यज्ञस्त्वं वषट्कारस्त्वमेव साध्य-साधकरूप इत्यर्थः। त्वं ज्योतिस्त्वं रसत्त्वममृतं, यश्च त्वं ता आप इति। द्वितीय-मब्ग्रहणमाचम्यमानास्वप्सु ब्रह्मरूपोपसंहारार्थम्। गौतमोऽप्याह - 'अहश्च माऽऽदि-त्यश्च पुनातु' इति सायम्। 'रात्रिश्च मा चन्द्रमाश्च पुनातु' इति प्रातः।

आचामेदिति शेषः। प्राणायामादनन्तरं - 'सूर्यस्य चाप्युपस्थानं ........।' इति दर्शनात् -

'उदु त्यं जातवेदसं चित्रं देवेत्यृचौ पठन्।
द्विजः प्रदद्याद्विधिवद्भास्कराय जलाञ्जलिम्।।' इति वचनात्
'उदु त्यं जातवेदसमृषिः प्रस्कण्व उच्यते।
गायत्रं छन्द आख्यातं देवता सूर्य उच्यते।।

चित्रन्देवेत्यत्र त्रितः कुत्सो वा कीर्त्यते ऋषिः।
त्रिष्टुप् छन्दो दैवतं च सूर्योऽस्याः परिकीर्तितः।।
अतिरात्रेऽश्विने शस्त्रे नियोगोऽस्यास्तथा जपे।' इति स्मरणात्।

'उदु त्यं' 'चित्रन्देवानाम्' इति द्वाभ्यामादित्यमुपतिष्ठेत जलाञ्जलिमादाय।

**उदु त्यं जातवेदसं देवं वहन्ति केतवः।**
**दृशे विश्वाय सूर्यम्।।**

त्यद् शब्दः सर्वनाम। उशब्दो निपातः पादपूरणार्थः। उदित्युपसर्गो वहन्तीत्यनेन सम्बध्यते। त्यं तं, जातवेदसं जातप्रज्ञानं जातधनं वा, देवं दानादिगुणयुक्तं, सूर्यं विक्रान्तिमन्तं केतवो रश्मयोऽश्वा वा वहन्ति। किमर्थं वहन्ति। दृशे दर्शनाय। कस्य। विश्वाय षष्ठ्यर्थे चतुर्थी विश्वस्य सर्वस्य जगत् त्रयस्य।

**चित्रन्देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।**
**आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च।।**

आदित्यो ब्रह्म। स चात्र परापररूपेण स्थितः स्तूयते। तत्रापररूपेण तावदुदयकालादारभ्य स्तुतिमाह। चित्रमिति क्रियाविशेषणम्। यश्चित्रमाश्चर्यभूतमुदगादुदगमत् शार्वरं तमोऽपहत्य अग्न्यादितेजश्चापहृत्य, देवानां च द्योतमानानां रश्मीनामनीकं मुखमादाय समूहं वा। कः। सूर्यः। कीदृशः। जगतो जङ्गमस्य चक्षुः। किंवा सामान्येनोच्यते, मित्रावरुणाग्निप्रभृतीनामपि नेत्रम्। यश्च द्यावापृथिव्यौ, आ प्रा आ समन्तात् अप्राः पूरितवान् अन्तरिक्षं च। पररूपेण स्तौति - आत्मा जगतो जङ्गमस्य, तस्थुषः स्थावरस्य। सूर्याद्वैतमनेनोक्तं ब्रह्मादित्यरूपेण भावनीयम्। तथाच श्रुतिः - 'ये वै तमादित्यं पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिः स ब्रह्मा।' इति।

'उपतिष्ठेत चादित्यं मन्त्रैस्तद्दैवतैर्द्विजः।' इति वचनादन्यैरप्यादित्यदेवताकैर्मन्त्रैरादित्यः स्तोतव्य इति प्रयुज्यमाना अन्येऽपि व्याख्यायन्ते।

**हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्।**
**नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्।।**

छन्दो जगती। ऋषिर्वामदेवः। परमात्मरूपेण स्तूयमानः सूर्यो देवता। हन्ति ध्वान्तं, गच्छति चाध्वानमधिदैवरूपेण वाविद्यामिति हंसः। तथाचोक्तं -

'हंसो नारायणः प्रोक्तो हंस आत्मेति निश्चितः।
स एवात्मा स भगवान्विष्णुस्तद्ब्रह्म सर्वगम्।।' इति।

शुचयो दीप्तयो रश्मयः, स्वर्गो वा शुचिः, नित्यज्ञानमुखं वा तत्र सीदति शुचिषत्। तथा वासयति जगत् वृष्ट्यादिद्वारेण विवर्तपरिणतिमुखेन अध्यात्मरूपेणेति वसुरादित्यः। अन्तरिक्षे सीदति वाय्वादिरूपेणेत्यन्तरिक्षसत्, अध्यात्मरूपेण वा सर्वजीवात्मनामन्तरिक्षे हृदयाकाश अन्तर्यामिरूपेण सीदतीत्यन्तरिक्षसत्। होतेति ह्वेञो रूपम्। स च प्राणिनां रात्रौ प्रसुप्तानां व्यापारसिद्धिषु सांमुख्यापादनादाहूते-र्वाधिदैवरूपेणाध्यात्मरूपेण आह्वयति स्पर्धयते जुहोतीति वा अविद्यामधिक्षिपतीत्यर्थः। वेद्यां सीदत्यग्निरूपेणेति - वेदिषत्। अध्यात्मरूपेणापि 'विद-ज्ञाने' वेद्यां नित्यज्ञानरूपायां सीदतीति वेदिषत्, अतिथिः सन् दुरोणे गृहे जीवात्मनिवासे सर्वशरीरे वा सीदति। यद्वा द्रोणकलशे सोमरसाधानेऽग्र्यादिदेवताभावेनेत्यतिथिर्दुरोणसत्। अथच ब्रह्माण्ड-स्थस्य सर्वशरीरगस्य चानित्यत्वादतिथिः, अतिथिरप्यनित्यः यतो गृहाद्गृहान्तरं याति। नृषु मनुष्येषु अन्तर्यामित्वेन प्राणादिभावेन च सीदतीति नृषत्। नृग्रहणं चेतनोपलक्षणार्थम्। अधिदेवेऽपि नृषु सर्वचेतनेषु सीदति प्रकाशकत्वेन नयन-सहकारितयेति नृषत्। वरे द्युस्थाने सीदत्यधिदैवात्मनेति वरसत्। तथाच ब्राह्मणम् - 'वरं वा एतत्सदनं यस्मिन्नेष आसन्नस्तपति।' इति। अथवा वरेषूत्कृष्टेषु स्थानेषु नन्दनवनमहदादिलोकप्रभृतिषु सीदति क्रीडति इन्द्रादिभावेनेति वरसत्। अध्यात्मपक्षे ऋते सत्ये नित्यचैतन्यात्मके तिष्ठतीति ऋतसत्। अधिदैवपक्षे वा ऋते यज्ञे सौर्यादिके सीदति देवतात्वेनेत्यृतसत्। व्योम्न्यन्तरिक्षे हृदयाकाशे वा सीदतीति व्योमसत्। स्तुतौ पौनरुक्त्ये न दोषः। यथोक्तं -

'वक्ता हर्षभयादिभिराकृष्टमनास्तथा स्तुवन्निन्दन्।
यत्पदमसकृद् ब्रूयात्तत्पुनरुक्तं न दोषाय।।' इति।

इहापि वेदात्मा वक्ता। तथाच श्रुतिः - 'यं सर्वे वेदा न विदुर्यस्य सर्वे वेदाः शरीरं सोऽन्तर्याम्यमृतः।' इति। अथवा पौनरुक्त्योच्चारणेनेदं बोधयति यदुत सर्वः पदग्रामो ब्रह्माभिधायितयैवं प्राय इति। अप्सु जायते इत्यब्जाः - 'अप एव ससर्जादौ .....।' (मनु.१.८) इत्यादिमानवशास्त्रानुसारेणादित्योऽब्जाः। अथवा समुद्रतीरस्थ-

दृष्ट्या अब्जाः। तथाच श्रुतिः - 'अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति।' इति। वैद्युताग्निरूपो बडबाग्न्यात्मकः सूर्यस्य स्वभावोऽब्जाः। गवि स्वर्गे इन्द्रादिरूपेण, अन्तरिक्षे वा भानुस्वभावेन, पृथिव्यां वा अन्नौषध्यादिरूपेण जायत इति गोजाः। ऋते सत्यज्ञाने जायते तिष्ठतीति ऋतजाः। तथा च श्रुतिः - 'सत्यं ज्ञानमनन्तं ब्रह्म।' (तै.उ.२.१) इति। एवमद्रौ मेरौ जायते उदयसमये उपलभ्यते इत्यद्रिजाः। किंवा बहूच्यते ऋतमादित्य एव ऋतं सर्वगतं परब्रह्मरूपं यत् स सूर्य इति। तत्परमं ब्रह्म प्राप्नुयामेति वाक्यं पूरयितव्यम्। बृहद्व्यापकम्।

**उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम्।**
**देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्।।**

अनुष्टुप् छन्दः। सूर्यो देवता। उदित्युपसर्गः अगन्मेत्यनेन सम्बध्यते। वयमुत्तमं ब्रह्मलक्षणं ज्योतिरुदगन्म। आशीर्लिङोऽर्थे व्यत्ययेन लुङ् उदगन्मेत्याशास्महे, ऊर्ध्वं गम्यास्म इत्यर्थः। किं कुर्वन्तः। दीपादिज्योतिरन्तरापेक्षया उत्तरमुत्कृष्टमुपरिवर्ति वा ज्योतिः सूर्यं पश्यन्तो ध्यायन्तः अनेन सूर्यध्यानेनेत्यर्थः। अन्यच्च कीदृशं सूर्यं पश्यन्तः। तमसस्परि तमस उपरि वर्तमानं तमसोऽन्धकारस्याविद्यारूपस्य च नाशकमित्यर्थः। अन्यच्च कीदृशम्। देवं दानादिगुणयुक्तं द्योतमानं वा। तथा देवत्रा देवानां त्रिदशब्राह्मणलक्षणानां त्राणात्। 'त्रैङ्पालने' 'आतोऽनुपसर्गे कः' (३.२.३) आकारो वर्णागमः 'सुपां सुलुक्' (७.१.३९) इति द्वितीयालुक्। नतु देव एव देवत्रा, 'देवपुरुषमनुष्येभ्यस्त्रा' (५.४.५६) इति तद्धितस्त्राप्रत्ययः देवमित्यनेनैव गतार्थत्वात्।

**मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसि।**
**द्युम्नं चित्रश्रवस्तमम्।।**

गायत्री।

**मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम्।**
**मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवद्विधेम।।**

इयं त्रिष्टुप्। द्वयोरपि मित्रादित्यौ देवते। अनयोः क्रमेण भाष्यम्। मित्रस्यादित्यस्याकारणस्निग्धस्य श्रवो माहात्म्यं ध्यायामेत्यध्याहारः। श्रूयत इति श्रवः उपनिषत्प्रसिद्धं परब्रह्मरूपमित्यर्थः। कीदृशं श्रवः। द्युम्नं द्योतमानम्। तथा सानसि समुच्छ्रितम्,

चित्रश्रवस्तमं चित्रतममाश्चर्यतमं श्रवस्तमं च प्रसिद्धतमं सर्वजीवात्मभिरन्तर्यामितयाधिदैवरूपेण चेत्यमानत्वात्। सर्वोऽपि हि मन्यते - केनाप्यहं प्रेरितः कर्म करोमीति। यथोक्तं -

'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेच्छ्वभ्रं वा स्वर्गमेव वा।।' इति।

कीदृशस्य। चर्षणीधृतः चर्षणयो मनुष्यास्तान्धारयति वृष्ट्यादिद्वारेण अधिदैवरूपेण, अध्यात्मरूपेण तु चैतन्यविवर्तपरिणामाद्यात्मना।

अथोत्तरा - मित्रो जनानीति। जनानीति लिङ्गव्यत्ययः, जायन्त इति जनास्तानातयति विस्तारयति क्रियासु प्रवर्तयतीत्यर्थः। किं कुर्वाणः। न परान् प्रकाशयन्नेव क्रियाः कारयति यावता वेदादिरूपेण ब्रुवाणोऽपि विदधत् निषेधंश्च। मित्रः पृथिवीं द्यां च दाधार व्यत्ययेन लिट् धारयते वृष्ट्यादिद्वारेण। तथा कृष्टीर्मनुष्यान् मित्र एवानिमिषमनिमीलितं कृत्वा अभिचष्टे आभिमुख्येन पश्यति - कः सुकृतं करोति दुष्कृतं वा यथोक्तमस्माभिर्विष्णुस्तोत्रे - 'रविरपि सकलानां कर्मणां साक्षिभूतः।' इत्यादि। किञ्च न परं वयं मित्रं ध्यायामो यावतास्मै मित्राय सूर्यायाग्निरूपाय वयं सायं प्रातश्च प्रतिदिनं हव्यं हवनीयं घृतसहितं हविर्विधेम दद्म इत्यर्थः।

इत ऊर्ध्वमुदकतर्पणमृषिविहितमवश्यं कर्तव्यम्। तत् मतभेदेन प्रदर्श्यते। तत्र बौधायनस्तावदाह -

'अतोऽनन्तरं देवतास्तर्पयति। अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः सर्प इत्येतानि प्राग्द्वाराणि सदैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि वसूंश्च तर्पयामि।

तपनोऽर्यमा भगः सविता त्वष्टा वायुरिन्द्राग्नी इत्येतानि दक्षिणद्वाराणि सदैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि रुद्रांश्च तर्पयामि।

मित्र इन्द्रो निर्ऋतिः पूषा आपो विश्वेदेवा ब्रह्मा विष्णुरित्येतानि प्रत्यग्द्वाराणि सदैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि आदित्यांश्च तर्पयामि।

वसवो वरुणोऽजैकपादहिर्बुध्न्यः पूषाश्विनौ यम इत्येतानि उदग्द्वाराणि सदैवतानि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि साध्यांश्च तर्पयामि।

ब्रह्माणं तर्पयामि, प्रजापतिं चतुर्मुखं तर्पयामि, परमेष्ठिनं तर्पयामि, ब्रह्मपार्षदान् तर्पयामि, ब्रह्मपार्षदीश्च तर्पयामि। ओं भूः पुरुषं तर्पयामि, ओं भुवः पुरुषं तर्पयामि, ओं स्वः पुरुषं तर्पयामि, ओं भूर्भुवःस्वः पुरुषं तर्पयामि। ओं भूस्तर्पयामि, भों भुवस्तर्पयामि, ओं महस्तर्पयामि, ओं जनस्तर्पयामि, ओं तपस्तर्पयामि, ओं सत्यं तर्पयामि। ओं भवं देवं तर्पयामि, ओं शर्वं देवं तर्पयामि, ओं ईशानं देवं तर्पयामि, ओं पशुपतिं देवं तर्पयामि, ओं रुद्रं देवं तर्पयामि, ओं उग्रं देवं तर्पयामि, ओं भीमं देवं तर्पयामि, ओं महादेवं तर्पयामि। ओं भवस्य देवस्य पत्नीं तर्पयामि, ओं शर्वस्य देवस्य पत्नीं तर्पयामि, ओं ईशानस्य देवस्य पत्नीं तर्पयामि, ओं पशुपतेर्देवस्य पत्नीं तर्पयामि, ओं रुद्रस्य देवस्य पत्नीं तर्पयामि, ओं उग्रस्य देवस्य पत्नीं तर्पयामि, ओं भीमस्य देवस्य पत्नीं तर्पयामि, ओं महादेवस्य पत्नीं तर्पयामि। ओं भवस्य देवस्य सुतं तर्पयामि, ओं शर्वस्य देवस्य सुतं तर्पयामि, ओं ईशानस्य देवस्य सुतं तर्पयामि, ओं पशुपतेर्देवस्य सुतं तर्पयामि, ओं रुद्रस्य देवस्य सुतं तर्पयामि, ओं उग्रस्य देवस्य सुतं तर्पयामि, ओं भीमस्य देवस्य सुतं तर्पयामि, ओं महादेवस्य सुतं तर्पयामि, ओं रुद्रपार्षदान् रुद्रपार्षदीश्च। ओं स्कन्दं सनत्कुमारं षष्ठीं विशाखं स्कन्दपार्षदान् स्कन्दपार्षदीश्च तर्पयामि। विघ्नांस्तर्पयामि, वीरं तर्पयामि, शीलं तर्पयामि, वीरदन्तं तर्पयामि, हस्तिमुखं तर्पयामि, विघ्नपार्षदान् विघ्नपार्षदीश्च। विष्णुं तर्पयामि, नारायणं श्रियं देवीं सरस्वतीं पुष्टिं विष्णुपार्षदान् विष्णुपार्षदीश्च। यमं तर्पयामि, कालं वैवस्वतं चित्रगुप्तं वैवस्वतपार्षदान् वैवस्वतपार्षदीश्च। भरद्वाजं तर्पयामि विद्यां धन्वन्तरिं धन्वन्तरिपार्षदान् धन्वन्तरिपार्षदीश्च।

अथ ऋषयः। ऋषींस्तर्पयामि, महर्षींस्तर्पयामि, परमर्षींस्तर्पयामि, देवर्षीं-स्तर्पयामि, ब्रह्मर्षींस्तर्पयामि, श्रुतर्षींस्तर्पयामि, तापसर्षीन् सप्तर्षीन् कण्वर्षीन् ऋषिकान् ऋषिपत्नीः ऋषिपुत्रकान् काण्वं बौधायनं आपस्तम्बं सूत्रकारं सत्याषाढं हिरण्यकेशं व्यासं प्रणवं गायत्रीं सावित्रीं सरस्वतीं छन्दांसि ऋग्वेदं यजुर्वेदं सामवेदं अथर्ववेदं अथर्वाङ्गिरसं इतिहासपुराणान् सर्ववेदगणान् सर्वभूतानि तर्पयामि।' इति।

याज्ञवल्कीययोगशास्त्रात् -

'सनकश्च सनन्दश्च तृतीयश्च सनातनः।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा।।
एते ब्रह्मसुताः सप्त मनुष्याः परिकीर्तिताः।।'

कात्यायनः -

'मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्।
प्रचेतसं वसिष्ठं च भृगुं नारदमेव च।।'

अथ पुराणम् -

'तर्पणं देवतानां च ऋषीणां च ततः पुनः।
कृत्वाधिकारी भवति पितॄणां तर्पणे सदा।।'

एवमेव च स्नानकाले देवतानां तर्पणमवश्यं कर्तव्यमिति। अथाश्वलायनोक्तम्-

'देवतास्तृप्यन्तु अग्निस्तृप्यतु वायुस्तृप्यतु सूर्यः प्रजापतिः ब्रह्मा वेदाः ऋषयः ओङ्कारो वषट्कारो व्याहृतयः गायत्री सावित्री सरस्वती यज्ञाः। द्यावापृथिव्यौ तृप्यताम्। अन्तरिक्षं नक्षत्राणि सांख्याः सिद्धाः साध्याः नद्यः गिरयः क्षेत्रौषधिवनस्पतयः गन्धर्वाः अप्सरसः विप्राः वयांसि गावः यक्षाः रक्षांसि भूतान्येवमन्तानि तृप्यन्तु।

अथ ऋषयः। शतर्चिनः माध्यमाः गृत्समदः विश्वामित्रः वामदेवः भरद्वाजः वसिष्ठः प्रगाथाः पावमान्यः क्षुद्रसूक्ता महासूक्तास्तृप्यन्तु। वैशम्पायनपैलसूत्रभाष्य-भारतमहाभारतधर्माचार्यास्तृप्यन्तु। जानकिबाहविगार्ग्यगालवगौतमशौनकशाण्डिल्य-बाभ्रव्यमाण्डूकेयास्तृप्यन्तु। गार्गी वाचक्नवी तृप्यतु। वडवा प्रातिथेयी सुलभा मैत्रेयी तृप्यतु। कहोडं कौषीतकं महाकौषीतकम् आश्वलायनम् ऐतरेयं महैतरेयं पैङ्ग्यं बाष्कलम् अजातवक्त्रं औदवाहिं महौदवाहिं सौजामिं शौनकं तर्पयामि। ये चान्ये आचार्यास्ते सर्वे तृप्यन्तु प्रतिपुरुषं पितॄंस्तर्पयित्वा।

अथेतिहासः ब्रह्मणे नमः विष्णवे नमः महेश्वराय नमः वह्नये सूर्याय सोमाय वरुणाय वायवे यमाय कुबेराय इन्द्राय पृथिव्यै अद्भ्यः तेजसे वायवे आकाशाय अग्नये आदित्याय वरुणाय चन्द्रमसे कुमाराय भौमाय विष्णवे बुधाय इन्द्राय

बृहस्पतये सरस्वत्यै शुक्राय प्रजापतये शनैश्चराय गणपतये राहवे रुद्राय केतवे ब्रह्मणे ध्रुवाय अनन्ताय अगस्त्याय ध्रुवाय कालाय विश्वकर्मणे प्रजापतिभ्यः वसुभ्यः रुद्रेभ्यः आदित्येभ्यः मरुद्भ्यः साध्येभ्यः ऋषिभ्यः देवर्षिभ्यः ब्रह्मर्षिभ्यः राजर्षिभ्यः सिद्धेभ्यः विद्याधरेभ्यः गन्धर्वेभ्यः नागेभ्यः वैनतेयेभ्यः अप्सरोभ्यः समुद्रेभ्यः पर्वतेभ्यः नक्षत्रेभ्यः नक्षत्रदेवताभ्यः देवमातृभ्यः देवपत्नीभ्यः देवकन्याभ्यः वेदेभ्यः वेदाङ्गेभ्यः यज्ञाङ्गेभ्यः धर्मार्थकाममोक्षेभ्यः सप्तप्रणेतृभ्यः सत्त्वेभ्यः दिग्भ्यः विदिग्भ्यः दिक्पतिभ्यः तीर्थेभ्यः नदीभ्यः सप्तभ्यो लोकेभ्यः सप्तभ्यः पातालेभ्यः विश्वेभ्यो देवेभ्यः श्रियै सरस्वत्यै दिवाचरेभ्यो भूतेभ्यो नमः नक्तञ्चरेभ्यो भूतेभ्यो नमः।।'

अथ बौधायनः -

'दर्भेष्वासीनो दर्भान्धारयमाणः प्राङ्मुखः सावित्रीं
सहस्रकृत्व आवर्तयेत् शतकृत्वो वापरिमितकृत्वो वा।' इति।

प्रणवव्याहृतियुक्तां गायत्रीं च जपेत्।।

'ततोऽक्षसूत्रमादाय तेनैव गणयेज्जपम्।
नीचैर्जपं बुधः कुर्यात्सावित्र्यास्तु विशेषतः।।
सावित्रीं जपमानस्तु स्वर्गं गच्छति मानवः।
शान्त्यर्थं मानसं जप्यमुपांशु स्याच्च पौष्टिकम्।।
अभिचारे सशब्दं तु ह्युदक्प्राग्दक्षिणामुखम्।
ध्यायेत मनसा मन्त्रं जिह्वौष्ठुं नच चालयेत्।।
न कम्पयेच्छिरोग्रीवं दन्तान्नैव प्रदर्शयेत्।
पिण्डीकृत्येन्द्रियग्रामं मन्त्रार्थधृतमानसः।।
स्वरवर्णपदवाक्यैः शुद्धमावर्तयेज्जपम्।
दशभिर्जन्मचरितं शतेन च पुराकृतम्।।
त्रियुगोत्थं सहस्रेण गायत्री हन्ति किल्बिषम्।
विना दर्भैश्च यत्स्नानं यच्च दानं विनोदकम्।।
असंख्यातं तु यज्जप्तं तत्सर्वं निष्फलं भवेत्।
हिरण्यदन्तमणिभिर्जप्यं शतगुणं भवेत्।।

सहस्रगुणमिन्द्राक्षै रुद्राक्षैरयुतं भवेत्।
नियुतं प्रयुतं वा स्यात्पद्माक्षैस्तु न संशयः।।
पुत्रजीवकजप्यस्य परिसंख्या न विद्यते।'

'स एष एतामेवाहरहरहोरात्रं सन्धिषूपतिष्ठमानो ब्रह्मपुत्रो ब्राह्मणः शास्त्रमनु वर्तमानो ब्रह्मलोकमभिजयति य एवं वेद।'

यं ध्यायन्ति चिदात्मानं सततं जप्यपूर्वकम्।
सोऽस्तु वः श्रेयसे नित्यं जगदादिरजोऽव्ययः।।

**।। इति प्रथमा काण्डिका।।**



## ।। अथ द्वितीया काण्डिका।।

ब्रह्मचारिणोऽग्नीन्धनमुक्तम्। तत्रेतिकर्तव्यतामाह -

**विभूरसीत्यनुवाकेनाग्निमुपस्थाय एधोसीति समिधमादधाति, समिदिति द्वितीयाम्, इदमहमिति तृतीयाम् - इदमहमग्नौ समिधमभ्यादधाम्यग्ने सर्वव्रतो भवामि, इदमहमग्नौ समिधमाहार्षं बृहते जातवेदसे स मे श्रद्धां च मेधां च दीर्घं चायुर्जातवेदाः प्रयच्छत्विति चतुर्थीम्।। १।।**

समिदिति द्वितीयामित्यादौ सर्वत्र समिधमादधातीति सम्बन्धः। एधोऽसीति प्रतीकेन एधिषीमहीत्यन्तस्य ग्रहणम्, एवं समिदसीत्यनेन समेधिषीमहीत्यन्तस्य, इदमहमित्यनेन भवामीत्यन्तस्य। चतुर्थः सकलः पठितः।। १।।

**तेजोऽसीत्यग्निं, तेजो मयि धेहीत्यात्मानम्।। २।।**

अत्र योग्यत्वादनुमन्त्रयेदित्यध्याहारोऽग्निमात्मानमिति कर्मनिर्देशात्। तथा चान्यत्र परिभाषा दृश्यते 'कर्मणि निर्दिष्टो मन्त्रोऽनुमन्त्रणे' इति। इह च न समिदाधानमन्त्रान्तर्गतयोस्तेजोऽसि तेजो मयि धेहीत्येतयोर्ग्रहणं समिदाधान एव चरितार्थत्वात् किं तर्हि, समिन्मन्त्रपरत्वेन स्थितयोः।। २।।

**शेषेणोपतिष्ठते।। ३।।**

अपो अद्यान्वचारिषमित्यनेनाग्निमुपतिष्ठते इत्यर्थः।। ३।।

**ततः प्रातः प्रागुदयात्।। ४।।**

अग्निसमिन्धनं कुर्यादिति शेषः। सायं प्रातश्चाग्निसमिन्धनमेकीयमतेन द्योतितम्। तत्र कालावधिप्रतिपादनार्थमेतत् - प्रातर्यदग्निसमिन्धनं कर्तव्यं, तदादित्योदयात्प्राक् सायमप्यस्तमयात्पूर्वमग्नीन्धनमवगम्यते यत इत्यनुषङ्गः। विभूरसीति प्रतीकेनोत्तरवाक्यस्यापि कदाचित्पर्यायेणोपस्थाने विनियोगः शक्यते इत्यनुवाकग्रहणम्। मा मा हिंसीरित्यन्तेन सकलेनानुवाकेनान्यस्याभावाल्लौकिकस्याग्नेरुपस्थानं प्राञ्जलिमन्त्रपाठलक्षणं कृत्वा समिधमादधामीति अनुषङ्गः।।

**द्वादश चतुर्विंशति षट्त्रिंशतमष्टाचत्वारिंशतं वा वर्षाणि यो ब्रह्मचर्यं चरति मलज्ञुरबलः कृशः सर्वं स विन्दते स्नात्वा यत्किञ्चिन्मनसेच्छत्येतेनैव धर्मेण साध्वधीते।। ५।।**

यस्त्रैवर्णिक एतेनैव धर्मेण पूर्वोक्तधर्मकलापेनोपलक्षितः सन् स साधु यथास्थानकरणवर्णस्वरमधीते विपर्यये दोषश्रवणात्, 'मन्त्रो हीनः स्वरतो वर्णतो वा' इत्यादौ। स स्नात्वा स्नातकधर्मान्निर्वर्त्यावबुद्धवेदार्थः कृतदारसंग्रहो जातपुत्रः कृष्णकेशः कृताग्न्याधानो यत्किञ्चन कामयते स्वर्गपशुपुत्रादिकं फलं, तत्सर्वं सम्यगवबुध्य स्मार्तकर्मानुष्ठानद्वारेण विन्दते लभते। अन्यथा त्वविदुषोऽपरिपूर्णं काम्यकर्मानुष्ठानं निष्फलं काम्यानां सदानुष्ठानशक्त्या स्वाभीष्टत्वात्। यथोक्तम् - 'स सर्वं विन्दते स्नात्वा।' इति।

नैष्ठिकापेक्षया त्वेतेनैव धर्मेण साध्वधीत इत्यधीत एव न स्नायादित्यर्थः। परिशिष्टं यथासम्भवं योज्यम्। कियन्तं कालमधीते। शक्तिप्रज्ञाव्यवसायादिकमपेक्ष्य प्रतिवेदं द्वादशवर्षाणि ब्रह्मचर्यं चरन्। तेनैकत्र वेदे द्वादश वर्षाणि परिश्रमः कर्तव्यः, द्वयोश्चतुर्विंशतिम्, त्रिषु षट्त्रिंशतम्, चतुर्ष्वष्टाचत्वारिंशतम्। नैष्ठिकब्रह्मचर्यापेक्षं चात्राष्टाचत्वारिंशद्वर्षं वेदचतुष्टयस्याध्ययनं बोद्धव्यं कर्मानुष्ठानानधिकृतपङ्ग्वादिविषयं च। अध्ययनस्य च दृष्टार्थत्वादविशेषेण विधाने हि जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यादि नोपपद्येत वेदाध्ययनव्याकरणाद्यवगममूलतदर्थावबोधव्यग्रत्वेनैव पुरुषायुषपर्यवसानेनाश्रमान्तराणामनवकाशप्रसङ्गात्। तस्मादिदं तात्पर्यम् - आश्रमान्तरार्थिना सर्वथा प्रज्ञाद्यनुसारेण वेदान् वेदौ वेदं वेदैकदेशं वाधीत्याधिगम्य च सहधर्मचारिणीपरिग्रहपूर्वकगृहस्थाश्रमादिकमनुष्ठातव्यमिति। कीदृशस्त्रैवर्णिकः। मलज्ञुर्मलिनजानुरस्नानात्, अबलश्च भैक्षभोजनात्, कृशश्च शुश्रूषादिपरिश्रमात्।

'विभूरसि प्रवाहणो वह्निरसि हव्यवाहनः श्वात्रोऽसि प्रचेतास्तुथोऽसि विश्ववेदा उशिगसि कविरङ्घारिरसि बम्भारिरवस्यूरसि दुवस्वाञ्छुन्ध्युरसि मार्जालीयः सम्राडसि कृशानुः परिषद्योऽस्यास्तव्यो नभोऽसि प्रतक्वासंमृष्टोऽसि हव्यसूदन ऋतधामासि स्वर्ज्योतिः समुद्रोऽसि विश्वव्यचा अजोऽस्येकपादहिरसि बुध्न्यः कव्योऽसि कव्यवाहनो रौद्रेणानीकेन पाहि माग्ने पिप्रीहि माग्ने नमस्ते अस्तु मा मा हिंसीः।'

धिष्णयानामङ्गिरसामग्निगणानां चार्षम्।

अग्निरुच्यते। हे अग्ने असि त्वं विभूः विशेषेण सर्वकार्याणां मध्ये भवसीति विभूर्विशिष्टकार्यरूपस्त्वमित्यर्थः, यद्वा विभवति प्रभवसीति विभूः। डुरत्र न भवति सर्वविधीनां छन्दसि विकल्पनात्। प्रवाहणः प्रकर्षेण वाहयसि प्रापयसि दृष्टादृष्टपुरुषार्थान् इति प्रवाहणः। वह्निः वोढा हविषां, स्वयं हविषां भोक्ता इत्यर्थः। हव्यं वाहयसि प्रापयसि देवेभ्यो हव्यवाहनः। श्वात्रः आशु आ समन्तात् त्रायसे इति श्वात्रः, छान्दसो वर्णलोपः। प्रचेताः प्रकृष्टचित्तः। स्तुतः सर्वत्रैवर्णिकैः। वेद इति धननाम विश्ववेदाः सर्वधनः, अथवा वेत्तीति वेदाः ज्ञः विश्वस्य सर्वस्य वेदितृत्वात् सर्वज्ञ इत्यर्थः। उशिक् 'वश-कान्तौ' कान्तिमानित्यर्थः। कविः क्रान्तदर्शनः। अंहः इति पापनाम अंहसः अरिः अङ्घारिः पापस्य नाशकः, वर्णलोपविकारौ छान्दसौ। बिभर्तीति बम्भारिः धारकः पोषकश्च जगताम्। अवतीति अवस्युः रक्षकः, अव इति अन्ननामसु पठ्यते अव इच्छतीति अवस्युः। 'सुप आत्मनः क्यच्' (पा.सू.३.१.८) 'क्याच्छन्दसि' (पा.सू.३.२.१७०) इत्युप्रत्ययः, त्वमात्मनोऽन्नमिच्छसि, अतः समिधाद्यन्नं ते दास्यामीत्यर्थः। दुव इति हविर्नाम दुवस्वान् हविष्मान्। शुन्ध्युः शोधनः पवित्रीकारकः। अत एव मार्जालीयः मृजेरालीयच् प्रत्ययः, मार्जानेन कांस्यादिपात्राणां शोधकः। सम्यग्राजते सम्राट्। कर्षयति हवींषीति कृशानुः। यजमानादिसमूहात्मिकायां परिषदि साधुः, तस्यै वा हितः परिषद्यः। आस्तवनीयः अवश्यमास्तव्यः, 'ओरावश्यके' (पा.सू.३.१.१२५) इति ण्यत्। नभ इव सर्वोपकारित्वात्, अथवा अविदुषां न भाति सम्यक् इति नभः। प्रतनोति कर्माणि इति प्रतक्वा। असंमृष्टः स्वभावशुद्धत्वात्, न पात्रादिवत्संमार्जनमर्हसीत्यर्थः। हव्यं सूदयतीति हव्यसूदनः। ऋतस्य यज्ञस्य धाम स्थानमृतधाम। स्वर्ज्योतिः स्वर्गस्य प्रकाशकः प्रापकः। अस्यानुवाकस्य अन्यत्राहवनीयोपस्थाने विनियुक्तत्वादाहवनीयाभेदोपचारेण लौकिकाग्नेरपि स्तुतिरुचिता। सम्यगुत्कर्षेण राति हवींषीति समुद्रः। विश्वव्यचा विश्वसम्भवः। न जायते इति अजः अधिष्ठातृदेवतारूपेण। एक एव पद्यते चेष्टते कर्माण्युत्कर्षेण सम्पादयतीति एकपात्, एक एव पादः प्राप्तिहेतुराधारात्मको यस्य स गार्हपत्यो वा एकपात्। न जहाति कर्मसाधनशक्तिमिति अहिः। बुध्ने भूलोकेऽन्तरिक्षे वा भवो बुध्न्यः, यद्वा उपरि प्रक्षिप्यमाणस्य हविषो बुध्नेऽधोभागे भवो बुध्न्यः। यस्माच्च कवये क्रान्तदर्शनाय यजमानाय हितत्वात् कव्यशब्दवाच्यः, तस्मात् कव्यं पित्रर्थं हविर्वहतीति कव्यवाहनः।

रौद्रेण घोरेण रुद्रसम्बन्धिना वा अनीकेन समूहेन सेनारूपेण मां हे अग्ने मा हिंसीः, किं तर्हि, मां पाहि गोपाय, पिप्रीहि सन्तर्पय। एतदर्थं च ते तुभ्यं नमोऽस्तु नमस्कारो भवतु।

**एधोऽस्येधिषीमहि समिदसि समेधिषीमहि।।**

हे अग्ने यतस्त्वमेधो दीप्तः समृद्धो वा भवसि, अतस्त्वां वयमेधिषीमहि व्यत्ययेन लिङ् दीपयामः। यतश्च समिदसि, समिद्योग्यत्वात् तत्प्रवणत्वाद्वा उपचारात् अग्निः समिदुच्यते, अतस्त्वां वयं समेधिषीमहि सम्यग्दीपयाम इत्यर्थः।

**इदमहमग्नौ समिधमभ्यादधाम्यग्ने सर्वव्रतो भवामि।**

इदमिति लिङ्गव्यत्ययः। अहमिमां समिधमग्नावाभिमुख्येनादधामि प्रक्षिपामि। अतो हे अग्ने तव प्रसादादहमपि सर्वव्रतो भूयासम्। भवामीति तिङ्व्यत्ययः।

**इदमहमग्नौ समिधमाहार्षं बृहते जातवेदसे स मे श्रद्धां च मेधां च दीर्घं चायुर्जातवेदाः प्रयच्छतु।**

आहार्षमाहरामि प्रक्षिपाम्यग्नौ समिधम् इमाम्। कीदृशेऽग्नौ। बृहते महति महाप्रभावे, जातवेदसे जातप्रज्ञाने सम्पन्नधने वा। स च समित्प्रक्षेपेण तुष्टोऽग्निर्मह्यं श्रद्धां वेदपाठतदर्थज्ञानानुष्ठानादिविषयां मेधां चायुश्च दीर्घं प्रयच्छतु।

**तेजोऽसि तेजो मयि धेहि। अपो अद्यान्वचारिषं रसेन समगन्महि। पयस्वानग्न आगमं तं मा संसृज वर्चसा। सं माग्ने वर्चसा सृज प्रजया च धनेन च। विद्युर्मे अस्य देवा इन्द्रो विद्यान्महर्षिभिः।**

विहव्यस्याङ्गिरसस्यार्षम्। तेजोऽसीत्यग्निमनुमन्त्रयते, तेजो मयि धेहीत्यात्मानम्। अपो अद्य इत्यादिनाग्निमुपतिष्ठते। हे अग्ने अहमप उदकमन्वचारिषं प्राप्तोऽस्म्युदकं, स्नातोऽहमित्यर्थः। अतस्तासामपां रसेन सारेणाहं समगन्महि सङ्गतः सम्बद्धः त्वदाराधनयोग्यः सम्पन्नः। किञ्च पयस्वानेवाहमागममागतो मातुः सम्बन्धिना क्षीरेण युक्तो बालो विकारहीन इत्यर्थः, अथवा पयस्वान् जलयुक्तः आर्द्रगात्र इत्यर्थः। तमेवं भूतं मां वर्चसा तेजसा विद्यातिशयलक्षणेन संसृज। अस्य व्रतपरस्य मे मम देवा विद्युर्जानन्तु इन्द्रश्च महर्षिभिः सहितो मां विद्यात्, ते देवेन्द्रमहर्षयो ज्ञात्वा व्रतं निर्वाहयन्त्वित्यर्थः।

**।। इति द्वितीया काण्डिका।। २।।**



## ।। अथ तृतीया काण्डिका।।

ब्रह्मचर्यव्रतस्याचार्यपूजाविधिद्वारेणावधिमाह -

**छन्दस्यर्थान् बुद्ध्वा स्नास्यन् गां कारयेदाचार्यमर्हयेत्।। १।।**

छन्दसि वेदे ऋग्यजु:सामलक्षणे मन्त्रब्राह्मणार्थवादनामधेयभेदयुक्ते ये व्यवस्थिता अर्था द्वादशाध्यायनिर्णेयास्तान् बुद्ध्वा तद्योग्यत्वात्, स्नास्यन् दारपरिग्रहार्थं स्नातकधर्मान् ग्रहीतुमिच्छन् आचार्यमधीष्य गां मधुपर्कार्थं कारयेत् स्वधनं दत्त्वा अर्हयेत्। सा मधुपर्कोपयोगिनी सती गुरवे अर्हयेत्। सा मधुपर्कोपयोगिनी सती गुरवे दास्यते। आचार्यो हि शिष्याय सिष्णासवे मधुपर्कं ददाति, शिष्यश्चाचार्याय दक्षिणामिति केचित्। अन्ये तु गोप्रभवो मधुपर्को गोशब्देन विवक्षित इति व्याचक्षते। तेनाचार्यमधीष्य मधुपर्को मे दीयतामिति मधुपर्कं कारयेदित्यर्थ:। गृहीतमधुपर्कश्च ब्रह्मचारी आचार्यमर्हयेद्दक्षिणादिना यथाशक्त्या पूजयेत्। अपरे तु सूत्रभेदेन व्याचक्षते - छन्दस्यर्थान् बुद्ध्वा स्नास्यन् गां कारयेदित्येकम्, आचार्यमर्हयेदिति द्वितीयम्। आचार्यमधीष्यादावात्मने गां मधुपर्कं च दापयेदित्याद्यस्यार्थ:। आचार्येण च पूजितो गृहीतदक्षिण: सन् ब्रह्मचारी पश्चादाचार्यमर्हयेत् दक्षिणादानादिना। ब्रह्मचारिणं हि सम्यगधीतावबुद्धवेदमाचार्य: पूर्वं पूजयतीति। तथाच स्मृति: -

'तं प्रणीतं स्वधर्मेण ब्रह्मदायहरं पितु:।
स्रग्विणं तल्प आसीनमर्हयेत्प्रथमं गवा।।' (मनु.३.३) इति।

तं ब्रह्मचारिणं, स्वधर्मेण शिष्यधर्मेण, प्रतीतमभिमुखमागतम्, आचार्यस्य ब्रह्महरं पितुर्दायहरं, स्रग्विणं मालाधारिणं, तल्पे खट्वायामासीनमुपविष्टं गवा पूजयेदाचार्य:। तस्माद्गृहीतविद्यो गुरुणानुज्ञात: स्नायात्, स्नात्वा च भार्यामधिगच्छेत्। अनुत्सृष्टस्तु वीर्यं हित्वा उपावर्तते। तथा च श्रुति: - 'इन्द्रो वै प्रजापतौ ब्रह्मचर्यमुवास स वा अनुत्सृष्टो वीर्यं हित्वोपावर्तत।।' इति।

'आचार्यो ब्रह्मचारिण: प्रजापति:।' इति च।। १।।

द्विविधो ब्रह्मचारी - उपकुर्वाणो यो ब्रह्मचर्यं चरित्वा स्नानदारपरिग्रहादिकं

संश्रयते, नैष्ठिको यो ब्रह्मचर्येण निष्ठां गमयति। तत्रोपकुर्वाणकस्य सावधिकं ब्रह्मचर्यमिति तदपेक्षयोक्तं 'छन्दस्यर्थान्' इत्यादि। नैष्ठिकापेक्षया त्विदमुच्यते -

**श्रोत्रियोऽन्यो वेदाध्यायी।। २।।**

अन्यो नैष्ठिको ब्रह्मचारी। श्रोत्रियो वेदाध्यायी। 'श्रोत्रियंश्छन्दोऽधीते' (पा.सू.५.२.८४) इति श्रोत्रियशब्दो वेदाध्यायिनि निपातितः। वेदाध्यायीति पुनर्वचनमवधारणार्थं वेदाध्याय्येव, न स्नानाद्याचरति, निधनावधिकमस्य ब्रह्मचर्य-व्रतमित्यर्थः।। २।।

अत एव स्पष्टार्थमाह -

**न तस्य स्नानम्।। ३।।**

तस्यानन्तरोक्तस्य नैष्ठिकस्य स्नानं नास्तीत्यर्थः।। ३।।

यस्य तूपकुर्वाणकस्य स्नानादिकमस्ति, तस्य स्नानकर्तव्यतामाह -

**अथास्य स्नानं व्रजपरिहितं प्रपाद्य जटामश्मश्रुलोमनखमभिसंहार्य आपो हिष्ठेति तिसृभिः स्नायात्, हिरण्यवर्णा इति च द्वाभ्यां, शं न इति च द्वाभ्याम्।। ४।।**

गोसमूहो व्रजः, तेन परिहितमधिष्ठितं देशं प्रपाद्य प्रवेश्य प्रयोजककर्तुराचार्य-स्यायं निर्देशः। यथासम्भवं जटिलपक्षे जटानां वापनम्, शिखिपक्षे केशानाम्। तेन जटादिकमभिसंहार्यापसार्य वापयित्वा आपो हिष्ठेत्यादिभिस्तिसृभिः संमार्जनं कुर्वन्तं स्नायात् द्वितीयं मज्जनं कुर्यात्, 'शं न आप' इति द्वाभ्यां तृतीयम्। अत्र च श्मश्रुग्रहणे-नौष्ठोपरिगतकेशानामपि ग्रहणम्। लोमग्रहणेन गुप्तस्थानगतानां ग्रहणं न तु भ्र्वादि-वृत्तीनामार्यप्रसिद्धिविरोधात्।। ४।।

ततस्त्रिः स्नातः पवित्रीभूत इदमिदं कुर्यादित्याह -

**द्यौस्ते पृष्ठमिति च्छत्रं धारयेत।। ५।। इममग्र इति हिरण्यम्।। ६।। प्रतिष्ठे स्थो देवते मा मा हिंसिष्टमिति वाराह्योपानहौ प्रतिमुञ्चते।। ७।। द्विवस्त्रोऽत ऊर्ध्वं तस्माच्छोभनं वासो भर्तव्यमिति श्रुतिः।। ८।। वैणवदण्डधारी नित्यम्।। ९।। छत्रधारी।। १०।। अपन्थदायी।। ११।।**

**अदत्तग्रहणं प्रतिषिद्धम्।। १२।। अपरया द्वारा निःसरणम्।। १३।। मलवद्वाससा सह सम्भाषा।। १४।। रजोवाससा सह शय्या।। १५।। गुरोर्दुरुक्तवचनम्।। १६।। अस्थाने स्मयनम्।। १७।। सरणम्।। १८।। गायनम्।। १९।। नर्तनम्।। २०।। तस्य चेक्षणम्।। २१।।**

अत्र सूत्रगणे पाठक्रमादर्थक्रमस्य बलीयस्त्वात् उक्तानुक्तपदार्थानामर्थवशेन क्रमविशेषयोजना कर्तव्या। तथाहि त्रिःस्नातस्य जलाशयान्नद्यादेरुत्तीर्णस्य चरण-प्रक्षालनादयोऽनुक्ताः, सूत्रिताश्च धौतवस्त्रपरिधानादयो यथाक्रमेण ज्ञेयाः। द्यौस्ते पृष्ठमित्यादिमन्त्रेण च्छत्रं धारयेत, यथाविभवानुसारेण इममग्र इत्यादिना कटककुण्डलादि हिरण्यम्। प्रतिष्ठे स्थ इत्यादिना वाराह्योपानहौ प्रतिमुञ्चते परिधत्ते। वराहशब्दो वराहचर्मणि वर्तते। वराहचर्मणा निर्वृत्त इत्यण्, तस्य 'अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे' (४.१.७८) इति ष्यङ्, 'यङश्चाप्' (४.१.८४) वाराह्ये च ते उपानहौ वाराह्योपानहौ। वराहः सूकरः। वराहोपानहौ च राजसूयादावर्थवादादिकादवगम्येते। अन्ये तु वाराह्यशब्दं संनिवेशविशिष्टोपानद्वाचकं व्याचक्षते चतुष्कच्छादितवत्। अपरे लक्षणया चर्ममात्रमयत्वं वर्णयन्ति, नहि कश्चिदाचार्यः सूकरचर्ममय्यावुपानहौ परिदधद्दृश्यते। केचित्तु पठन्ति वाराह्युपानहाविति। तत्र वाराही उपानहौ इति द्वे पदे। 'छन्दोवत्सूत्राणि भवन्ति' इति प्रथमपदद्विवचनस्य लुक् पूर्वसवर्णादेशो वा 'सुपां सुलुक् पूर्वसवर्ण' (७.१.३९) इत्यादिना। द्विवस्त्रोऽत ऊर्ध्वम्, अतो ब्रह्मचर्यादूर्ध्वं द्विवस्त्रः। ब्रह्मचारी ह्येकवस्त्र आसीत्, मृगाजिनं हि तेनोपरि धारितम्, नच तत्र लोके वस्त्रशब्दप्रयोगोऽस्ति। ततश्च वस्त्रद्वयं विभवानुसारेणोत्कृष्टं भर्तव्यम्। तथा च श्रुतिः 'तस्माच्छोभनं वासो भर्तव्यम्' इति। वेणोः सम्बन्धिनं च दण्डं धारयते तच्छीलो वैणवदण्डधारी। नित्यमिति नत्ववष्टम्भनाद्यर्थितयैव कदाचिदेवेति। एवं छत्रधारी। अपन्थदायी नान्यस्मै पन्थानं दद्यात् दृष्टप्रयोजनव्यतिरेकेण। अपथदायीति तु युक्तः पाठः। यतः 'राज्ञा तु श्रोत्रियाय पन्था देयः' इति गौतमादिभिरुक्तमतः कथमयं श्रोत्रियविशेषः सन्नन्यस्मै प्राणिमात्राय पन्थानं दद्यात्। अदत्तहरणं प्रतिषिद्धं - परकीयं यद्द्रव्यं, तत्परेणादत्तं न गृह्णीयात् 'न परस्वमपहरेत्' इति श्रुत्यादिनिषिद्धत्वात्। अपरया द्वारा निःसरणम्। प्रतिषिद्धमिति काण्डिकान्तं यावदनुषङ्गः। प्रसिद्धमविगर्हितं

यद्द्वारं, ततोऽन्यया द्वारा अप्रसिद्धया गुप्तान्तः पुरादिनिःसरणप्रवेशाय परिकल्पितया निःसरणं प्रवेशनं च प्रतिषिद्धम्। मलवद्वासाः श्वपचादिः, तेन सह सम्भाषणं प्रतिषिद्धम्। तथा रजोवाससा रजस्वलया उदक्यापरपर्यायया सह शयनं प्रतिषिद्धं, स्नानस्य विवाहोपक्रमत्वादेवमुच्यते, इतिकर्तव्यतया हि स्नानस्य विवाहमृते नास्ति प्रसक्तिः। गुरोर्मान्यस्य -

'वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम्।।' (म.२.१३६)

इत्यादिकस्य, दुष्टं परुषादि वचनं प्रतिषिद्धम्। अस्थाने गुरुस्त्रीजनादौ स्मयनं हसनं प्रतिषिद्धम्। एवं सरणं गमनमस्थाने रहस्यगुरुजनाधिष्ठिते। एवं गायनं गीतं नर्तनं चास्थाने प्रतिषिद्धम्, न तूत्सवादौ समानशीलमध्यगतस्य गुप्तस्थाने। तथाच महाव्रते गीतवाद्यनर्तनकर्तव्यतावचनम्।।

'तमुद्गाता वाचयित्वा प्रस्तोते प्रयच्छति प्रस्तोताध्वर्यवेऽध्वर्युरन्यस्मै ब्राह्मणाय।' इत्यादिवीणावदनवचनं श्रूयते। याज्ञवल्क्यश्चाह -

'वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः।
तालज्ञश्चाप्रयासेन योगमार्गं निगच्छति।।' (३.११४) इति।

तस्य च नृत्तगीतादेरस्थानेऽवेक्षणं प्रतिषिद्धं नतूस्तवादौ।।

'आपो हि ष्ठा' इत्यादयो व्याख्याताः। हिरण्यवर्णा इति शाखान्तरीयत्वात् समस्ताः सूत्रकृता पठिताः।।

**द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षं समुद्रो योनिः।**
**विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यतः।।**

बृहती। अश्वस्तुतौ विनियुक्ता। इह च्छत्रस्तुतावपि तुल्या। तव द्यौः स्वर्गलोकः पृष्ठं पृष्ठे उपरि। पृथिवी सधस्थं समानस्थानम्। आत्मान्तरिक्षं छत्रावयविनो महत्त्वस्तुतिः। समुद्र उदकं योनिः कारणम् अप्सुजोऽश्वः इति संस्तवात् अश्वयोनिः सर्वस्योदक-प्रभवस्त्वान्नेत्रवस्त्रादेशाच्छत्रमपि तथा। एवं चेन्महाप्रभावस्त्वमतश्चक्षुषा विख्याय निरीक्ष्याभितिष्ठ आक्राम अभिभव। कान्। पृतन्यतः पृतना सेना तामिच्छन्ति ये, ते पृतन्यतः, तान् प्रभृतयः।।

**इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि। मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासत्।।**

हे अग्ने इमं सुवर्णालङ्कारमायुषे चिरजीवनाय, वर्चसे च दीप्तये कृधि कुरु। हे वरुण त्वमपि ओजो बलं तिग्मं तीव्रं सम्यक् सम्पादय। हे अदिते देवमातः अस्मै स्नातकाय शर्म सुखं यच्छ प्रयच्छ मातेव जननीव। हे विश्वे देवाः सर्वदिवौकसः जरदष्टिर्जराव्याप्तिर्यथा येन प्रकारेण असद्भवति, तथा कुरुत जराजर्जरितशरीरा यथा सम्पद्यामहे तथा कुरुतेत्यर्थः।।

**प्रतिष्ठे स्थो देवते मा मा हिंसिष्टम्।।**

हे देवते उपानहौ सुप्रतिष्ठे स्थः शोभनप्रस्थाने भवतम्। मा मा हिंसिष्टं मम हिंसां मा कार्ष्टम्।।

**।। इति तृतीया काण्डिका।। ३।।**



## ।। अथ चतुर्थी काण्डिका।।

**अथातोऽष्टाचत्वारिंशत्संमितम्।। १।।**

व्याख्यास्याम इत्यध्याहारः। व्रतमिति च प्रस्तावादुगम्यते। चतुर्षु वेदेषु यदष्टाचत्वारिंशत्संवत्सरैः सम्मितं परिच्छिन्नं व्रतमुक्तं, तस्य प्रतिनिधिभूतं संवत्सरनिर्वर्त्यं व्याख्यास्यामः। यस्य वेदमधीयानस्य यथाकालविहितं व्रतं न सम्पन्नं, तेन चैतत्कर्तव्यमधीतवेदचतुष्टयेन च। अत एव त्रैविद्यकव्रतमिदमुच्यते। स्नानादनन्तरं चास्याभिधाने प्रयोजनं - स्नातकभूतेनाप्येतत्कर्तव्यं प्राग्विवाहादिति। अन्ये तु यथा-कालविहितव्रतसम्पत्तावपि एतद्वार्षिकं व्रतं तपोऽतिशयसिद्ध्यर्थं कर्तव्यतया अनेन विधीयते इति व्याचक्षते। अथशब्दो व्रतपूरणार्थः। यथोक्तम् -

'मङ्गले पूरणे हेतावानन्तर्याधिकरणयोः।
षट्स्वर्थेष्वथशब्दोऽयं स्मृतः प्राक्प्रस्तुतेऽपि च।।'

अन्योऽपिचार्थो यथासम्भवं योज्यः। अतःशब्दो हेत्वर्थः। यतोऽध्ययनकाले यथाविहितव्रतासम्पत्तिः कस्यचित्सम्भाव्यते, अतो हेतोः प्रतिनिधिभूतं व्रतान्तरं वक्ष्याम इति।। १ ।।

**तत्र विधिविशेषः ।। २।।**

उच्यत इति शेषः।। २।।

**नियमेष्वाचार्यप्रधानः स्यात्।। ३।।**

स्थानासनादिकान् वक्ष्यमाणान्नियमान् आचार्यमादाय कुर्यात्। आचार्यप्राधान्येन च वेदगुणनार्थाभ्यासावनुवर्तेते।। ३।।

**निलयार्थी यूनबद्धं न प्रविशेत्।। ४।।**

शीतातपभीतो निलयार्थी भूत्वा यूनबद्धं मिश्रवेणुवीरणकाण्डादिनिबद्धं कुटीशालापर्णादिकवासविशेषं न प्रविशेत्।। ४।।

**अनिलयः स्यात्।। ५।।**

न केवलं परनिर्मितमाश्रयविशेषं न प्रविशेत्, यावता स्वयं निलयमात्रमपि न कुर्वीतेत्यर्थः।। ५।।

यद्येवं, वात्याकरवृष्ट्याद्युपप्लवाद्देहभङ्गः स्यादित्याशङ्क्याह -

**अन्यत्र वृक्षाद्वल्मीकाद्वा।। ६।।**

वृक्षादिकमाश्रयेदित्यर्थः। वल्मीकं वल्मीकभूम्यादि।। ६।।

**निस्तान्तवमित्येके।। ७।।**

तन्तुर्वेणुरिति केचित्, शीताद्युपहतो वंशनिर्मितव्यतिरेकेणाश्रयान्तरं विशेत्। रज्जुस्तन्तुरित्यन्ये, रज्ज्वादिबन्धैर्यन्निर्वृत्तं शालादि, तत्तान्तवम्।। ७।।

**यथोक्तमेकं तु वासः शाणी कुतपं वा।। ८।।**

यत्पूर्वमुक्तमेकं वासः, तदेवात्रापि। इयांस्तु विशेषः - इह शाणी कुतपं वा। शाणी वरासिः, न पुनः क्षौमी प्रसिद्धा, क्लिन्नकुट्टितदर्भनिर्मितेति त्वन्ये। अजलोम-निर्मितं कुतपम्।। ८।।

अस्य वाससः परिणाममाह -

**परिमितमुरःप्रमाणमुपरिजानु।। ९।।**

उरस आरभ्य जानुनोरुपरिभागं यावद्व्याप्नोति, तावत्परिमितमेतत्कर्तव्य-मेकमेव त्रैविद्येन। अध्ययनकाले तु अधोभागे पटोलिका त्वासीदुपरि तु मार्गं चर्म, तच्च वास इति नोच्यते लोके इत्युक्तम्।। ९।।

**चतुर्थकालपानभक्षः।। १०।।**

'सायं प्रातर्मनुष्याणामशनं देवनिर्मितम्।' (संवर्त.) इति भोजनकालः। तत्र प्रथमदिनस्य सायंप्रातर्लक्षणं कालद्वयं, द्वितीयदिनस्य च प्रातःकालं वर्जयित्वा सायं चतुर्थे काले भोजनपाने कुर्यादित्येके। एकदिनव्यवधानेन एककालं भुञ्जीतेत्यर्थः। अन्ये त्वाहुः - पीयते इति पानं क्षीरतक्रादि तदेव चतुर्थकाले पश्चिमप्रहरे भक्षोऽस्येति, क्षीरादिपानीये भक्षशब्दो दृष्टः, 'अब्भक्षो वायभक्षः' इति।

**असंचयवान्।। ११।।**

हिरण्यादिसञ्चयं न कुर्वीतेत्यर्थः।। ११।।

**अहरहर्वा भैक्षमश्नीयात्।। १२।।**

भिक्षाणां समूहो भैक्षम्। पूर्वेण भिक्षाणामपि सञ्चयस्य प्रतिषेधे प्राप्ते प्रतिप्रसवोऽनेन क्रियते। प्रतिदिनं भैक्षमश्नीयात्। शरीरापाटवे तु कदाचिदेकामपि भिक्षामश्नीयात्, अटितुमशक्तः सक्तुकणिकादिकं वा। तावन्मात्रं संचिनुयादित्यनेनाभि-प्रायेण वाशब्दः।। १२।।

**अहस्तिष्ठेद्रात्रावासीत।। १३।।**

'कालाध्वनोरत्यन्तसंयोगे' (पा.२.३.५) अहःशब्दद्द्वितीया। अहनि तिष्ठेदेव ऊर्ध्वं एवासीतेत्यर्थः। रात्रावासीतोपविशेत्। अतिश्रान्तः स्वप्यादपि कदाचिदन्तरा मनाक्। अत्यन्तसंयोगाभावात् द्वितीयाविरहः।। १३।।

**उभयं मुनिव्रतः स्यात्।। १४।।**

उभयमहोरात्रं वाक्यसंयमं कुर्यात्। मुनीनां व्रतमेतत्।। १४।।

**स्त्रीशूद्रपतितरभसरजस्वलैर्वा न सम्भाषयेतेति च्यवनो भृगुः।। १५।।**

भार्गवस्तु च्यवनो मन्यते स्त्र्यादिभिरेव न सम्भाषेत, न तु सर्वैः। सम्भाषयेतेति स्वार्थे णिच्, 'रामो राज्यमकारयत्' इतिवत्। पतितास्त्रैवर्णिका अपि। रभसा अपृष्ट-वक्तारो भण्डवन्दिप्रभृतयः। रजस्वलास्तु ये रक्तेन शरीरमवलिप्य भोजनादिकं दाप-यन्ति।। १५।।

**द्वादशरात्रं वोभयतोऽमावस्यां पौर्णमासीं च।। १६।।**

असमर्थापेक्षमेतत्। संवत्सरस्योभयोरारम्भसमाप्तिलक्षणयोः पार्श्वयोर्द्वादशरात्र-मेतत्स्थानासनवाग्यमप्रभृतिकं कुर्यात् पौर्णमासीममावस्यां च। तेन संवत्सरमध्ये अष्टाचत्वारिंशद्दिनानि भवन्ति। उपक्रमोपसंहारयोर्द्वादशरात्रद्वयं, द्वादश पौर्णमास्यः, द्वादशामावस्याः।। १६।।

**पालाश्यः समिधो नित्याः परिधिवृक्षाणां वा।। १७।।**

या ब्रह्मचारिणो नित्याः समिधः, ता इह पालाशयः। पलाशालाभे प्रतिनिधिः, प्रतिनिधाने च परिधिवृक्षाणां वा, परिधिवृक्षाणां सम्बन्धिन्यो ग्राह्याः। परिधिवृक्षाश्च यूप्याः बिल्वखदिरपलाशरोहीतकोदुम्बरबधिरप्रभृतयः। तथाच ब्राह्मणं श्रुतिश्च -

'बैल्वो वा खादिरो वा पालाशो वा रौहीतको वा सौम्यस्याध्वरस्य यूपः स्यात्। औदुम्बरो यूपो भवति।' 'खादिरे बध्नाति पालाशे बध्नाति रौहीतके बध्नाति।।' इति। यज्ञिया वा सर्वे परिधिवृक्षाः। श्रूयते हि परिधिब्राह्मणम् - 'तस्येन्द्रः परिधीन्यज्ञियेभ्यो वृक्षेभ्य आजहार' इति। परिधिवृक्षत्वादेव पालाशीनां सिद्धेः पृथग्ग्रहणं तासां नित्यत्वार्थं तथाचेह नित्यग्रहणम्। ननु मूलप्रकृतावेव कस्मान्नोक्तम्। साधूच्यते भवता किन्तु ज्ञापकार्थं भविष्यति यथा साद्यस्क एवमुक्तं मध्यमायां संस्थितायां यूपकर्मेति, प्रकृतौ चोक्तमुपसत्सु यूपकर्मेति। तत्र कालाकाङ्क्ष्यायां सत्यां विकृतिरपि प्रकृतिं गृह्णाति इत्येतमर्थमवबोधयितुमेवं सूत्रितवानाचार्यो विरोधाभावात्। एवमन्यत्रापि तुल्यन्यायत्वाद्योज्यम्। तेनांहोमुग्भिः समिद्दानेऽप्येवं जानीयादेव - 'तस्येन्द्रो यज्ञियेभ्यो वृक्षेभ्यः परिधीनाजहार।' इति।। १७।।

**मेधां मह्यमिति पाणिना मार्गं दत्त्वा त्रिषवणमहोरात्रमुदकोपस्पर्शनम्।। १८।।**

कुर्यादिति शेषः। मेधां मह्यमङ्गिरस इत्यादिभिर्मन्त्रैः द्वाभ्यां नाभोरारभ्योर्ध्वं ब्रह्मद्वारपर्यन्तं मार्जनं निघर्षणात्मकं कृत्वा - 'नाभेरूर्ध्वमेव पाणिना उन्मार्ष्टि' इति स्मृतेः प्रातःसवने मध्यन्दिनसवने तृतीयसवने इति सवनत्रयेऽपि रात्रिभागत्रयेऽप्येवमुदकोपस्पर्शनं कुर्यात्। उपस्पर्शनमिह स्नानम्। उपस्पर्शनशब्दो ह्याचमनस्पर्शनस्नानेषु दृष्टः, 'उपस्पृश्य स्वस्त्ययनं भवति' इत्यादावाचमने, न कुल्याद्यन्तरागमननिमित्तप्रायश्चित्तभूते सदाचारादिसिद्धे, 'उपस्पृश्य सोममालभेरन्' इत्यत्र स्पर्शे, 'आलभ्य चोपस्पृशेयुः' इत्यत्राप्युदकाचमनमात्रे, 'रथ्यादावुपस्पृशेत्' इत्यादौ स्नाने। तत्र प्रकरणवशाद्विशेषव्यवस्था। यथा सैन्धवशब्दादेरश्वलवणमनुष्येषु।

**दिवा वातार्कसंयोगाद्रात्रौ नक्षत्रमारुतैः।**
**सन्ध्ययोरग्निवाताभ्यां पवित्रं सर्वदा जलम्।।**

तत्र चाग्निं प्रतिष्ठाप्य सुवर्णं संनिधायेति वदन्ति। अस्तमिते वसतीवरीग्रहणवत् 'अग्निर्वै वाक्' इत्यभेदात् अग्न्यभावेऽपि वागुच्चार्या, एवं रात्रावाचमनाद्यपि कुर्यात्।। १८।।

एवं स्नात्वा -

**नमो हमाय मोहमायेति चानुसवनमग्नये वैश्वानराय तपाय तापसाय तपन्ताय विन्दवे विन्दाय वसुविन्दाय सर्वविन्दाय, नमः पाराय सुपाराय पारयन्ताय शान्ताय, नम ऊर्म्याय सूर्म्याय, नमः च्यवनाय भार्गवाय इत्येता एव देवतास्तर्पयन्नुदकेन।। १९।।**

एता एव देवतास्तर्पयन्नुदकेन तर्पयन्नमःशब्दावच्छिन्नैर्मन्त्रैश्चतुर्भिरुपस्पर्शनं कुर्यादिति सम्बन्धः। आदित्य एवोपाध्यवच्छिन्नोऽत्रानेकदेवतारूपोऽभिमतः। तथाच हम आदित्यो गन्तृत्वेन स्तूयते। 'द्रमहम्ममीमृ-गतौ' इति हम्मेः रूपं हम इति। 'मीञ् हिंसायाम्' इत्यस्य त्वप्रत्यये रूपं छान्दसम्, मोहमायेति अन्धकारापसारकायेत्यर्थः। तपतीति तपः। तपश्चचारेति तापसः आदित्य एव प्रजापतिरूपेण स्तुतः। तप्यते इति तपः ब्रह्माण्डादिसर्गः, तं तनोति उत्पादयतीति तपन्तः, 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति सुपो लुक्। विन्दते चेतयते इति विन्दुः, विन्द्यते चेत्यते इति विन्दः चेत्यचेतयितृरूपः प्रजापतिस्तस्मै नमः। वसु विन्दते वसुविन्दः, एवं सर्वविन्दः तयोर्विशेषणसमासः। 'पार तीर-कर्मसमाप्तौ', पारयतीति पारः। पारयन्तं तनोति पारयन्तः। ऊर्मीन्रश्मिकल्लोलानर्हतीति ऊर्म्यः। एवं सूर्म्यः। च्यावयतीति च्यवनः। भृज्जति पाचयति भूतानीति भृगुः, तस्यापत्यं भार्गवः भानुरेवात्र।। १९।।

**एष संवत्सरं चरित्वा विमलो विपापो भवति।। २०।।**

एष ब्रह्मचारी स्नातको वा प्रकृतः संवत्सरमुक्तं व्रतं चरित्वा, विमलो रागादिमलशून्यो विगतपापश्च भवति।। २०।।

पापाभावप्रदर्शनेनाध्ययनाङ्गत्वविहिताध्ययनकालव्रताकरणनिमित्तप्रायश्चित्ततामस्य संवत्सरव्रतस्य दर्शयति -

**सर्वेषां वेदानां चरितब्रह्मचर्यो यदि नान्यत्कुरुते।। २१।।**

यद्यन्यद्व्रतं वेदाध्ययनकाले न कुरुते, तदास्मिंस्तत्प्रतिनिधिभूते संवत्सरव्रते कृते सति चतुर्णामपि वेदानामधीतानां चरितब्रह्मचर्यः सम्पद्यते, व्रतपरिपूर्णं वेदचतुष्टयाध्ययनमस्य सम्पद्यत इत्यर्थः। ये तु स्वतन्त्रमेवेदं संवत्सरव्रतं त्रैविद्यकस्य तपोतिशयार्थं वर्णयन्ति, त एवं व्याचक्षते - पूर्वेण सहास्यैकवाक्यता, एष संवत्सरव्रतं

चरित्वा सर्वेषां वेदानां चरितव्रतः सन् विमलो विपापश्च भवति, यदि तन्मध्येऽन्यन्निषिद्धाचरणं न कुरुते।। २१।।

**स तु खलु चरितब्रह्मचर्यो दश दश पुरुषान्पुनाति पूर्वापरान् आत्मानं चैकविंशम्।। २२।।**

तुशब्दः फलान्तरसमुच्चये। खलुर्निश्चये।। २२।।

वैदिकत्वप्रसिद्धिद्योतनाय च फलान्तरमाह -

**पङ्क्तिं च यावदनुपश्यति यस्यामुपविशति।। २३।।**

पुनातीत्यनुषङ्गः। यान्पश्यति तानपङ्क्तिपावनानपि पङ्क्तिपावनान्करोति तपोबलात्, यांश्चैकपङ्क्त्युपविष्टान्न पश्यत्यपि, तानपि पावयति।। २३।।

**समाप्त एतासामेव देवतानामन्नस्य जुहोति। धेनुर्दक्षिणा।। २४।।**

एतस्मिन्व्रते समाप्ते, पूर्वोक्तदेवताभ्योऽन्नं जुहोति तण्डुललक्षणं स्थालीपाकं वा। 'छन्दोवत्सूत्राणि भवन्ति' इति सुब्व्यत्ययः। अन्नशब्दो हि कृतेऽकृते विपक्के च दृष्टः, 'हेषिभिर्निधनं कुर्यादन्नकामाय' इत्यकृतवचनः, 'अन्नं प्रयौति घृतं मधु तण्डुलान्' इत्यादौ कृतवचनः, 'योऽन्नमश्नीयात्' इत्यादौ विपक्कवचनः। त्रिविधमपि व्रीहितण्डुलस्थालीपाकरूपं पर्यायेण यथास्वं निर्वाह्यम्।।

**मेधां मह्यमङ्गिरसो मेधां सप्तर्षयो दधुः।**
**मेधामग्निश्च वायुश्च मेधां धाता दधातु मे।। १।।**
**मेधां मे वरुणो राजा मेधामग्निर्दधातु मे।**
**मेधामिन्द्रश्च सूर्यश्च मेधां देवी सरस्वती।। २।।**
**या मेधा अप्सरस्सु गन्धर्वेषु च यन्मनः।**
**दैवी मनुष्ये या मेधा सा मामाविशतादिह।। ३।।**
**शरीरं मे विचक्षणं वाङ्मे मधुमद्दुहे।**
**निशामितं निशामये मयि श्रुतम्।। ४।।**
**यन्मेऽनूक्तं तद्रमतां शकेयं यदनुब्रुवे।**
**प्रियाः श्रुतस्य भूयास्म मेधया संविधीमहि।। ५।।**
**नमो हमाय मोहमाय।।**

सयजुष्कः पञ्चर्चः। अङ्गिरसो देवाः मह्यं मेधां बुद्धिं दधुर्दधतु मदर्थं कुर्वन्तु ददतु वा मह्यम्। कश्यपादयश्च सप्तर्षयो मेधां दधतु। तथाग्निर्वायुः धाता प्रजापतिर्मेधां मे दधातु। एवं राजा वरुणोऽग्निरिन्द्रश्च सूर्यश्च मह्यं मेधां दधातु देवी च सरस्वती। तथाप्सरस्सु च या मेधा स्थिता, गन्धर्वेषु च यत् मनः स्थितं, तदुभयमिहैव मानुष-शरीरे सति मामाविशतात्प्रविशतु। या च मनुष्यविशेषे दैवी अमानुषी मेधा, सापि मामाविशतात्। मम च शरीरं विचक्षणं विपश्चित् सकलकलाकोविदमस्तु। वाक् सरस्वती त्रयीरूपा मे मम मधुमत् मधुरविपाकं स्वर्गापवर्गादिकं फलं दुहे दोग्धु। यच्च मयि श्रुतं जातं, निशामितं चावबुद्धं मयाऽऽसीत्, तत् निशामये निशामयेय स्मरणशक्तिस्तत्र ममास्त्वित्यर्थः। यच्च ममानूक्तं गुरुणा निगदितं, तद्रमतां शतशाखं शिष्यप्रशिष्यादीन् प्रसरतु फलपर्यवसायि सत्। यच्चानुब्रवे निगदितुमिच्छामि, तच्छ-क्नुयाम्। तथा वयं श्रुतस्य प्रियाः भूयास्म श्रुतमस्माकं फलदानप्रसादपरमस्तु। मेधया च संविधीमहि सम्बध्येमहि वयम्। यजुर्व्याख्यातम्।। २४।।

**।। इति चतुर्थी काण्डिका।।**



## ।। अथ पञ्चमी काण्डिका।।

येनाधीयानेन यथाविहितव्रतानि नानुष्ठितानि, नापि संवत्सरव्रतं पश्चात्, तं प्रति प्रायश्चित्तान्तरं स्वतन्त्रं वा तपोऽन्तरं पूर्ववत्कृच्छ्रादिकमाह -

**अथ कृच्छ्रविधिं व्याख्यास्यामः।। १।।**

कृतमकुशलं विहिताकरणप्रतिषिद्धसेवनलक्षणं कर्म च्छ्रदति इति कृच्छ्रः। तथानन्तरमेव वक्ष्यति 'सर्वाऽकुशलमोक्षाय' इति। गौतमोऽप्याह - 'अथैतांस्त्रीन्कृच्छ्रांश्चरित्वा सर्ववेदेषु स्नातो भवति, सर्वेषु तीर्थेषु स्नातो भवति।' इति। त्रीनिति कृच्छ्रमहाकृच्छ्रतप्तकृच्छ्रान्। कृतस्य पापस्य च्छ्रदनं वा कृच्छ्रमिति निर्वचनम्। वर्णलोपश्छान्दसत्वात् कृच्छ्रशब्दस्य। तथाच चारायणिसूत्रम् 'पुरुकृते च्छच्छ्रयोः' इति पुरुशब्दः कृतशब्दश्च लुप्यते यथासंख्यं छे छ्रे परतः। पुरु च्छदनं पुच्छम्, कृतस्य च्छ्रदनं विनाशनं कृच्छ्रमिति।

'दुस्तरं गहनं कृच्छ्रं कष्टं दुष्करमित्यपि।
लोकप्रसिद्धपर्याये लिप्याप्यर्थोऽस्य गम्यते।।'

कृच्छ्रस्य विधिः प्रभाव इतिकर्तव्यता कृच्छ्रविधिः, तं व्याख्यास्याम इति शिष्यबुद्धिसमाधानार्थमिदं वाक्यम्। एवमन्यत्राप्यनुसर्तव्यम्।। १।।

स्तुत्यर्थमात्मार्थं चास्य व्रतस्य पुराकल्पार्थवादमाह -

**देवासो यथाचरन्वसवो रुद्रा आदित्या मरुदङ्गिरसः पुरा।। २।।**

देवादीनामेवात्र व्रते आर्षम्। प्रशस्तं चैतद्देवादिभिः पापविमोक्षायानुष्ठितत्वादिति तात्पर्यार्थः। देवा एव देवासः 'आज्जसेरसुक्' (७.१.५०)। येन प्रकारेण देवादय आचरन्, तं प्रकारं वक्ष्याम इत्यन्वयः।। २।।

**स्त्रीशूद्रं नाभिभाषेत।। ३।।**

स्त्रीमात्रं शूद्रमात्रं च न संवादयेत्कृच्छ्रं चरन्।। ३।।

**नक्तमासीत संश्रितः।। ४।।**

कुड्यकाष्ठादिकमालम्बनमात्रमाश्रितः सन् रात्रावासीतैव उपविशेत् श्रमातिशयनिवृत्तये, नतु सुप्यात्। एवं हि सातिशयं तपो भवति। अतिश्रान्तस्तूपविष्ट एवान्तरान्तरा मनाक् स्वापं कुर्वीत शरीरापायस्यावश्यवर्जनीयत्वात्, नतु शय्यामारोहेत्।। ४।।

**सर्वाण्यहानि तिष्ठेत्।। ५।।**

दिनेषु सर्वेषु तिष्ठेदेव, नतूपविशेत्।। ५।।

**ब्रह्मचारी।। ६।।**

ब्रह्मचर्यचरणशीलः। एतेन गृहस्थस्याप्यधिकारं दर्शयति।। ६।।

**क्षपाशयः।। ७।।**

यदि श्रमातिशयमपनोदयितुं मनाङ्‌निद्रां कुर्यात् तदा क्षपायामेव कुड्याद्यवष्टम्भेनोपविष्टः सन्, नतु कथञ्चिदपि दिवा शय्यायां वा।। ७।।

**मधुमांसलवणश्राद्धानि वर्जयेदविचारयन्।। ८।।**

'अकामोपेतं मधु न दुष्यति' इति वाजसनेयकादौ यद्दृश्यते, तथा '.... सैन्धवं तु न दुष्यति।' इति, 'दत्त्वा तु देवविप्रेभ्यः खादन्मांसं न दुष्यति।' (मनु. ५.३२) इति, 'व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत्।' (मनु.३.२३४) इत्याद्यागममविचारयन्नेव प्रयत्नविशेषेण मध्वादीन्यत्र व्रते वर्जयेत्।। ८।।

**गवाजिनं शाणीचीरं कुतपं मार्गं वा वास उच्यते।। ९।।**

गवाजिनं गोचर्म। शाणीचीरं वरासिखण्डः। कुतपमुक्तम्। मृगस्येदं मार्गं चर्म।। ९।।

**सर्वाऽकुशलमोक्षाय मरुतोऽप्याचरंस्तथा।। १०।।**

अध्ययनकाले वैगुण्यकृतस्येवान्यकालकृतस्यापि समस्तस्येहजन्मकृतस्य पूर्वजन्मविहितस्य च अकुशलस्य पापस्य कर्मणो मोक्षाय विनाशायैतद्व्रतं भवति सम्यक् कृतं सत्। तथाच मरुदादयोऽपि तादर्थ्येनैवाचरितवन्तोऽसम्भाव्यमानव्यामोहा इति दृढप्रमाणकमेतत्।। १०।।

**त्र्यहं सायं त्र्यहं प्रातस्त्र्यहं भुञ्जेदयाचितम्।**
**त्र्यहं नैव तु भुञ्जीत एतद्वसुभी रुद्रैरादित्यैश्चरितं व्रतम्।। ११।।**

मरुद्भिश्चेति विज्ञेयम्। त्रीण्यहानि सायमेव भुञ्जीत होमकालादूर्ध्वम्, त्र्यहं प्रातरेव, त्र्यहं त्वयाचितं लब्धमेव भुञ्जीत, त्र्यहं तूपवसनम् - इति क्रमेणैव द्वादश दिनानि व्रतम्। एतत्कृच्छ्रं व्याख्यातम्। अस्य प्राजापत्यमिति नाम। एवंप्रकारं क्लेशसाध्यमन्यदपि कृच्छ्रशब्देनोच्यते, कूर्चसान्तपनादिकम्।। ११।।

एतमेव प्रकारमतिकृच्छ्रेऽतिदिशन्नाह -

**एष एवातिकृच्छ्रस्य विधिरेवं विधीयते।। १२।।**

यः कृच्छ्रस्य प्रकारः स्थानशयनब्रह्मचर्यादिक उक्तः, स एष एवातिकृच्छ्रस्य विधिः। यद्येवमभेद एव स्यात् तदत्र कोऽतिदेशावकाशोऽस्य भिन्नविषयत्वादित्याशंक्याह - एवं विधीयते इति, विशेष इति शेषः।। १२।।

तथाचाह -

**एतेष्वेव तु कालेष्वेकैकं पिण्डं प्राश्नीयात्।। १३।।**

भोजने विशेष इत्यर्थः। तथाचैतेष्वेव सायमादिषु भोजनकालेष्वेकैकं ग्रासमश्नीयादतिकृच्छ्रं चरन्। पिण्डप्रमाणं त्वस्याविकारेण यावद्ग्रासो मुखे वर्तते पाणिपूरणभोजन इति।। १३।।

**।। इति पञ्चमी काण्डिका।। ५।।**



## ।। अथ षष्ठी काण्डिका।।

तप्तकृच्छ्रमाह -

**तप्तकृच्छ्रं व्याख्यास्यामः। त्र्यहमुष्णाः पिबेदापस्त्र्यहमुष्णं पयः पिबेत्। त्र्यहमुष्णं पिबेत्सर्पिर्वायुभक्षः परं त्र्यहम्।। १।।**

कृच्छ्रकालेष्वेव सायमादिषु उष्णजलपानादिकम्। पयः क्षीरम्। सर्पिस्त्र्यहमयाचितम्। वायुभक्ष इति वायुमेवोपजीवेत् पवित्रतार्थं शरीरसन्धारणार्थं च, नत्वन्यत्किमपि भुञ्जीत पिबेद्वेति तीव्रोपवासनत्रयविधानमेवैतत्।। १।।

**बृहस्पतेस्तु कूर्चस्य एष एव विधिः स्मृतः।। २।।**

बृहस्पतेरित्यार्षम्। प्ररोचनार्थं कूर्च इति संज्ञा। यः कृच्छ्रस्य स्थानासनादिप्रकार उक्तः, स एव कूर्चस्यापि। तुशब्दोऽप्यर्थो, भिन्नक्रमः।। २।।

पूर्ववद्विशेषमाह -

**यवागूं यावकं शाकं पयः सर्पिः कुशोदकम्।
त्र्यहं त्र्यहं तु प्राश्नियाद्वायुभक्षः परं त्र्यहम्।। ३।।**

यवागूरपासिततुषयवसम्पाद्या पेयप्राया प्रसिद्धा। यावकोऽपि तद्वत्, स तु भक्तप्रायः कठिनः। शाकं तु हविष्यमेव, नत्वविशेषेण। एवं भोजनेऽपि सायमादौ कृच्छ्रादौ ज्ञेयम्। कुशोदकमिति समाहारनिर्देशात्सहोपयोगः। तेन सप्त त्र्यहा भवन्ति।।

## ।। इति षष्ठी काण्डिका।। ६।।



## ।। अथ सप्तमी काण्डिका।।

**अथ सान्तपनम्।। १।।**

कृच्छ्रविधिं व्याख्यास्याम इति वाक्यशेषः। अथशब्दः पृथक्स्थानतां पूर्वेभ्यो द्योतयति।। १।।

**मरुतां होमो मरुतस्तर्पयेत्।। २।।**

मरुतामेवात्रार्षम्। अतस्तेषामेव होमः। तानेव चोदकेन तर्पयेत्। द्वयमपि चैतत् स्नानादूर्ध्वम्।। २।।

**गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।**
**एकरात्रोपवासश्च कृच्छ्रसान्तपनं स्मृतम्।। ३।।**

कृच्छ्ररूपं च तत्सान्तपनं कृच्छ्रसान्तपनम्। कुशोदकमेकत्राहनि, गोमूत्रादिकमेकैकमहन्यहनि, एकरात्रोपवासश्चेति सप्तरात्रः।। ३।।

**एतदेव त्रिरभ्यस्तं महासान्तपनं स्मृतम्।। ४।।**

एतदेव सान्तपनं यथास्थानं गोमूत्रादिभक्षणमुखेन त्रिरभ्यस्तं दण्डकलितकेन वा महासान्तपनं भवति। तेन भंग्या सान्तपने सप्तोपवासाः, महासान्तपने चैकविंशतिः पर्यवस्यन्तीति महदेतत्तपः। यत्तु याज्ञवल्क्ये सान्तपनस्य द्व्यहत्वं, महासान्तपनस्य च सप्ताहत्वं प्रतीयते, तदपि विकल्पेन शक्तिविशेषभावापेक्षया पुरुषान्तर एव कल्प्यते सर्वस्मृतीनां प्रामाण्यात्। नत्वेतावता सर्वत्र सङ्कोचव्याख्यया क्लेशोऽनुभवनीयः। तत्र याज्ञवल्क्यवचनम् -

'पञ्चगव्यं तु गोक्षीरं दधि मूत्रं शकृद्धृतम्।
जग्ध्वाऽपरेऽह्न्युपवसेत्कृच्छ्रं सान्तपनं चरन्।।' (३.३१४)

अनेन पञ्चगव्यादीनामेकत्राहन्युपयोगः, द्वितीये तूपवास उक्तः, यतो महासान्तपनमाह-

'पृथक्सान्तपनद्रव्यैः षडहः सोपवासकः।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः।।' (३.३१५) इति।

अत्र पञ्चगव्यादीनां पृथगुपयोगात् षडहानि, सप्तमेऽहन्युपवासः।। ४।।

**।। इति सप्तमी काण्डिका।। ७।।**

## ।। अथ अष्टमी काण्डिका।।

सर्वेषां कृच्छ्रव्रतानां द्वादशाहादधिकत्वं, गौणत्वं तु द्वादशाहस्येति तेन तदीया एव मन्त्रादयोऽत्र गुणत्वेन योजयितव्या इत्यभिप्रायेण गुणविशेषमाह -

**अथात्र व्रतोपायनम्।। १।।**

एतेषु समस्तेषु कृच्छ्रेषु अत्र यत्पूर्वं व्रतमुक्तं व्रतनियमाश्चेति तस्योपायनं ग्रहणोपाय इति कर्तव्यता द्वादशाहादित्युच्यते, त्यागोपायश्च तत एवेति ज्ञेयम्।। १।।

**वसवो व्रतपतयो रुद्रा व्रतपतय आदित्या व्रतपतयो मरुदङ्गिरसो व्रतपतय इति व्रतमालभ्य, वसूनद्भिस्तर्पयेत प्रथमेऽस्मिंस्त्रिरात्रे, रुद्रान् द्वितीये, आदित्यांस्तृतीये, मरुदङ्गिरसश्चतुर्थे।। २।।**

प्रथमस्य त्रिरात्रस्य प्रथमेऽहनि स्नात्वाऽग्निसमीपे 'वसवो व्रतपतयः' इत्यादिभिर्मन्त्रैर्व्रतं गृह्णीयात्। 'वसवो व्रतपतयो व्रतमालभे तद्वः प्रब्रवीमि तच्छकेयं तेनर्ध्यासम्।' इत्यादिमन्त्रलिङ्गाद्धि संसिद्ध्यन्तव्रतग्रहणानुज्ञासिद्धये देवताभ्यर्थनं प्रतीयते। तथा व्रतान्ते व्रतत्यागः कर्तव्यः, 'वसवो व्रतपतयो व्रतमचारिषं तदशकं तद्वः प्रब्रूमस्तन्नो गोपाय' इत्यादिभिः। एवमेतैश्चतुर्भिर्मन्त्रैर्व्रतमालभ्य प्रथमे त्रिरात्रे अद्भिर्व-सून्प्रत्यहं तर्पयेत्, द्वितीये रुद्रान्, तृतीये आदित्यान्। चतुर्थे त्रिरात्रे मरुदङ्गि-रस उदकेन सन्तर्पयेत्।। २।।

**'आ मे गृहाः' इति द्वाभ्यां वसूनां स्थालीपाकस्य जुहोति।। ३।।**

प्रथमे त्र्यहेऽहन्यहनि चरुणा मन्त्रद्वयेन वसुभ्यो होमः कार्यो ब्रह्मचारि-स्नातकाभ्यां लौकिकेऽग्नौ, गृहस्थेनाहवनीये गृह्येऽग्नौ वा।। ३।।

**'असंख्याता' इति दशभी रुद्राणाम्।। ४।।**

होमः कार्यो द्वितीये त्र्यहे।। ४।।

**'कदाचन स्तरीरसि' इति पञ्चभिरादित्यानाम्।। ५।।**

तृतीयत्र्यहविषयमेतत्।। ५।।

**'सान्तपनाः' इति षड्भिर्मरुद्गणानां 'त्वामग्ने अङ्गिरसो' 'वायुरग्रेगाः'।। ६।।**

चतुर्थे त्र्यहे मरुद्गणानामङ्गिरसां चाहन्यहनि होमो यथायोग्यमेतैर्मन्त्रैः कर्तव्य इत्यर्थः।। ६।।

**हव्यवाहमिति स्विष्टकृतम्।। ७।।**

हव्यवाहमित्यादिमन्त्रेण स्विष्टकृतं जुहुयादविशेषेण सर्वेषु त्र्यहेषु।। ७।।

**वसवो व्रतपतयो व्रतमालभे तद्वः प्रब्रवीमि तच्छकेयं तेनर्ध्यासम्।**

हे वसवो वासयितारः यतो यूयं व्रतपतयो व्रतस्य पालयितारस्तत्तस्माद्युष्मान्प्रब्रवीम्यभ्यर्थये अहं व्रतमालभे आरभे, तस्माद्युष्मत्प्रसादादहं शकेयं शक्नुयां पारयेय, तेन च व्रतेन सम्पन्नेन ऋद्ध्यासं समृद्धिं फलविशेषात्मिकां प्राप्नुयाम्।

**रुद्रा व्रतपतयो व्रतमालभे तद्वः प्रब्रवीमि तच्छकेयं तेनर्ध्यासम्।।**

पूर्वव्याख्यानेनैव गतार्थः। रुद्रास्त्वभ्यर्थनीया विशेष्यन्ते। एवमुत्तरयोरादित्या मरुदङ्गिरसश्च विशेष्यन्ते। शेषं तुल्यम्।

**आदित्या व्रतपतयो व्रतमालभे तद्वः**
**प्रब्रवीमि तच्छकेयं तेनर्ध्यासम्।।**
**मरुदङ्गिरसो व्रतपतयो व्रतमालभे**
**तद्वः प्रब्रवीमि तच्छकेयं तेनर्ध्यासम्।।**
**आ मे गृहा भवन्त्वा प्रजा म**
**आ मा यज्ञो विशतु वीर्यावान्।**
**आपो देवीर्यज्ञिया मा विशन्तु**
**सहस्रस्य मा भूमा मा प्रहासीत् स्वाहा।।**
**आ मे गृहा भवन्त्वा पुरोरुक्**
**स्तुतशस्त्रे माविशतां समीची।**
**आदित्या रुद्रा वसवो मे सदस्याः**
**सहस्रस्य मा भूमा मा प्रहासीत् स्वाहा।।**

त्रिष्टुप्छन्दः। मुद्गलस्य भान्द्यश्वस्यार्षम्। मे मम गृहा दारा आभवन्तु।

प्रजाश्च पुत्रा ममाभवन्तु। यज्ञश्च वीर्यवान्मां विशतु। तथा देवीः देव्यः आपो यज्ञिया यज्ञसाधनभूता मा मां विशन्तु साहाय्यं भजन्ताम्। सहस्रशब्दोऽतिभूयस्त्वोपलक्षणार्थः। भूमशब्दः पुष्कलधनविषयः। सुबहूनां भूरिधनं तन्मा मा प्रहासीत् मां मा त्याक्षीत्। स्वाहा सुहुतमस्तु। तथा मम गृहा उपांशुप्रभृतयः आभवन्तु। तेषामेव च गृहाणां या पुरोरुक् पुरोऽनुवाक्या हविर्ग्रहणात्पूर्वमन्त्र आभवतु, स्तुतशस्त्रे च मामाविशतां समीची सम्यगञ्चने सम्मुखमित्यर्थः। आदित्या रुद्रा वसवश्च मम सदसि भवाः सदस्याः भवन्तु। सहस्रेत्यादि व्याख्यातम्।

**असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम्।**
**तेषां सहस्रयोजनेऽव धन्वानि तन्मसि।। १।।**

अग्निप्रकरणे रुद्राभिधानाः षडनुवाकाः पठ्यन्ते 'नमस्ते रुद्र मन्यवे' इत्याद्याः। तन्मध्ये एते दश मन्त्राः। सर्वेषु तेष्वनुवाकेषु देवानामार्षम्। तथाच श्रूयते -

'रुद्रं वै देवा यज्ञान्निरभजन्। स देवानायतया आयामवत्या सेनयाभिपर्यावर्तत। एते देवा भीता एतच्छतरुद्रियमपश्यंस्तेनैनमशमयन्यच्छतरुद्रियं जुहोति तेनैतं रुद्रं विततधन्वानं सहंतेषुं मन्युमन्तं महाबाहुं शमयति।।' इति।

ये भूम्यामधि पृथिव्यामीश्वरत्वेनान्तर्वर्तमाना व्यवस्थिता रुद्रा असंख्याता सहस्राणि असंख्यानि सहस्राणि 'शेश्छन्दसि बहुलम्' (६.१.७०) इति शेर्लुक् अपरिमिता रुद्रा इत्यर्थः, तेषां कुपितानामारोपितगुणधनुष्काणां हननोद्यतानां सतां धन्वानि धनूंषि अवतन्मसि अवतनुमः इदन्तो मसिः, अवतारितगुणानि कुर्मः स्तुति-द्वारककोपप्रशान्त्या सहस्रयोजने अतिदूरे स्थिताः सन्तः। (ऊधसोऽनङ्) 'धनुषश्च' (५.४.१३२) इत्यनङ्।

**येऽस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि।**
**तेषां सहस्रयोजनेऽव धन्वानि तन्मसि।। २।।**

येऽस्मिन्प्रत्यक्षे सर्वेषामन्तरिक्षे आकाशे अर्णवे समुद्रे आकाशं हि सूक्ष्म-समुद्रयुक्तमित्याहुः रात्र्यादाववश्यायादिरूपजलपतनदर्शनात्, अथवा ये समुद्रेऽन्तरिक्षे च महति अधि भवा अधिपतित्वेन वर्तमानाः, तेषां धनूंषि अवरोपितज्यानि दूरादेव कुर्म इति पूर्ववत्।

**ये नीलग्रीवाः शितिकण्ठा दिवं रुद्रा उपाश्रिताः।**

**तेषां सहस्रयोजनेव धन्वानि तन्मसि।। ३।।**

ये रुद्रा नीलग्रीवा अशुक्लगलाश्च दिवं स्वर्गमुपाश्रिताः।' शेषं पूर्ववत्।

**ये नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः।**

**तेषां सहस्रयोजनेऽव धन्वानि तन्मसि।। ४।।**

ये शर्वा रुद्रा अधःक्षमाचराः पातालचराः।

**ये वनेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः।**

**तेषां सहस्रयोजनेऽव धन्वानि तन्मसि।। ५।।**

ये विपिनेषु तरुगुल्मलतावितानतृणादिगहनेषु स्थिताः शष्पवत् कोमलतृणवत् पिञ्जराः कपिलाः नीलग्रीवाश्च, तथा विलोहिता नितान्तरक्ताः।

**येऽन्नेषु विविध्यन्ति पात्रेषु पिवतो जनान्।**

**तेषां सहस्रयोजनेऽव धन्वानि तन्मसि।। ६।।**

ये चान्नेषु भुज्यमानेषु, पीयमानेषु क्षीरादिषु प्रच्छन्नरूपेणान्तर्गताः सन्तो भोक्तॄन् पातॄंश्च जनान् विविध्यन्ति ताडयन्ति व्यथयन्ति।

**ये भूतानामधिपतयो विशिखासः कपर्दिनः।**

**तेषां सहस्रयोजनेऽव धन्वानि तन्मसि।। ७।।**

ये भूतानां पृथिव्यादीनां देवविशेषाणां वाधिपतयो रक्षकाः। विशिखासो मुण्डाः। कपर्दिनो जटिलाः।

**ये पथीनां पथिरक्षय ऐडमृदा यव्युधः।**

**तेषां सहस्रयोजनेऽव धन्वानि तन्मसि।। ८।।**

ये पथीनाम् अध्वन्यानां पथिरक्षय अध्वन्याः सन्तो रक्षका आदित्यरूपा इत्यर्थः। इडा अन्नं तत्समूह ऐडं, तन्मृद्गन्ति कोमलीकुर्वन्ति इति ऐडमृदाः। युधि संग्रामे युवन्ति मिश्रीभवन्तीति यव्युधः योद्धार इत्यर्थः।

**ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः।**

**तेषां सहस्रयोजनेऽव धन्वानि तन्मसि।। ९।।**

ये तीर्थानि प्रचरन्ति तपोतिशयसिद्धये सृकावन्तः सातिशयबुद्धियुक्ताः, निषङ्गाः खङ्गास्तद्युक्ताः।

**य एतावन्तो वा भूयांसो वा दिशो रुद्रा वितष्ठिरे।**
**तेषां सहस्त्रयोजनेऽव धन्वानि तन्मसि।। १०।।**

ये रुद्रा एतावन्त इयत्तया अवधृता, भूयांसो वा इयत्तया अनवधृता दिशो वितष्ठिरे दिक्षु विविधं स्थिताः।

**कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे।**
**उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते।। १।।**

ऐन्द्री। बृहती। एक उपशब्दः पादपूरणः। 'प्रसमुपोदः पादपूरणे' (८.१.६) इति पाणिनिवचनात्। 'स्तरी हिंसायाम्।' हे इन्द्र त्वं न कदाचन नैव कदाचित् स्तरीर्हिंसको यजमानस्य भवसि, प्रत्युत सश्चसि दाशुषे। सश्चतिरनुग्रहकर्मा। दाशुषे इति द्वितीयास्थाने व्यत्ययेन चतुर्थी। दाश्वासं दातारं यजमानमनुगृह्णासि फलेन योजयसि। एको नुशब्दः क्षिप्रवचनः, द्वितीयो निश्चयार्थः। इच्छब्दोऽवधारणार्थ एकः, उपेदित्यत्र तु पादपूरणार्थः। मघमन्नं धनं च विद्यते यस्य स माधवा। हे मघवन् धनेश ते तव देवस्य दानादिगुणयुक्तस्य सम्बन्धि दानं दीयमानं स्वर्गादिफलं भूयः प्रचुरं क्षिप्रमेव उपपृच्यते, 'पृची सम्पर्के' सम्बध्यते। केन। अर्थाद्दाशुषा यजमानेन। 'दा श्वान्साह्वान्मीढ्वां श्च' (६.१.१२) इति दाश्वाञ्छब्दो निपातितः दाशृ दाने इत्यस्य।

**कदाच न प्रयुच्छस्युभे निपासि जन्मनी।**
**तुरीयादित्य सवनं त इन्द्रियमातस्था अमृतं दिवि।। २।।**

'इदि परमैश्वर्ये' इत्यस्येन्द्रः। सच पूर्वमन्त्रेऽपि आदित्ये प्रवृत्तः आदित्यानां स्थालीपाके विनियोगात्। आदित्यो वात्रेन्द्रो ब्रह्मा प्रजापतिस्तस्यैव प्रकाशविभवत्वात्। 'युच्छ-प्रमादे।' हे इम्द्र त्वं सम्यक् पूजितः सन् न कदाचित् प्रयुच्छसि प्रमाद्यसि यज्ञे फलवैगुण्यादिरूपेण। यत उभे देवमानुषजन्मनी निपासि नितरां रक्षसि। हे तुरीय त्वरमाण यद्वा चतुर्थगायत्रीपादात्मकपरब्रह्मस्वभाव आदित्य ते तव सम्बन्धि सवनं सूयमानं क्रियमाणं कर्म, सूयतेऽनेन फलमिति सवनमिति कर्म, इन्द्रियमिन्द्रदृष्टं, दिवि द्युस्थानममृतममरणधर्मकमातस्थौ आस्थितं यजमानं तत्र प्रापयतीत्यर्थः।

**यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः।**
**आ वोऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवोवित्तरासत्।। ३।।**

त्रिष्टुप्। आदित्यदैवत्या। आदित्या एवाऽऽदित्यासः, 'आज्जसेरसुक्' भवता इति सुब्व्यत्ययः। मृडयन्त इति तृचः स्थाने शतृ। हे आदित्या यतो भवन्तो मडयितारः सुखयितारः 'मृड सुखने' अतो हेतोरयं भवद्दैवत्यो यज्ञो देवानां यजमानानां सुम्नं सुखं प्रत्येति सुखाभिमुखो गच्छति सुखं साधयतीत्यर्थः। किंच वः युष्माकं सम्बन्धिनी सुमतिः कल्याणी बुद्धिः अर्वाची अभिमुखा सती आववृत्त्यात् अस्मदभिमुखा आवर्ततां पुनःपुनरस्माकं कल्याणी मतिर्भवत्वित्यर्थः। कीदृशी मतिः। अंहोश्चिद्या वरिवोवित्तरासत्। चिच्छब्दोऽप्यर्थे। असत् भवति। वरिवो धनम्। या अंहोरपि पापिष्ठस्यापि वरिवोवित्तरा धनलब्ध्रितरा भवति।

**विवस्व आदित्यैष ते सोमपीथस्तस्मिन्मन्दस्व।**
**या दिव्या वृष्टिस्तया त्वा श्रीणामि।। ४।।**

तमांसि विवासयतीति कृत्वा विवस्वान्। हे विवस्वन् आदित्य अदितेरपत्य एष ते तव सोमपीथः सोमपानं सोमग्रहे विनियोगात् ज्योतिष्टोमे सोमपीथः सोमरसः, इहतु ऊहेनोपचारेण वा सोमपीथः स्थालीपाकस्तस्मिन्स्थालीपाके मन्दस्व तृप्तिं भजस्व। अनेनैव कर्मानुष्ठानेन या दिव्या वृष्टिः, तया त्वा श्रीणामि मिश्रीकरोमि मेघादिद्वारेण वृष्ट्या संयोजयामीत्यर्थः।

**अदब्धेभिः सवितः पायुभिष्ट्वं**
**शिवेभिरद्य परिपाहि नो गयम्।**
**हिरण्यजिह्वः सुविताय नव्यसे**
**रक्षा मा किर्नो अघशंस ईशत।। ५।।**

हे सवित अद्यास्मिन्नहनि नः अस्माकं गयं गृहं परिपाहि परिपालय। कैः। पायुभिः पालनशीलैः पानशीलैर्वा रश्मिभिः। अदब्धेभिः अनुपहिंसितैः। यतस्त्वं हिरण्यजिह्वः सत्यवादी, तेन सुविताय फलप्रसवनाय यज्ञाय नव्यसे नवाय गयं गृहं रक्ष। किञ्च मा नः अस्मान् किः कश्चित् अघं पापं शंसतीत्यघशंसः पापिष्ठ ईशत प्राभूत्।

**सान्तपना इदं हविर्मरुतस्तज्जुजुष्टन।**
**युष्माकोती रिशादसः।। १।।**

हे मरुतः इदं हविः युष्माकं, तत्तस्मात् जुजुष्टन जुषत भजध्वं, ऊती रक्षाश्चास्माकं कुरुत। सम्यक् तापयन्ति विघ्नकारिणो रक्षःप्रभृतीनिति सान्तपनाः। यतो रिशादसः रिशतिर्हिंसाकर्मा, 'दसु उपक्षये' हिंसाकारिणामुपक्षयकारिणः।

**यो नो मर्तो मरुतो दुर्हृणायुस्तिरश्चित्ता वो वसवो जिघांसत्।**
**द्रुहः सपाशं प्रतिषूमुचीष्ट तपिष्ठेन तपसा हन्तना तम्।। २।।**

हे मरुतः यो नः अस्मान् मर्तो मरणधर्मा मनुष्यो, दुष्टं हृणं कार्यमपकारं कामयमानः, तिरः निकटे वर्तमानः गुप्तरूपो वा चित्ता चित्तेन तिरश्चित्तो वा अस्पष्ट-चित्तः जिघांसत् जिघांसेत् वः युष्माकं सम्बन्धी युष्मानपि वा यो जिघांसेत् - हे वसवः वासयितारः - अन्यच्च कीदृशो मर्तः, द्रुहः स्वभावेन हिंसकः - तं प्रतिषू-मुचीष्ट सुष्ठु प्रतिमुञ्चत बध्नीत। तथा हन्तन हिंसत। केन। तपिष्ठेन तपसा अतिशयेन तपसा। कीदृशं तम्। सपाशं पाशयति पाशः पुत्रदारादिः स्ववर्गः, सह पाशेन वर्तमानं सपशुबान्धवमित्यर्थः।

**गृहमेधा रिशादसो मरुतो मापभूतन।**
**प्रमुञ्चन्तो नो अंहसः।। ३।।**

गायत्री। हे मरुतः गृहमेधा अस्माकं भवत गृहं मेधयन्तीति गृहमेधाः। कीदृशाः सन्तः। रिशादसः हिंसानां क्षयकारिणः, अस्मान् अंहसः पापात् प्रमुञ्चन्तः सन्तः। मा अपभूतन अस्माकम् अभिभवं मा कार्षुः।

**प्र बुध्न्या व ईरते महांसि**
**प्र नामानि प्रयज्यवस्तिरध्वम्।**
**सहश्रियं दम्यं भागमेतं**
**गृहमेधीयं मरुतो जुषध्वम्।। ४।।**

त्रिष्टुप्। हे मरुतः एतं भागं हविर्लक्षणं स्थालीपाकं जुषध्वं भजध्वम्। गृह-मेधीयं गृहदेवतार्हं प्रयाजानुयाजहीनम्। एतेन च भागेन प्रयज्यवः इज्यमानाः सन्तः अस्मभ्यं दम्यं दमनार्हं अभिनवकरितुरंगप्रभृतिकं प्रतिरध्वं ददत सहश्रियं कनक-

मणिमुक्ताकलापादिलक्ष्मीयुक्तम्। महांसि च तेजांसि नामानि च 'यज्वानोऽमी धार्मिकाः सत्पुत्राः' इत्यादीनि प्रतिरध्वम्। यतो बुध्ने भवा बुध्न्या भूमिलोके वर्तमाना जना वो युष्मान् प्र ईरते प्रेरते उपसर्पन्ति युष्मदधीनाः सिद्धिष्वित्यर्थः।

**क्रीडं वश्शर्धो मारुतमनर्वाणं रथेशुभम्। कण्वा अभिप्रगायत।। ५।।**

हे प्रकृता मरुतः वः युष्माकं सम्बन्धि शर्धः बलं क्रीडं क्रीडयत्वस्मान्। कणतिः शब्दकर्मा, कणन्तीति कण्वा वायवः यूयमेव मारुतं मरुतां सम्बन्धि शर्धः प्रगायत कथयत यादृशं तदिति। कीदृशं शर्धः। रथेशुभं रथविमानादीनामनुकूलं गमने, तथानर्वाणं लिङ्गव्यत्ययः। अनर्व अप्रच्युतमित्यर्थः।

**अत्यासो न ये मरुतः स्वञ्चो यक्षदृशो न शुभयन्त मर्याः। ते हर्म्येष्ठाः शिशवो न शुभ्रा वत्सासो न प्रक्रीडिनः पयोधाः।। ६।।**

त्रिष्टुप्। अतन्तीत्यत्या अश्वाः। नशब्दः सर्वत्रोपमार्थीयः। ये मरुतः अश्वा इव स्वञ्चः शोभनगतयः, ये च यक्षदृश इव शुभयन्तः शुभमिच्छन्तः सम्यगवलोकनं कुर्वन्ति यक्षा यज्वानः मर्या मर्त्याः, ते हर्म्येष्ठा भवन्तु यज्ञमण्डपस्था भवन्तु तत्र क्रीडन्त्वित्यर्थः। शिशव इव शुभ्रा अनाहार्यशोभायुक्ताः। प्रक्रीडनशीला वत्सा इव वत्सासः, अत एव प्रक्रीडनशीलाः। पयोधाः पयो धयन्ति पिबन्ति ये ते पयोधाः अभिनवाः। ते हि प्रक्रीडनशीला भवन्ति वत्साः शिशवश्च।

**त्वामग्ने अङ्गिरसो गुहाहितमन्वविन्दञ्छिश्रियाणां वने वने।**
**स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमङ्गिरः।।**

हे अग्ने त्वामङ्गिरसः गुहाहितम् अङ्गारेषु गुप्तमन्वविन्दन् लेभिरे वने वने शिश्रियाणां तेषां वनस्पत्यादीनां वनेष्वाश्रितम्। सहो महत् महता सहसा बलेन मथ्यमानस्त्व जायसे। यस्मात्स त्वमेवम्भूतः, तस्मात्त्वामृषयः सहसो बलस्य पुत्रमाहुः। अङ्गिरः अङ्गारेषु जातः।

**वायुरग्रेगा यज्ञप्रीस्साकं गन्मनसा यज्ञम्। शिवो नियुद्भिः शिवाभिः।।**

वायुरेव सर्वदेवतानामग्रे गच्छति यस्मात्, तस्मात्स एव प्रथमं यज्ञप्रीः यज्ञे प्रीयते तर्प्यते। तेन 'अङ्गिरोभ्यो दीयमाने हविषु तन्मध्ये वायवेऽपि हविर्दीयते' इति लिङ्गाद्वायोरपि देवतात्वं प्रतीयते, यतो वायुरेव मनसा साकं सह यज्ञं यत् गच्छति।

शिवः शान्तः। रूपेण यज्ञोपकारिणा नियुज्यन्ते इति नियुतः अश्वाः ताभिरश्वाभिस्तुल्यं कृत्वा गच्छति।

**हव्यवाहमभिमातिषाहं रक्षोहणं पृतनासु जिष्णुम्।**
**ज्योतिष्मन्तं दीद्युतं पुरन्धिमग्निं स्विष्टकृतमाहुवेम।।**

वयमग्निमाहुवेम आह्वयामः, हव्यवाहं यो देवानां पितॄणां च हव्यं वहति तम्। अभिमन्यते इति अभिमाः शत्रुः, तं प्रसहते अभिभवति यस्तमभिमातिषाहम्। रक्षसां हन्तारम्। पृतनासु परसेनासु जयनशीलम्। ज्योतिष्मन्तं ज्वालाकरालम्। दीद्युतम् अतिशयेन द्योतमानम्। पुरं समूहं धत्ते धयति वा पुरन्धिस्तम्। यजनमिष्टं, शोभनमिष्टं करोतीति स्विष्टकृत् तम्।

**वसूंस्तर्पयामि रुद्रांस्तर्पयामि आदित्यांस्तर्पामि मरुदङ्गिरसस्तर्पयामि।।**

**वसवो व्रतपतयो व्रतमचारिषं तदशकं**
**तद्वः प्रब्रूमस्तन्नो गोपायत।।**
**रुद्रा व्रतपतयो व्रतमचारिषं तदशकं**
**तद्वः प्रब्रूमस्तन्नो गोपायत।।**
**आदित्या व्रतपतयो व्रतमचारिषं तदशकं**
**तद्वः प्रब्रूमस्तन्नो गोपायत।।**
**मरुदङ्गिरसो व्रतपतयो व्रतमचारिषं तदशकं**
**तद्वः प्रब्रूमस्तन्नो गोपायत।।**

हे वसवः वासयितारः व्रतपतयो व्रतस्य पालयितारः युष्मत्प्रसादादहं व्रतमचारिषं चरितं सम्पादितं मया व्रतम्। तद्व्रतमहमशकं युष्मत्प्रसादादशक्नवं शकितं पारितं मया व्रतमित्यर्थः। तत्तस्माद्वयं वः युष्मान् ब्रूमः, तद्व्रतमास्माकीनं व्रतं यूयं गोपायत रक्षत। एतेनैवान्यदपि मन्त्रत्रयं व्याख्यातम्।

**।। इति अष्टमी काण्डिका।। ८ ।।**



## ।। अथ नवमी काण्डिका।।

**वर्षासु श्रवणेनाध्यायानुपाकरोति।। १।।**

अत्र 'अन्तेवासिनां योगमिच्छन्' इति वक्ष्यमाणं सम्बन्धनीयम्। यद्यदध्ययनाध्यापनाङ्गं स्मर्यते, तत्तत्किल वक्तव्यम्। उपाकरणं चाध्ययनाध्यापनयोरप्यङ्गम्। तथाच 'अन्तेवासिनां योगमिच्छन्' इत्यतोऽध्येतुः फलसम्बन्धः प्रतीयते। 'अमुष्मै काममायुषे त्वा' इत्यतश्च मन्त्रलिङ्गादुपाकर्त्राऽऽचार्येण प्रयुज्यमानाद् द्वयोरपि शिष्याचार्ययोरविशेषेण फलं प्रतीयते। तत्र त्रैविद्यकत्वसिद्ध्यर्थं वेदाध्ययनाङ्गभूतानि व्रतानि प्रतिपादितानि। अधीतवेदस्यापि च शिष्यस्याङ्गोपाङ्गग्रहणार्थं गुरोर्वास इष्यते शिल्पादिशिक्षार्थं च। तथाच स्मृतिः -

'कृतशिल्पोऽपि निवसेत्कञ्चित्कालं गुरोर्गृहे।
अन्तेवासी ....................।।' (या.२.१८४)

इत्यादि। तत्रान्तेवासिनां योगं सम्बन्धमिच्छन्नाचार्य उपाकरणं वेदानां कुर्यात्। उपाकरणं स्वीकरणं, मनसा सङ्कल्पनम्, एतत्स्थानकविशेषादि मया अस्मै शिष्याय प्रवक्तव्यमिति। शिष्यो हि शिल्पाङ्गोपाङ्गपरिज्ञानायापि गुरौ वसन् स्थानकविशेषादिकमपि गुरोः सकाशादधीते, तमध्यापयता गुरुणा उपाकरणं कर्तव्यम्। शिष्यो यदि कस्मैचिदध्यापयति, तदा तेनापि कर्तव्यम्। सोऽपि हि शिष्यस्य गुरुः। नच वक्तव्यं शिष्यस्याचार्यवृत्तित्वाम्नानाद्ब्रह्मचारिणि गुरौ कथं वृत्तिस्तस्य भोजनास्तरणादिदानसामर्थ्याभावादिति, यतो भैक्षवृत्तित्वमप्याम्नातम्। सम्भवति च त्रैविद्यकस्य ब्रह्मचारिणोऽपि धनविशेषप्राप्त्या ज्ञानादिना वा स्वशिष्यपोषणसामर्थ्यम्। तस्मात्तेनाप्युपाकरणं कर्तव्यं यथासम्भवम्। श्रावणभाद्रपदौ मासौ वर्षाः। तत्र यत् प्रथममेव श्रवणनक्षत्रं, तत्रैवोपाकरणं कर्तव्यं प्रथमपरित्यागे कारणाभावात् 'प्रथमं वा नियम्येत कारणादतिक्रमः स्यात्' इति नयेन। किं कुर्वता। अन्तेवासिनां साङ्गोपाङ्गादिशिक्षार्थं गुरौ निवसतां योगं सम्बन्धमध्यापयित्रध्याप्यलक्षणमिच्छता अन्तेवासिनश्च प्रज्ञातिशयसम्बन्धमिच्छेति फलतो व्याख्या।। १।।

**स जुहोति 'अपवा नामासि तस्यास्ते जोष्ट्रीयं गमेयमहमिद्धमेधस्परि मेधामृतस्य जगृहुरहं सूर्य इवाजनि स्वाहा' रन्तिर्नामासि, युक्तिर्नामासि, योगो नामासि, इत्युत्तरास्तिस्रः। तस्यास्त इति सर्वत्रानुषजति।। २।।**

स जुहोति य उपाकरोति 'अपवा नामासि' इत्यादिभिर्यजुर्भिः। अन्यास्तिस्रः। एतेषु यजुष्षु प्रथममन्त्रस्थं तस्यास्ते इत्येतदनुषज्यते वाक्यपरिपूर्णसामर्थ्यात् अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वादिति नयेन। तेन 'रन्तिर्नामासि तस्यास्ते' इत्यादीनि त्रीणि वाक्यानि भवन्ति। समस्तपाठः शाखान्तरीयत्वात्।। २।।

**युजे स्वाहोद्युजे स्वाहा युक्त्यै स्वाहा योगाय स्वाहेत्यन्तेवासिनां योगमिच्छन्।। ३।।**

अन्तेवासिनां योगमिच्छन्निति प्रत्येकं सम्बध्यते।। ३।

**'दधि क्राव्ण' इति त्रिर्दधि भक्षयित्वा दर्भपाणिः सावित्रीं त्रिरन्वाहादितश्च त्रीननुवाकान् 'कस्त्वा युनक्ति' इति च।। ४।।**

'दधि क्राव्ण' इति मन्त्रः सकृत्। दधिभक्षणमेवावर्तते त्रिः। सावित्री सवितृदैवत्या तत्सवितुरित्यादिकैव महाप्रभावत्वात्। नान्या 'आकृष्णेन रजसा' इत्यादिका। आदावादितः ये त्रयोऽनुवाकाः, 'इषे त्वा' इत्यादिरेकः, 'देवस्य त्वा' इत्यादिर्द्वितीयः, 'वसोः पवित्रमसि' इत्यादिस्तृतीयः। 'कस्त्वा युनक्ति' इति चाश्वमेधे परिधिनियोजने नियुक्तः। उभयत्रान्वाहेत्यनुषङ्गः।। ४।।

**तस्यानध्यायः।। ५।।**

तस्याध्यापयितुरध्येतुश्चानध्याय उच्यते।। ५।।

**न विद्योतमाने न स्तनयति।। ६।।**

वर्तमाननिर्देशात्तात्कालिकमेतदनध्ययनम्। विद्योतमाने वैद्युते तेजसि। स्तनयति गर्जति मेघे।। ६।।

**आकालिकं देवतुमुलं विद्युद्धन्वोल्का।। ७।।**

आकालिकं समानकालमुच्यते। य एवादिः स एव चेदन्तो भवति, तस्य वचने आकालिकशब्दो निपातितः, 'आकालिकडाद्यन्तवचने' (पा.५.१.११४) इति

सूत्रेण, टकारो ङीबर्थः। आकालिकी विद्युत्, य एवोपक्रमकालः, स एव विनाशकालो विद्युत इत्यर्थः। एवमिहापि यस्मिन्प्रथमार्धप्रहरादौ देवतुमुलादिकमुत्पद्यते स तस्यादिकालः स एव द्वितीयदिवसेऽन्तकालो भवति एतदाकालिकशब्देनोक्तम्। एतदुक्तं भवति - यावति काले देवतुमुलादिकमुत्पद्यते, तावत्येव काले द्वितीय-दिवसेऽध्ययनयोग्यता भवति अन्तरा त्वनध्यायः। ये त्वाकालिकशब्दं 'न विद्योतमाने न स्तनयति आकालिकम्' इत्येवं पूर्वेण सम्बन्धयन्ति, यावद्देवतुमुलादि श्रूयते तावन्मात्रकालं चानध्ययनमिति व्याचक्षते, तेषामुत्तरत्राहोरात्रिकमनध्ययनं शब्दतः प्रयोज्यं, वर्तमाननिर्देशलब्धस्य च पुनर्वचनं पुनरुक्तम्। तत्रान्तरिक्षे गीतवाद्यात्मकं गन्धर्वादिकृतं देवतुमुलम्। विद्युदिति विद्युत्पातो विवक्षितोऽत्राहोरात्रादिकाध्यय-नावसरे, धन्वशब्देनापीन्द्रधनुर्वर्षाकालादन्यत्र। वर्षासु तात्कालिकत्वं सदाचार-रूढम्। उल्कयापि महत्या उल्कायाः पातो विवक्षितः। तारकामात्रपतनेऽपि ह्युल्काशब्द-प्रयोगोऽस्ति।। ७।।

**आचारेणान्ये।। ८।।**

अन्येऽप्यनध्ययनहेतव आचाराध्यायोक्ता अनुसर्तव्याः भूकम्पचन्द्रार्कोपराग-नृपतिमहापुरुषप्रमयप्रभृतयः।। ८।।

तद्यथा -

**अत्यक्षराः शब्दाः सन्ततवलीकप्रस्रावाः।। ९।।**

अतिक्रान्ता अक्षराणि अत्यक्षराः शब्दाः निर्घातहुंकारतलास्फोटनप्रभृतयः। सन्ततस्य वलीकस्य प्रस्रावो, नतु प्रस्रावमात्रं तस्य प्रायेण भावात्। एतद्वयमा-कालिकस्यानध्ययनस्य निमित्तम्।। ९।।

**अर्धपञ्चमान्मासानधीत्य पञ्चार्धषष्ठान्वोत्सृजते, उत्सृजामहेऽध्यायान्, प्रतिविश्वसन्तु छन्दांसि, कस्त्वा विमुञ्चतीति च।। १०।।**

अर्धं पञ्चमो येषां तेऽर्धपञ्चमा मासाः सार्धचत्वारः। एवमर्धषष्ठाः सार्धपञ्च। मासानुक्तविधिनाधीत्याध्ययनार्थप्रयोजकव्यापाराध्ययनं निर्वर्त्य अध्याप्येति यावत्, उत्सृजते अध्यायान् उत्सर्गसङ्कल्पनं करोतीत्यर्थः, नच वेदाध्ययनस्य त्यागोऽस्ति, अनध्यायविशेषेभ्योऽपिवा उत्सर्गे मन्त्रद्वयसम्बन्धमाह 'उत्सृजामहे' इत्यादि।। १०।।

**तस्यानध्यायोऽमावस्यां पक्षिणीं नाधीते।। ११।।**

अयमन्योऽनध्यायः। पक्षाविवोभयपार्श्ववर्तितया अमावस्यायाश्चतुर्दशी प्रतिपच्च। यद्यपिचाचाराध्याये द्वे पौर्णमास्यौ द्वे अमावस्ये इति चतुर्दशीसहिते पौर्णमास्यमावस्ये उक्ते, तथापि प्रतिपद्विधानार्था पुनः श्रुतिः। तदुक्तं - 'गुणार्थेन पुनःश्रुतिः' (पू.मी.१.२.४१) इति।। ११।।

**नात ऊर्ध्वमभ्रेषु।। १२।।**

अत उत्सर्गादूर्ध्वमभ्रदर्शनमात्रेऽपि सति नाध्येतव्यं, का कथा विद्योतमानादिषु।।

**अपवा नामासि तस्यास्ते जोष्ट्रीयं गमेयमहमिद्धमेधः।**
**परि मेधामृतस्य जगृहुरहं सूर्य इवाजनि स्वाहा।।**
**रन्तिर्नामासि, युक्तिर्नामासि, योगो नामासि, युजे**
**स्वाहा उद्युजे स्वाहा युक्त्यै स्वाहा योगाय स्वाहा।।**

ब्राह्मी विद्या देवता। पवते स्वरूपाच्च्यवते इति पवा अध्रुवा, तत्प्रतिषेधेन अपवा ध्रुवा विद्या। केचिदप्वेति पठन्ति, तत्राप्ययमेवार्थः। अपवा नामासि नित्यानन्दा, तस्यास्तव सम्बन्धि यदेधः इद्धं रूपं, तदहं गमेयं प्राप्नुयाम्। इद्धमेध इति पुनर्वचनमनादित्वख्यापनार्थम्। कीदृशमेधः। जोष्ट्रीयमतिशयेन सेवनीयम्। एतस्य अमृतस्य मरणरहितस्य ब्रह्ममयस्य विद्यारूपस्य मेधां परिजगृहुर्विपश्चितः मेधावन्तो विद्यास्वरूपं ब्रह्म लेभिरे इत्यर्थः, अथवा ऋतस्य सत्यस्य ब्रह्मणो मेधां परिजगृहुर्विपश्चितः। अतश्चाहमपि सूर्य इवाजनि सूर्य इवाहमुत्तमप्रकाशो ब्रह्मरूपनिकटः स्यामित्यर्थः। स्वाहा सुहुतमस्तु। रमते क्रीडति जगद्विवर्तादिना इति रन्तिः ब्रह्ममयी विद्या। युज्यते लोके विवर्तपरिणामशक्तिभिरिति युक्तिः। एवं योगो, युक्, उद्युगित्यादि व्याख्येयम्। पुनर्वचनं स्तुत्यर्थम्।

**दधि क्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः।**
**सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत्।।**

अनुष्टुप्। अस्याश्च ऋचः सुरभिमतीति नाम। तथाच श्रुतिः - 'ऋत्विजो यजमानाश्च सुरभिमतीमृचमन्वाहुर्वाचमेव पुनते' इति। अन्यत्राश्वसंस्कारोत्तरकालमृत्विग्यजमानयोर्दधिभक्षणसमयादावियमभ्यर्थना इहापि यथायोग्यत्वं योजयितव्या।

क्रामतीति क्रावा। जयनशीलो जिष्णुः। व्याप्त्यर्थस्य अश्नोतेरश्वः, वेजनवान्वाजी अन्यत्राश्वः, इह तु प्रजापतिः। यत्क्राव्णो जिष्णोरश्वस्य वाजिनः अश्वस्य संस्कारकाले अश्‌लीलाभिभाषणेन मुखाण्यपवित्रीभूतानि दधि दध्ना पवित्राणि अकारिषं व्यत्ययेनैक-वचनम् उत्तरत्र च बहुत्वचनदर्शनात् वयम् अकारिष्म। प्रजापतेर्वा सर्वात्मकस्य वेदात्मनो वा अज्ञानेनापभाषणेन बाल्यादितया अपवित्राणि मुखा मुखानि 'शेश्छन्दसि बहुलं'मिति लुक् नः अस्माकं सुरभि सुरभीणि पवित्राणि करत् लोडर्थे लेट् 'इतश्च लोपः परस्मैपदेषु' (३.४.८७) इति तेरिकारलोपः 'लेटोऽडाटौ' (३.४.९४) इत्यडागमः करोतु। किञ्च अश्वः प्रजापतिर्वा अस्माकमायूंषि प्रतारिषत् प्रतरतु करोतु। 'तॄ प्लु वनतरणयोः' 'पूर्ववत्पञ्चमलकारादि' 'सिप् बहुलं लेटि' (३.४.३४) इट् गुणः वर्णव्यत्ययेनाकारः।

**इषे त्वोर्जे त्वा वायवस्थोपायवस्थ देवो वस्सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे।।**

**आप्यायध्वमघ्न्या देवभागं प्रजावतीरनमीवा अयक्ष्माः।।**

**मा वस्स्तेन ईशत माघशंसः परि वो रुद्रस्य हेतिर्वृणक्तु।।**

**ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि, यजमानस्य पशुपा असि।। १**

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे गोषदसि प्रत्युष्टं रक्षः प्रत्युष्टारातिः प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा।।**

**उर्वन्तरिक्षं वीहीन्द्रस्य परिषूतमसि माधो मोपरि परुस्त ऋद्ध्या समाच्छेत्ता ते मा रिषत्।।**

**देव बर्हिश्शतवल्शं विरोह सहस्रवल्शा वि वयं रुहेम।।**

**अदित्या रास्नासीन्द्राण्यास्सन्नहनं पूषा ते ग्रन्थिं ग्रन्थानु स ते मा स्थादिन्द्रस्य त्वा बाहुभ्यामुद्यच्छे बृहस्पतेस्त्वा मूर्ध्नाहरामि देवंगमयसि।।**

**तदाहरन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे।। २।।**

**वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारम्। अयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः। मधुमद्घृतवत्पिन्वमाना जीवा जीवन्तीरुपवस्सदेम। मातरिश्वनो घर्मोऽसि द्यौरसि पृथिव्यसि विश्वधायाः परेण धाम्नाहुतासि मा ह्वास्सा विश्वायुस्सा विश्वव्यचास्सा विश्वधाया हुतस्स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याम्।।**

**सम्पृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः। मन्द्रा धनस्य सातयः।।**

**इन्द्रस्य त्वा भागं सोमेनातनच्म्यधस्तमसि विष्णवे विष्णो हव्यं रक्षस्वापो जागृत।। ३।।**

'इषे त्वा' इत्यादयो मन्त्रा दार्शपौर्णमासयोः शाखाच्छेदनादौ विनियुक्ताः श्रुतिलिङ्गादिभिः। तत्र परमेष्ठिनः प्राजापत्यस्यार्षम्, शाखादिरभिधेयो देवता। यजुषां छन्दो नास्तीत्येके। केचित्तु वैशेषिकं छन्द इच्छन्ति पिङ्गलपरिपठितं दैव्येकमित्यादि। तत्र च सर्वसंख्याया व्यवहारः पाद इत्यधिकारात्।

**इषे त्वा।।**

दैवी, अनुष्टुप्, त्र्यक्षरा, शाखाच्छेदने विनियुक्ता। 'इषे त्वेति च्छिन्दन्ति' इति। 'इषु इच्छायां' क्विप्। तादर्थ्ये चतुर्थी, 'सावेकाचस्तृतीयादिर्विभक्तिः' (६.१.१६८) इत्यन्तोदात्तम् इषे इति पदम्, अथवा इड्विद्यते यस्य स इषः इष्यमाणोऽन्नादिः। अकारः प्रत्ययः। निमित्तात्कर्मसंयोगे सप्तमी। आद्गुणः। 'एकादेश उदात्तेनोदात्तः' (८.२.५) इत्यन्तोदात्तत्वम्। त्वा इति कर्मपदं युष्मदादेशः। कर्म च क्रियायाम्। तत्र क्रियाया अश्रवणाद्विनियोगबलाच्छिन्दन्ति इत्यध्याहारः। अन्नादिसिद्धये त्वां छिन्दन्तीति समुदायार्थः। अन्नादिनिमित्तत्वं तु - 'अग्नेर्धूमो जायते धूमादभ्रमभ्राद्वृष्टिः।' इत्यादिश्रुतिकथितप्रणालिकया।

**ऊर्जे त्वा।।**

'ऊर्ज-बलप्राणनयोः' क्विबन्तः। अन्नस्य बलस्य च नामधेयत्वेन प्रसिद्धः। शाखासन्नमते परिमार्जने च द्विपदस्यास्य मन्त्रस्य त्र्यक्षराया दैव्या अनुष्टुभो विनियोगः। परिमार्ज्मि सन्नमयामीति पर्यायेणाध्याहारः। बलार्थं त्वां परिमार्ज्मि सन्नमयामीति वाक्यार्थः।

**वायवस्स्थोपायवस्थ।**

अनुष्टुप्। वत्सदैवत्या। चतसृणां गवां सम्बन्धिनो वत्सान् शाखयोपस्पृशन् देशाद्देशान्तरं नयति कृतप्रस्रवणान्। हे वत्साः वायवः इव स्थ भवत, कृतप्रस्रवणाः सन्तो वेदेनापसरत यावदहं क्षीरं गृह्णामि, उपायवस्स्थ उपगच्छत मातुः समीपे अनुसरत पुनः क्षीरं पातुमित्यर्थः।

**देवो वः सविता पार्पयतु श्रेष्ठतमाय कर्मणे।।**

धृतिश्छन्दः, गावो देवता, अनेन धेनूः प्राचीं गमयति। हे धेनवः वो युष्मान् देवो दानादिगुणकः, सविता कर्मणोऽनुज्ञाता फलप्रसविता वा प्रार्पयतु शरीरान्तरसम्बन्धं समर्पयतु देशान्तरं प्रापयतु, नत्वहं मानुषमात्र इत्यर्थः। किमर्थम्। श्रेष्ठतमाय कर्मणे यज्ञार्थं, 'यज्ञो वै श्रेष्ठतमं कर्म' इति श्रुतिः।

'आप्यायध्वम्' इत्यादि यजुः। हे अघ्न्याः अहन्तव्याः अघस्य पापस्य हन्त्र्यो वा देवस्येन्द्रस्य सम्बन्धिनं भागं भाजनीयं सान्नाय्यलक्षणमाप्यायध्वम्। 'प्यायी-वृद्धौ' वर्धयत। यतो यूयं प्रजावतीः प्रजावत्यः पुत्रवत्यः, अनमीवा। 'अम रोगे' इत्यस्मादमीवाशब्दः, व्याधिविशेषशून्याः, अयक्ष्माः यक्ष्मो व्याधिविशेषः राजयक्ष्माख्य-स्तच्छून्याः, अथवा अयनमयः क्ष्मायां पृथिव्यां यासां ताः अयक्ष्माः। 'मा वस्स्तेन ईशत' वः युष्माकं स्तेनश्चौरो मा प्राभूत्। 'माघशंसः' - अघं पापं शंसतीत्यघशंसः चाण्डालादिः मा वः ईशत। 'परि वो रुद्रस्य हेतिर्वृणक्तु' परिवृणक्तु परिवर्जयतु। 'ध्रुवा अस्मिन्गोपतौ स्यात बह्वीः' अस्मिन्यजमाने स्थिरा भवत बह्वीः बह्वयश्च भवतास्मिन्। 'यजमानस्य पशून्पाहि यजमानस्य पशुपा असि।' अनेन शाखां स्थापयति, हे शाखे यतस्त्वं स्वभावेनैव यजमानस्य पशुपाः अतो यजमानस्य पशून्पाहि।। प्रथमोऽनुवाकः।। १।।

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे।।**

अनेन हविर्निदधाति। संकृतिश्छन्दः। हे धान्यादिक देवस्य सवितुरादित्यस्य प्रसवेऽनुज्ञायां वर्तमानस्तेन प्रकाशद्वारेण कर्मसु प्रवर्तनात्, अश्विनोः सम्बन्धिभ्यां बाहुभ्यां, पूष्णश्च हस्ताभ्यां नतु स्वकाभ्यां चर्मादिमयाभ्यां त्वामाददे। प्रतिग्रहादावप्यस्य विनियोगः।

**गोषदसि।**

बर्हिर्लवणीमश्वपशूनामाह गावः सीदन्त्यस्यामिति गोषत् तया बर्हिर्लवण्या गावो वर्तन्ते इत्येवमुक्तम्।

'प्रत्युष्टं रक्षः प्रत्युष्टारातिः' इत्यग्निमभ्यर्थयते पशूंस्तापयन्। 'उष-दाहे' रक्षः राक्षस उपलक्षणमेतत् राक्षसपिशाचादिकं प्रतिदग्धमस्तु। न विद्यते रातिः धनं यत्र

सोऽरातिरर्थाभावः अलक्ष्मीरित्यादिपर्यायः, अदानं कार्पण्यं वा अरातिः, शत्रुर्वा अरातिः स दग्धो भवतु।

बर्हिर्लवनायोत्तिष्ठन्नाह -

**प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा।।**

इयं मम धिषणा बुद्धिः बर्हिः कर्मभूतम् अच्छप्रागात् आभिमुख्येन गन्तुं प्रवृत्ता। 'अच्छाभेः शाकपूणिः' इत्यच्छशब्दोऽभेरर्थे आभिमुख्ये वर्तते। कीदृशी धिषणा। मनुना प्रजापतिना कृता, तथा स्वधया अन्नेन वितष्टा तीक्ष्णीकृता।

बर्हिःस्थानं गच्छति।

**उर्वन्तरिक्षं वीहि।।**

हे चरणयुगलक उरु विस्तीर्णमन्तरिक्षं वीहि गच्छ।

दर्भस्तम्बं त्रिः परिलिखति।

**इन्द्रस्य परिषूतमसि।।**

हे दर्भस्तम्ब त्वमिन्द्रस्य कृते परिषूतं जातः।

पक्कं मध्येन योजयति।

**माधो मोपरि परुस्ते।।**

हे गर्भस्तम्ब ते तव परुः पर्व अधः उपरि मा भूत् परशुधारासाम्येन वर्ततामित्यर्थः।।

लुनाति।

**ऋद्ध्या समाच्छेत्ता ते मा रिषत्।।**

'रुष-रिष-हिंसार्थः', ते तव समाच्छेत्ता लविता ऋद्धिं मा रिषत् मा हिंसीत्। यज्ञसाधनशक्तिं मा च्छैत्सीदित्यर्थः। ऋद्ध्येति व्यत्ययेन तृतीया।

छिन्नशेषाणि भूमिलग्नानि पुनःप्ररोहणसमर्थानि बर्हिर्मूलानि अभिमृशति।

**देव बर्हिः शतवल्शं विरुह सहस्रवल्शा वि वयं रुहेम।।**

हे देव बर्हिः त्वं जातं सत् शतवल्शं शतशाखं विरुह वर्धस्व, वयमपि त्वत्प्रसादात् सहस्रवल्शाः सहस्रशाखाः विरुहेम वर्धिषीमहि।

बन्धनार्थं रज्जुं करोति -

**अदित्या रास्नासि।।**

असि त्वम् अदित्याः पृथिव्या रास्ना रज्जुः।

बर्हिः सन्नह्यति -

**इन्द्राण्याः सन्नहनं पूषा ते ग्रन्थिं ग्रन्थातु स ते मा स्थात्।।**

यतस्त्वमिन्द्राण्याः सन्नहनं बन्धनमतस्ते पूषा इन्द्रो ग्रन्थिं ग्रन्थातु ते बर्हिषः, त्वामिन्द्रो बध्नात्वित्यर्थः। सच ग्रन्थिर्ग्रथितः सन् तव चिरं मा स्थात् शीघ्रमेव तव विमुक्तस्य यज्ञोपयोगोऽस्त्वित्यर्थः।

उद्यच्छति बर्हिः -

**इन्द्रस्य त्वा बाहुभ्यामुद्यच्छे।।**

हे बर्हिः त्वामहमिन्द्रस्य सम्बन्धिभ्यां बाहुभ्यामुद्यच्छामि, नतु स्वकाभ्यां चर्मादिमयाभ्यामिति।

प्रोत्साहेन उद्धृतं मूर्ध्नि निधत्ते -

**बृहस्पतेस्त्वा मूर्ध्ना हरामि।।**

त्वामहं बृहस्पतेः सम्बन्धिना मूर्ध्ना शिरसा हरामि धारयामीति।

पूर्ववद्बर्हिराह -

**देवङ्गममसि।।**

असि त्वं बर्हिर्देवङ्गमं देवार्थं तव नयनमित्यर्थः।

न केवलं वयमेव देवार्थं त्वा नयामः, पूर्वैरप्येवमनुष्ठितमित्याह -

**तदाहरन्ति कवयः पुरस्तात्।।**

कवयः क्रान्तदर्शनाः सम्यग्विदितानुष्ठितसकलवेदार्थाः तद्बर्हिरेवमेवाहृतवन्त इति तात्पर्यार्थः।

वेद्यामासादयति -

**देवेभ्यो जुष्टमिह बर्हिरासदे।।**

इदं बर्हिर्देवेभ्यो जुष्टमिति रुचितमिह वेद्यामासादयामीति।। द्वितीयोऽनुवाकः।। २।।

क्षीरपावनार्थं दर्भपवित्रं करोति -

**वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारम्।।**

हे पवित्र वसोर्धनस्य क्षीरस्य त्वं पवित्रं पावनमसि। शतसहस्रग्रहणपरिमितत्वोपलक्षणार्थम्, अपरिमितच्छिद्रत्वादपरिमितधारमित्यर्थः। वसूनामिति, आस्तामिदमेकयजमानसम्भृतमल्पं पयः, यावज्जगतीगतानामितरयजमानसम्भृतानां पयसां पावनमस्ति। यद्वात्र मरुतो वसव उच्यन्ते इन्द्रसाहाय्येन वर्तमानाः, ते हि वसते आच्छादयन्तीति वसवः। तथाच ब्राह्मणम् - 'वसूनां वा एतद्भागधेयम्' इति।

वत्सैः संगृह्यमाणा गा अनुमन्त्रयते -

**अयक्ष्माः वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः।।**

हे अयक्ष्माः व्याधिविशेषहीनाः अवध्यधाना वा वो युष्मान् प्रजया संसृजामि। रायो धनस्य भक्ष्यविशेषात्मकस्य पोषेण बहुलाः प्रवृद्धदेहा भवन्तीः, यद्वा धनपुष्ट्या सह बहुलाः प्रचुराः भवन्तीः।

दुह्यमानासु जपति -

**मधुमद्घृतवत्पिन्वमाना जीवा जीवन्तीरुप वः सदेम।।**

हे गावः वो युष्मान्वयमुपसदेम अनवरतमित्याशास्महे। कीदृशीः। जीवन्तीः दीर्घायुषः, जीवाः प्राणयुता बलवतीरित्यर्थः। किं कुर्वतीः। मधुमत् मधुररससंयुक्तं, घृतवद्घातिस्निग्धं क्षीरं पिन्वमानाः स्रवन्त्यः।

गार्हपत्यादङ्गारराशिं पृथक्करोति -

**मातरिश्वनो घर्मोऽसि।।**

हे अङ्गारराशे त्व मातरिश्वनो वायोः घर्मः तेजः। तथाच ब्राह्मणम् - 'अन्तरिक्षं वै मातरिश्वनो घर्मः।' इति। अत्रान्तरिक्षशब्दः तात्स्थ्यादन्तरिक्षस्थे भानुतेजसि वर्तते।

उद्धृतेऽङ्गारराशौ उखामधिश्रयति -

**द्यौरसि पृथिव्यसि विश्वधायाः परेण धाम्नाह्रुतासि मा ह्वाः ।।**

'उपास्तौत्येवैनामेतत्' इति श्रुतिः। यदा दिवःपतितेनोदकेन सम्पाद्यते तदा द्यौरिति स्तूयते। पृथिव्यवयवनिर्मितत्वात्पृथिवीति। विश्वं सर्वं धत्ते इति विश्वधा पृथिवी, तस्याः सम्बन्धिना परेणोत्कृष्टेन धाम्ना तेजसा सारेण असि त्वम् अह्रुता, 'ह्वृ- कौटिल्ये' अकुटिला। यतश्च त्वमकुटिला, अतः मा ह्वाः द्रव्यधारणे व्यापृता सती कुटिला मा भूः।

तिसृषु धेनुषु दुग्धासु कां दुग्धवानसीति प्रश्ने अमूमिति चोत्तरे दोग्ध्राभिहिते अध्वर्युराह -

**सा विश्वायुः सा विश्वव्यचाः सा विश्वधाया।।**

या प्रथमं दुग्धा, सा विश्वायुः सर्वस्यायुषो धात्री क्षीरादिद्वारेण। तथाच श्रुतिः 'आयुर्घृतम्' इति। या द्वितीयस्थानदुग्धा, सा विश्वव्यचाः 'व्यच सम्भवे' विश्वं ततः सम्भवति यज्ञद्वारेण। या तृतीयस्थानदुग्धा, सा विश्वधाया, विश्वं धापयतीति विश्वधाया, सर्वस्य क्षीरेण तृप्तिं करोतीत्यर्थः।

पृथग्भवतो दुग्धविप्रुषोऽनुमन्त्रयत -

**हुतः स्तोकोऽहुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याम्।।**

यः स्तोको बिन्दुः, यश्च द्रप्सः स्थूलो भूमौ पतितः, स सर्व एवाहुतोऽपि हुतोऽस्तु। कस्मै। अग्नये, बृहते महते, तथा नाकाय नास्मिन् अकं दुःखमस्तीति कृत्वा स्वर्गाय। द्यावापृथिवीभ्यां च स्वाहा सुहुतमस्तु।

द्यौरन्तरिक्षमिति यत्र पात्रे दोहः कृतस्तस्मादुःखायां क्षीरे आसिक्ते सति यत्किञ्चन दोहभाण्डे लग्नं, तदद्भिः प्रक्षाल्य स्थाल्यां निक्षिपति -

**सम्पृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः। मन्द्रा धनस्य सातयः।।**

हे आपः संपृच्यध्वं पयसोखास्थेन। ऋतावरीः सत्यवत्यः, यज्ञवत्यो वा तत्साधनत्वात्। केन। ऊर्मिणा कल्लोलैः। मधुमत्तमा मधुरतमरससंयुक्ताः। मन्द्रा, 'मदी-हर्षे' मादयित्र्यः, तथा धनस्य सातयः साधिकाः।।

दुग्धे दध्यासिञ्चति -

**इन्द्रस्य त्वा भागं सोमेनातनच्मि।।**

हे पयः त्वां सोमेन दध्ना आतनच्मि सङ्कोचयामि, तञ्चिः सङ्कोचनार्थः। कीदृशं त्वाम्। इन्द्रस्य भागं भजनीयम्।

गार्हपत्यसमीपे पयः स्थापयति -

**अदस्तमसि विष्णवे।।**

दसु उपक्षये अदस्तमनुपक्षीणं हे पयः यतस्त्वं विष्णवे विष्ण्वर्थं यज्ञोपयोगीत्यर्थः। 'यज्ञो वै विष्णुः' इति श्रुतिः।

हविरभिमन्त्रयते -

**विष्णो हव्यं रक्षस्व।।**

हे विष्णो इदं हव्यं हवनीयं रक्षस्व।

सजलेन दारुपात्रेण उखां पिदधाति -

**आपो जागृत।।**

हे आपः जागृत रक्षार्थं जागरूका भवत। तृतीयोऽनुवाकः।। ३।।

**कस्त्वा युनक्ति स त्वा युनक्तु विष्णुस्त्वा युनक्त्वस्य यज्ञस्यर्द्ध्यै।।**

यज्ञादिकं प्रस्तुतं कर्मैवमुच्यते। कः प्रजापतिः, हे कर्मन्, त्वां युनक्ति सम्पादयति फलेन वा योजयति। स इत्यपि प्रजापतेरेव निर्देशः परोक्षरूपेण। अभ्यासे भूयांसमर्थं मन्यन्ते यथा अहो रमणीया अहो रमणीयेति। विष्णुर्यज्ञः, स च प्रजापतिरेव। यज्ञस्त्वा युनक्तु फलेन संवर्धयतु। किमर्थम्। अस्य प्रारब्धस्य यज्ञादिकस्य कर्मणः समृद्ध्यै माहात्म्याय। सावित्र्यनुवाकवदनुवचनमस्य।

**अमुष्मै कामायायुषे त्वा प्राणाय त्वा व्यानाय त्वापानाय त्वा व्युष्ट्यै त्वा रय्यै त्वा राधसे त्वा पोषाय त्वा घोषाय त्वाराद्घोषाय त्वा प्रच्युत्यै त्वा।।**

अत्र प्रत्येकं तर्पयामीत्यध्याहृत्य योजनीयम्। अमुष्मै कामाय त्वां प्रजापतिं तर्पयामि। असावित्युक्ते नाम प्रतीयात्। तेन 'अमुष्मै' इत्यस्मात्काम्यमानपशुपुत्रादिफलविशेषनामानि प्रत्येतव्यानि। आयुषे आयुरर्थं त्वां तर्पयामि। सर्वत्र तादर्थ्ये चतुर्थी। व्युष्ट्यै त्वां तर्पयामि 'उष दाहे' विशेषेण अविद्यास्मितारगद्वेषाभिनिवेश-

लक्षणानां क्लेशानाम् उष्टिः, तदर्थम्। रयिर्धनं, तदर्थम्। राधोऽन्नम्। पोषस्तत्त्वज्ञानस्य, तदर्थम्। प्रकर्षेण च्युतिः संसारस्य, तदर्थं त्वां प्रजापतिं तर्पयामि।

**अग्नये वायवे सूर्याय ब्रह्मणो इन्द्राय प्रजापतये भवाय शर्वाय ईशानाय ईश्वराय विष्णवे बृहस्पतये यजुर्वेदाय छन्दोभ्य ऋषिभ्यो वेदेभ्यो ब्राह्मणेभ्यः सोमेभ्यः सोमपेभ्य आचार्येभ्यो नमो नमः।।**

इत्युदकतर्पणमाचाराध्यायोक्तमदोऽप्यध्यायोपाकरणम्।

**।। इति नवमी काण्डिका।। ९।।**



## ।। अथ दशमी काण्डिका ।।

**अथोपनिषदार्हाः ।। १ ।।**

शिष्या उच्यन्ते इति शेषः। अध्यायोपाकरणानन्तरमध्ययनप्रसङ्गेनोपनिषदं रहस्यशास्त्रं येऽर्हन्ति, ते उपनिषदर्हाः शिष्याः नैष्ठिकब्रह्मचार्यादय उच्यन्ते।। १।।

**ब्रह्मचारी सुचरिती मेधावी कर्मकृद्धनदः प्रियो विद्यया वा विद्यामन्विच्छंस्तानि तीर्थानि ब्रह्मणः ।। २ ।।**

ब्रह्मचारी नैष्ठिकब्रह्मचर्ययुक्तः, सुचरितमस्यास्तीति सुचरिती सदाचारो गृहस्थादिरपि। मेधावी ग्रहणधारणशक्तियुक्तः। कर्मकृत् नित्यनैमित्तिककर्मानुष्ठानरतः गुरुपरिचर्याचरणकारी च। धनदः प्रचुरधनदाने समर्थः ग्रहणान्ते गुरुदक्षिणावसाने, नतु पूर्वं निषिद्धत्वात् - 'न पूर्वं गुरवे किञ्चिदुपकुर्वीत धर्मवित्' इति। प्रियः पुत्रादिः सदाचारः। यश्च विद्यया विद्यान्तरमादित्सते, तानि ब्रह्मणस्तीर्थानि वेदस्य रहस्य रूपस्य दाने निपानानि ग्रहणे चोपाया इत्यर्थः। तीर्थं हि निपानं स्मृतम्।

'तीर्थाभिधानमिच्छन्ति त्रितयं कृतबुद्धयः।
शास्त्रं चैव निपानं च वारि चाप्यृषिसेवितम्।।' इति।। २।।

**।। इति दशमी काण्डिका ।।**



## ।। अथ एकादशी काण्डिका।।

**नवं नवावसानं समं समवस्रावं समवस्रुत्य वा यस्माद्वा प्रागुदीचीरापो निर्द्रवेयुः प्रत्यगुदीचीर्वा तस्मिन्प्राग्द्वारं दक्षिणद्वारं वा शरणं कारयेत्।। १।।**

अध्याहिताग्निं वक्ष्यति। तत्सम्बद्धमिदमनागतावेक्षणेनाभिधीयते। सहधर्मचारिणीमुद्वोढुकामस्तस्मिन्देशविशेषे शरणं कारयेत् स्थपत्यादिभिर्विवहनात्पूर्वमेव। कीदृशं शरणम्। प्राग्द्वारं दक्षिणद्वारं वा। तथा नवम् अन्यानुपयुक्तदार्वादिनिर्मितम्। नवावसानम् अवसानं भूप्रदेशः नवप्रदेशमित्यर्थः। सममनिम्नोन्नतम्। समूलं प्रशस्तक्रीडाकुसुमादिमूलयुक्तम्। समवस्रावं समोऽवस्रावो यत्र तत्समवस्रावम्, उदकं प्रक्षिप्तं यत्र समं कृत्वा स्रवति सञ्चरति, तत्समवस्रावम्, अतिरश्चीनमित्यर्थः। समवस्रावं यद्भूमण्डलं तस्मिन्निति सम्बन्धः। समवस्रुत्य वा यस्मात्प्रागुदीच्यः आपो निर्द्रवेयुः, प्रत्यगुदीच्यो वा निर्हरेयुः निर्गच्छेयुः। अथवा प्रतीचीमुदीचीं वा यत्रापो गच्छन्ति, तस्मिंस्तिरश्चीनेऽपि शरणं कारयेत्।। १।।

**मध्यमायाः कर्ते प्रागग्रोदगग्रान्दर्भानास्तीर्य तेषु स्थूणामवदधाति।।**

**ध्रुवां सिनोम्यमृतस्य पत्नी क्षेमे तिष्ठ घृतमुक्षमाणा। तां त्वा स्थूणे सर्ववीराः सुवीरा अरिष्टवीरा इह संविशेम।।**

**इहैव स्थूणे अमृतेन रोहाश्वावती गोमत्यमृतावती सूनृतावती। ऊर्जस्वती पयस्वती चास्मान्स्थूणे पयसाभ्याववृत्स्व।।**

**आ त्वा कुमारस्तरुण आ वत्सो जगता सह। आ त्वा परिस्रुतः कुम्भ आ दध्नः कलशैरयमिति।। २।।**

मध्यमायाः स्थूणायाः स्तम्भस्य सम्बन्धिनि कर्ते 'कृती च्छेदने' कृत्यते इति कर्तः खातः गर्तस्तस्मिन्, प्रागग्रानुदगग्रान्वा स्वस्तिकसन्निवेशभाजो दर्भानास्तीर्य, तेष्वेव दर्भेष्वधिकरणभूतेषु स्थूणां स्तम्भं मध्यममवदधाति प्रक्षिपति।

प्रक्षेपे चेदं मन्त्रत्रयमाह ध्रुवामित्यादि -

हे स्थूणे त्वां ध्रुवां दृढां कृत्वा सिनोमि प्रक्षिपामि गर्ते। त्वं हि अमृतस्य अमरणधर्मकस्य पत्नी पालयित्री। अतः क्षेमे तिष्ठ क्षेमनिमित्तं तिष्ठ। किं कुर्वती।

घृतमुक्षमाणा ददती घृतग्रहणं सर्वसम्पदुपलक्षणार्थम्। यत एवंभूतासि, असस्तां त्वां हे स्थूणे वयमाविशेमेत्याशास्महे। प्रविष्टाश्च सन्तस्त्वदायत्तं गृहमिहैव जन्मनि सर्ववीराः बहुपुत्राः, सुवीराः सुपुत्राः, अरिष्टवीराः अनुपहिंसितपुत्राश्च स्याम।

हे स्थूणे इहैव स्थाने अमृतेनाविनाशिना रूपेणोपलक्षिता सती रोह रूढा भव। कीदृशी सती। अश्वावती अश्वयुक्ता। एवं गोमती। अमृतैश्च गृहमानुषैर्युता सती। सूनृतं सत्यं वैदिकं च कर्म यागादिकं, तद्वती। ऊर्जस्वती 'ऊर्ज बलप्राणनयोः' प्राणयन्ती बलवती वेत्यर्थः। पयस्वती क्षीरवती। सर्वसमृद्धियुक्तमस्मद्गृहं कुर्वित्यर्थः। अत एवाह, 'अस्मान्स्थूणे पयसाभ्यावववृत्स्व' हे स्थूणे अस्मान् पयःप्रभृतिना आभिमुख्येन वर्तमानेन आववर्तयस्व। किञ्च त्वां कर्मभूतां कुमारस्तरुण आविशतु, वत्सश्च आविशतु। एकवचनं व्यत्ययेन, बहुवचनस्थाने। जगता जङ्गमेन गर्भवासादिना परिस्रुतः परिवृतो दुग्धस्य कुम्भस्त्वाविशतु अयं दध्नः कलशैः सह।। २।।

**प्राञ्चं वंशं समारोपयति ऋतेन स्थूणामधिरोह वंशोग्रो विराजन्नपसेध शत्रून्। अथा रयिं सर्ववीरा वयन्त इति।। ३।।**

मन्त्रमाह ऋतेन स्थूणामिति -

विराट्। हे वंश ऋतेन सत्येन अपातिना रूपेण त्वं स्थूणामधिरोह स्तम्भस्योपरि तिष्ठ। कीदशः। उग्रः अनभिभवनीयः सन् विशेषेण राजमानः। अन्यच्च अपसेध नाशय शत्रून् आत्मीयान् स्थितिप्रतिबन्धहेतुभूतान्, आस्माकांश्च। स्तम्भाधिष्ठात्री देवतैवमभिधीयते। एवं च शत्रून् अस्मदरींश्चाभिभूय निश्चिन्तं गृहाधिष्ठातरि त्वयि स्थिते सति, अथा अनन्तरं तव वयमेव सर्ववीराः बहुपुत्रयुक्ताः रयिं धनं भविष्यामः प्रतिदिनं हविर्दानेन रयिं धनं भविष्यामः, प्रतिदिनं हविर्दानेन वयमेव हि ते स्वभूताः। इतिशब्दो मन्त्रसमाप्तिप्रतीकः। मध्यमवंशस्तम्भयोः मन्त्रविनियोगादितरस्तम्भवंशानाममन्त्रकं तूष्णीमेवारोहणं शस्यते।

**उत्तरपूर्वं समाधानम्।। ४।।**

'प्राञ्चं वंशं समारोपयति' इति, 'प्राग्द्वारं दक्षिणद्वारं वा शरणं कारयेत्' इति चोक्तम्। तत्र प्राग्द्वारतापक्षे पूर्वाग्रता वंशसमाधानस्य भावयितव्यैतदर्थमिदं सूत्रम्। समाधानं सम्यगाधानं वंशस्यारोपणं कुड्यकोटिषु।

**।। इति एकादशी काण्डिका।। ११।।**

## ।। अथ द्वादशी काण्डिका।।

**'अमी वहा वास्तोष्पते' इति चतसृभिर्वास्तोष्पतीयस्य स्थालीपाकस्येष्ट्वाथ वास्त्वाविशेत्।। १।।**

अथ विवाहे कृते वैवाहनाग्नौ प्रवेशितेऽनन्तरमध्याहिताग्निको वास्त्वाविशेत्।। वसन्त्यस्मिन्निति वास्तु गृहम्। किं कृत्वा प्रविशेत्। वास्तोष्पतीयस्य स्थालीपाकस्येष्ट्वा। वास्तोर्गृहस्य पतिरधिष्ठात्री देवता वास्तोष्पतिः मयूरव्यंसकादित्वात्सुपोऽलुङ्निपातनम्। वास्तोष्पतिर्देवता यस्य स वास्तोष्पतीयः। 'वृद्धाच्छः' (४.२.११४) व्यत्ययेन षष्ठी। स्थालीपाकेनेष्ट्वा, अवयवावयविसम्बन्धेन वा, नहि समस्तोऽसौ हूयते भक्ष्यसंरक्षणात्। ननु चेष्ट्वा आविशेदित्युक्तमयुक्तं प्रविश्य यजनात्? सत्यं, किन्त्वध्यवसायपौर्वकाल्येन, नेत्रे सम्मील्य हसतीत्यादिवत्। याजयित्वेति वा णिजर्थो योजनीयः। निर्वापस्यामन्त्रकस्येष्टत्वात् 'अमी वहाः' इत्यादिना, 'चतसृभिः' इत्यन्तेन शिष्यहितार्थं चतस्रः पठित्वार्पयति।।

**अमी वहा वास्तोष्पते विश्वा रूपाण्याविशन्।**
**सखा सुशेव एधि नः।। १।।**

**वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽनमीवो भवा नः। यत्त्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे।। २।।**

**वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो। अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व।। ३।।**

**वास्तोष्पते शग्मया संसदाते सक्षीम हिरण्वया गातुमत्या। पाहि क्षेम उत योगे वरन्नो यूयं पात स्वस्तिभिः सदा नः।। ४।।**

प्रथमा गायत्री। अन्यास्त्रिष्टुभः। वास्तोष्पतिरन्तरिक्षनिवासी वायुः, यद्वा प्राणः। हे वास्तोष्पते गृहस्वामिन्, विश्वेषां सर्वेषामस्मत्परिजनानां रूपाणि स्वरूपाणि आविशन् अधितिष्ठन् अमी अमून् परिजनानावह प्रापय पूर्वमेतानेव गृहं प्रवेशय। प्रथमं परिजनस्य गृहप्रवेशमनुजानीहि पश्चादस्माकमिति भावः। एवमेवानुतिष्ठन्नोऽस्माकं सखा मित्रं सुप्रवेशनीयो भव।

हे वास्तोष्पते प्रतिजानीह्यस्मान् गृहपतिः परमः सन् अस्मानप्यवान्तर-स्वामितयाङ्गीकुर्वित्यर्थः। स्वावेशः सुखप्रवेशश्च नोऽस्माकं भव। तथानमीवो व्याधिशून्योऽस्माकं भव। किञ्च यत्तुभ्यं किञ्चिदन्नो हविरादिकं, तन्नोऽस्माकं सम्बन्धि जुषस्व भजस्व। तथा शं सुखं नो भव द्विपदे मानुषरूपे, चतुष्पदे गवाश्वादिके।

हे वास्तोष्पते नः अस्माकं प्रतरणः प्रकर्षेण संसारसागरक्लेशतरणः एधि भव। 'अस-भुवि-लोट्', सिपि ह्यादेशः। 'हुझल्भ्यो हेर्धिः' (६.४.१०१) इति धित्वं 'घ्वसोरेद्धावभ्यासलोपश्च' (६.४.११९)। गयस्फानः गयं गृहं, गृहे स्फीतः सन् गोभिरश्वैश्च सहितः हे इन्दो परमेश्वर ते तव सख्ये वर्तमाना वयमजरासः अजीर्णाः स्याम। त्वं च नोऽस्मान्प्रतिजुषस्व प्रीणीहि। क इव कान्। पितेव पुत्रान्।

हे वास्तोष्पते या त्वां संसदाते सेवते विभूतिस्तया वयमपि सक्षीम षच समवाये युज्येमहि। कीदृश्या। शग्मया सुखरूपया, हिरण्वया हितरमणीयया हिरण्य-युक्तया वा, गातुमत्या कीर्तिरूपगानयुक्तया उद्गातृगीतयुतया च। यच्चास्माकं किञ्चिद्वरमुत्कृष्टं त्वत्प्रसादोपनतं, तत्सर्वं पाहि रक्ष। किं कुर्वन्। अलब्धलाभात्मके योगे, प्राप्तपरिरक्षणरूपे च क्षेमे वर्तमानः। उतशब्दश्चार्थे। किंवा विशेषेण वास्तो-ष्पतिरेव प्रार्थ्यते। हे गृहदेवताः एवं सर्वा एव यूयं नोऽस्मान् स्वस्तिभिरविनाशैः पात रक्षत सर्वकालम्।। १।।

**वंशोद्वीक्षणिकान्ब्राह्मणान्भोजयेत्।। २।।**

तस्मिन् गृहे ब्राह्मणान् भोजयेत्। तस्य च कर्मणो वंशोद्वीक्षणिकमिति नाम। ते हि वंशानुद्वीक्षमाणा भुञ्जते।। २।।

**।। इति द्वादशी काण्डिका।। १२ ।।**



## ।। अथ त्रयोदशी काण्डिका।।

**अथ पाकयज्ञाः।। १।।**

सहधर्मचारिण्या सार्धं यो गृहप्रवेशः, तदनन्तरं पाकयज्ञाः कर्तव्यास्तदनुष्ठानावसरलाभात्। पाकनिर्वर्त्या यज्ञाः पाकयज्ञास्तेषामासूत्रणमात्रमिह क्रियते, विस्तरेण ते वक्ष्यन्ते।। १ ।।

**चतुर्विधः पाकयज्ञो भवति, हुतोऽहुतः प्रहुतः प्राशितश्चेति।। २।।**

बहुवचनेनोपक्रान्तानामिहैकवचनं यज्ञत्वसामान्यापेक्षया एकस्यैव चातुर्विध्यं प्रत्यक्षस्येव चाक्षुषादिभेदेनेति प्रदर्शनाय। चतुर्णामेवावान्तरभेदाः षट्। यानाह गौतमः - 'अष्टकाः पार्वणश्राद्धं श्रावण्याग्रहायणी चैत्री आश्वयुजी च।' इति 'षट्पाकयज्ञसंस्थाश्च' इति। तत्र हुतो हवननिर्वर्त्यो वैश्वदेवादिः। अहुतस्त्वहवनसाध्यो बल्युपहारादिः। यस्य तु प्रारम्भे हवनं, स प्रहुतोऽन्वष्टकादिः। प्रकृष्टेनाशनेन निर्वर्त्यते योऽतिथिब्राह्मणभोजनादिः, स प्राशितः। सर्वश्चायं यागो देवतोद्देशेन द्रव्यसङ्कल्पनात्।। २।।

**हुतो हुतानाम्।। ३।।**

प्रकृतिरिति शेषः। इहत्यानां हुतानां वैदिको होमः प्रकृतिरित्यर्थः। यतः इतिकर्तव्यतोपजीव्यते, सा प्रकृतिः। योपजीवति, सा विकृतिः। तथाच वैश्वदेवे प्राकृताः समूहनपर्युक्षणपरिस्तरणस्वाहाकारान्नप्रक्षेपादयः क्रियाः क्रियन्ते।। ३।।

**उपहारोऽहुतानाम्।। ४।।**

वैदिक उपहारोऽत्रत्यानामुपहाराणां प्रकृतिः। अत्रोपाग्नि विष्टरमास्तीर्यावाहनं कृत्वा स्रजो गन्धांश्चोपहृत्य धूपं प्रदाय बल्युपकल्पनमिति इतिकर्तव्यता।।

**पिण्डपितृयज्ञः प्रहुतानाम्।। ५।।**

वैदिकः पिण्डपितृयज्ञोऽत्रत्यानां प्रहुतानां प्रकृतिः। वैश्वदेवशेषपिण्डप्रतिपत्तित्वात्तदीयपिण्डमन्त्रग्रासासनदानादयश्च तद्धर्मा भवन्त्यतिदेशात्।। ५।।

**मधुपर्को ब्रह्मौदनश्च प्राशितानाम्।। ६।।**

प्राशिता द्विविधा अतिथिभोजनदानात्मानो ब्राह्मणभोजनवितरणात्मानश्च। तत्रातिथिभोजनादावस्यातिथ्ये वैदिको यो मधुपर्कः, स प्रकृतिः। तत्र च श्रोत्रियाणां पाद्यार्घ्यमधुपर्कपूर्वं मांसप्रधानं भोजनमित्यादिर्विध्यन्तः। देवताविशेषोद्देशेन तु ब्राह्मणभोजनदाने आधानविहितो ब्रह्मौदनः प्रकृतिः, तत्रापि बर्हिर्युक्तेष्वासनेषु उपवेशनम् अर्घ्यदानादिकं सघृतमन्नं देवतायै सङ्कल्प्य, 'प्राश्नन्तु भवन्तः' इत्यनुज्ञानपूर्वकं चाशनमित्यादिरित्थंभावः।। ६।।

**दर्शपूर्णमासप्रकृतयः पाकयज्ञाः।। ७।।**

साधारणेतिकर्तव्यतातिदेशोऽयम्। असाधारणास्तु पूर्वमितिकर्तव्यता निदर्शिताः।। ७।।

दार्शपौर्णमासिके विध्यन्ते अविशेषेण प्राप्ते क्वचिदपवादमाह -

**तेष्वावृदुपचारस्तूष्णीम्।। ८।।**

आवृत् क्रिया। उपचारोऽनुष्ठानम्। तूष्णीं निर्वापावघातादिक्रियानुष्ठानममन्त्रकमित्यर्थः।।

**अनर्थलुप्तम्।। ९।।**

यल्लुप्तार्थं निष्प्रयोजनं, तत्प्रकृतौ दृष्टमपि न कर्तव्यं विकृतावमन्त्रकमपि। यथा पेषणकपालोपधानादि स्थालीपाके निष्प्रयोजनम्। एवं सामिधेनीनां लुप्तत्वात् समिदाधानं लुप्तार्थत्वान्न कर्तव्यं प्रयाजाभावाच्चोपभृत्। सामिधेन्याद्यभावस्तु वक्ष्यमाणात्परिसंख्यानात्। नचैतावता दर्विहोमगृहमेधीयादिवदपूर्वत्वं पाकयज्ञानां किं दर्शपूर्णमासप्रकृतित्वाभिधानेनेति वाच्यं जुहूहोमादिधर्मोपजीवनात्।। ९।।

**।। इति त्रयोदशी काण्डिका।। १३।।**



## ।। अथ चतुर्दशी काण्डिका।।

**उदगयने भार्यां विन्देत।। १।।**

'स्नात्वा भार्यामधिगच्छेत्' इति स्नानानन्तरं भार्यान्वेषणकालः। भरण-मर्हतीति भार्या। 'अर्हे कृत्यतृचश्च' (३.३.१६९) इति ण्यत्। विन्देत लभेत पश्ये-दित्यर्थः। उदगयने आदित्यस्य दक्षिणदिग्भागादुत्तरदिग्भागाभिमुखगमने सति उत्तरा-यण इत्यर्थः।। १।।

नक्षत्राण्याह -

**कृत्तिकास्वातिपूर्वैर्वरयेत्।। २।।**

कृत्तिका च स्वातिश्च पूर्वाणि च तैर्वरयेत् कञ्चित्प्रयुञ्जीत, न तु स्वयं वृणुयादित्यौचित्यं णिचा दर्शयति।। २।।

**लक्षणिना लक्षणानि परीक्षयेत्।। ३।।**

हस्तादिलक्षणवेदिना लक्षणानि शुभसूचकानि परीक्षयेत्। पाठक्रमादर्थ-क्रमस्य बलीयस्त्वाद्यथार्थं क्रमो ज्ञेयः - लक्षणपरीक्षणपूर्वकं वरणमिति।। ३।।

लक्षणालाभे परीक्षायाः करणान्तरमाह -

**भागधेयमपि वा पिण्डैः परीक्षयेत्।। ४।।**

अपिशब्द उपायान्तराभ्युपगमे। वाशब्दो विकल्पे। पिण्डैर्वा भाग्यानि परीक्षयेत्, भर्तर्यनुकूलत्वापादनानि पूर्वोक्तालाभ इत्यर्थः।। ४ ।।

**वेद्याः सीताया ह्रदाद्गोष्ठादादेवनादादहनाच्चतुष्पथादिरिणात्सम्भार्यं नवमम्। ऋतमेव परमेष्ठ्यृतं नात्येति किञ्चन। ऋत इयं पृथिवी श्रिता सर्वमिदमियमसौ भूयादिति।। ५।।**

यज्ञार्था वेदिः प्रसिद्धा। सीता हलोत्खाता भूमिः। अशोष्यः पद्माद्याकरो जलाशयो ह्रदः। गोष्ठं गवाश्रयो गोकुलादिः। आदीव्यन्त्यस्मिन्नादेवनं कितवस्थानम्। आदह्यन्तेऽस्मिन्नित्यादहनं श्मशानम्। स्वस्तिकाकारेण सम्बध्यमानं मार्गद्वयं चतुष्पथः।

इरिणम् ऊषरप्रदेशः। एतेभ्यः प्रत्येकैकं पिण्डं गृह्णीयात्। सम्भार्यं च नवमम्, अष्टभ्योऽपि वेद्यादिभ्यो लेशं लेशं मृदः सम्भृत्य, नवमं कुर्यादित्यर्थः।

वेद्यादिभ्य उद्धृतानां पिण्डानामनुमन्त्रणे मन्त्रमाह, 'ऋतमेवे'ति। इतिशब्दः सर्वप्रतीकार्थः। परमेष्ठी प्रजापतिः। ऋतं सत्यं नात्येति नातिवर्तते किमपि। अतः सोऽत्र सन्निहितो भूत्वा सत्यं द्योतयतु। इयमपि वेद्यादिरूपा पृथिवी ऋते आश्रिता। असावित्युक्ते नाम प्रतीयात्। कन्या उच्यते असौ शोभावत्यादिसंज्ञिता। इयं प्रत्यक्षत्वेन वर्तमानत्वात्। इदं भूयः सत्यप्रकाशयोः।। ५।।

**कन्यायाः नाम गृहीत्वा सर्वतः कृतलक्षणान्पिण्डान्पाणावादाय कुमार्या उपनामयेदेतेषामेकं गृहाणेति ब्रूयात् पूर्वेषां चतुर्णामेकं गृह्णतीमुपयच्छेत्।। ६।।**

वेदिसीताह्रदगोष्ठोद्धृतानामन्यतमं गृह्णीयाच्चेत्तदोद्वहेदेनाम्, इतरग्राहिणीं तु वर्जयेत्।

'वेदिपिण्डे हि वेदार्थक्रियासाहाय्यमावहेत्।
प्रजावतीति सीतायां गोष्ठपिण्डे गवादिकम्।।
ह्रदपिण्डे ह्रदोद्भूतकुसुमाभरणोचिता।
तृप्तिदा चैत्यहेतुश्च भर्तृजीवनकारिणी।।
श्मशाने विधवावश्यं द्यूतभूमौ कलिप्रिया।
इरिणे नित्यसन्तप्ताऽवकीर्णा च चतुष्पथे।।'

**सम्भार्यमपीत्येके।। ७।।**

मन्यन्ते इत्यध्याहारः। गृह्णतीमुपयच्छेदित्यनुषङ्गः।। ७।।

**रोहिणी मृगशिरः श्रविष्ठोत्तरा इत्युपयमे।। ८।।**

उपयमः स्वीकारः, तत्रैवानुकूलानि नक्षत्राणि एतानीत्यर्थः।।

**यद्वा पुण्योक्तम्।। ९।।**

पुण्योक्तं ज्योतिःशास्त्रोक्तं यथासम्भवमनुसर्तव्यमित्यर्थः।।

**।। इति चतुर्दशी काण्डिका।। १४।।**



## ।। अथ पञ्चदशी काण्डिका ।।

**अथ ब्राह्मदेयायाः प्रदानविधिं वक्ष्यामः ।। १ ।।**

ब्राह्मेण विधिना या दीयते सा ब्राह्मदेया। तस्याः प्रकृष्टे दाने विधिमितिकर्तव्यतां वक्ष्यामः। अथेत्यधिकारार्थः। ब्राह्मौ दैव आर्षः प्राजापत्य आसुरो गान्धर्वो राक्षसः पैशाच इत्यष्टौ विवाहाः। तत्र ब्राह्मासुरव्यतिरेकिणां षण्णां विधानं सुप्रथितं नेह वचनमर्हति। तेन ब्राह्मासुरयोरेवेतिकर्तव्यतोक्ता। तथाहि प्रसह्यपहारात् राक्षसो विवाहः, तत्र किं प्रकाराभिधानेन। एवमसंविज्ञातोपगमात्पैशाचोऽपि प्रकारवचनानर्होऽतिपापत्वात्। स्वयमिच्छन्त्या सहेच्छावतः संयोगो गान्धर्वः, तत्राप्यसाधारणेतिकर्तव्यता। सह धर्मश्चर्यतां, सहापत्यमुत्पाद्यतां, धर्मे चार्थे च कामे च न व्यभिचरितव्यमिति प्राजापत्यविधिः प्रथितः। अलङ्कृत्य कन्यान्तर्वेदि ऋत्विजे प्रदीयते - इति दैवो विवाह उक्तः स्मृतिकारैः। गोमिथुनं कन्यावते दद्यादित्यार्षस्य विधानम्।। १।।

**शुक्लपक्षस्य पुण्याहे पर्वणि वोदगग्रान्दर्भानास्तीर्य तेषूपविशतः प्राङ्मुखः प्रतिग्रहीता सामात्यः प्रत्यङ्मुखः प्रदाता ।। २ ।।**

शुक्लपक्षस्य सम्बन्धिनि प्रशस्ते ज्योतिःशास्त्रविशुद्धे दिवसे पर्वणि वा पौर्णमासीरूपे, विष्टरविशेषे पवित्रार्थमुत्तरदिगग्रान्दर्भानास्तीर्य, तेषु तयोर्दातृप्रतिग्रहीत्रोरुपविशेत् प्राङ्मुखो भूत्वा। कः। प्रतिग्रहीता। कीदृशः। सामात्यः परिजनसहितः। प्रदाता पुनः प्रत्यङ्मुख उपविशेत् तथैव सामात्यो दर्भानास्तीर्योदगग्रान्।। २।।

**मध्ये प्रागग्रोदग्रान्दर्भानास्तीर्य तेषूदकं सन्निधाय व्रीहियवानुप्य दक्षिणत उदङ्ङासीन ऋत्विगुपयमनं कारयेत् ।। ३ ।।**

तयोर्दातृप्रतिग्रहीत्रोर्दक्षिणदेशे उत्तराभिमुख उपविष्टः सन् ऋत्विग्विशेषः आचार्यस्तयोः उपयमनं दातृप्रतिग्रहीतृसम्बन्धं कारयेत्। किं कृत्वा। दातृप्रतिग्रहीत्रोर्मध्ये प्रागग्रानुदगग्रांश्च दर्भानास्तीर्य, तेषु च दर्भेषु कांस्यपात्र्यामुदकं सन्निधाय, तत्रोदकमध्ये व्रीहियवस्यावपनं कृत्वा। अथ 'उदकं सन्निधाय' इति सामान्यवचनात्कंसस्य कुतो लाभः। 'कंसे हिरण्यं समुप्य' (१६.५) इति दर्शनात्।। ३।।

**समेतेष्वाह ददानीति प्रतिगृह्णामीति त्रिरावेदयते।। ४।।**

समेतेषु सङ्घटितेषु दातृप्रतिग्रहीतृबन्धुषु सत्सु ऋत्विग्ब्रूयात्, दातुस्तावदिदं ब्रूयात् कन्यास्मै प्रदीयतामिति, प्रतिग्रहीतुः कन्यास्मात्प्रतिगृह्यतामिति। ततो ददानि ते, ददानि ते, ददानि ते इति त्रिरुच्चारयेति दातारं बोधयेत्। दाता च तथैव कुर्यात्। एवं प्रतिगृह्णामि इत्यपि ऋत्विजावेदितः प्रतिग्रहीता ब्रूयात्। 'त्रिःसत्या हि देवाः' इति श्रुतिः, 'त्रिरभिहितं न व्यभिचारि भवति' इति त्रिरुच्चारणमिष्टमत एव समेतेष्वाहेत्युक्तम्। बहुजनसन्निधौ दत्तां प्रतिगृहीतां च नापहर्तुं त्यक्तुं वा शक्ष्यतीति।। ४।।

**एतद्वः सत्यमित्युक्त्वा 'समाना वः', 'सं वो मनांसि' इति ऋत्विगुभौ समीक्षमाणो जपति।। ५।।**

एतद्दानप्रतिग्रहकर्म युष्माकं सत्यमव्यभिचरितमस्त्विति लौकिकोक्त्या ऋत्विक् 'समाना' इत्यादि ऋग्द्वयं जपति, उभौ दातृप्रतिग्रहीतारौ वीक्षमाणः।।

**समाना वा आकूतानि समाना हृदयानि वः।**
**समानमस्तु वो मनो यथा वः सुसहासति।। १।।**
**सं वो मनांसि सं व्रता समु चित्तान्याकरम्।**
**अमी ये विव्रताः स्थन तान्न सन्नमयामसि।। २।।**

अनुष्टुभौ। हे दातृप्रतिग्रहीतारौ वः युष्माकं सम्बन्धीन्याकूतान्यभिप्रायाः समानास्तुल्यान्येकरूपाणि आसति सन्तु, कस्यचिदपि कन्यापहराद्यभिप्रायो दुष्टो माभूदित्यर्थः। एवं मनः समानमस्तु, अहं च वो युष्माकं तथा आ अकरं करोमि जपेन, यथा सु सह असति सुष्ठु वः सहभावो भवति, तथा मनांसि समाकरं, व्रतानि च सम्मिलितानि करोमीत्यर्थः। एवं चित्तानि चैतन्यानि समाकरमिति योज्यम्। ये च युष्माकं मध्ये विव्रता विरुद्धाचाराः यूयमिति केचित्, अमी इति प्रत्यक्षं तानेव मुखविकारादिना दुराचारान्दर्शयति, स्थन भवथ, तान्न सन्नमयामसि नेतिवर्णोपजनः तान्वयं सन्नयामः सम्यक् नतान् कुर्मः सदाचारान् सम्पादयाम इत्यर्थः।। ५।।

**।। इति पञ्चदशी काण्डिका।। १५।।**



## ।। अथ षोडशी काण्डिका।।

आसुरविवाहविधिमाह -

**अथ शुल्कदेयायाः।। १।।**

प्रदानविधिरुच्यते इति शेषः। शुल्केन मूल्येन दीयते या, सा शुल्कदेया।।

**हिरण्यं व्यतिहरतः।। २।।**

सुवर्णं विजिगीषया परस्परं ददतो दातृप्रतिग्रहीतारावसुरत्वात्, दस्युविजिगीषुप्रधानत्वाच्चासुराणां राजसत्वेनान्योन्योपचारं कुरुत इति शस्यते। कन्यामूल्यभूतं तु सुवर्णं व्यतिहरतो निश्चिनुतो द्वौ दातृप्रतिग्रहीतारौ सम्भूयेत्यर्थद्वयं तन्त्रेणावगम्यते।।

**प्रजाभ्यस्त्वेति प्रददाति।। ३।।**

तत्प्रकृतं हिरण्यं प्रजाभ्यस्त्वेत्यनेन ददाति वरः कन्यायाः पित्रे, हे हिरण्य प्रजार्थं त्वामहं ददानि।। ३।।

**रायस्पोषाय त्वेति प्रतिगृह्णाति।। ४।।**

कन्यायाः पिता। रायस्पोषाय त्वां प्रतिगृह्णामि।। ४।।

**कंसे हिरण्यं समुप्य 'हिरण्यवर्णाः' इति चतसृभिः समवमृशन्ते।। ५।।**

तत्कन्यामूल्य भूतं हिरण्यं प्रतिगृहीतं कांस्यपात्रे निधाय जलयुक्तं 'हिरण्यवर्णाः' इति ऋग्भिश्चतसृभिः समवमृशन्ते उपस्पृशन्ति घोरपापविशुद्धये। बहुवचनं सर्वबन्ध्वपेक्षं सर्वेषां पापभागित्वप्रदर्शनाय। हिरण्यवर्णा इत्याद्याः समार्जनावसरे व्याख्याताः।।

**प्रजाभ्यस्त्वा ददानि। रायस्पोषाय त्वा प्रतिगृह्णामि।।**

इत्येतावन्तावेव मन्त्रौ केचित्प्रयुञ्जते वाक्यपरिसमाप्तेरिषे त्वेत्यादिवत्, अन्यमते तु प्रजाभ्यस्त्वानुप्राणन्तुं त्वं च प्रजाः अनुप्राणिहीति प्रथमस्य, सुप्रजार्थं च वीर्यार्थं च त्वामहं प्रतिगृह्णामीति द्वितीयस्य शेषः।

**।। इति षोडशी काण्डिका।। १६।।**



## ।। अथ सप्तदशी काण्डिका।।

अथ विवाहमाह -

**गौदानिकैर्मन्त्रैः कन्यामलङ्कृत्य चतुष्पादे भद्रपीठे प्रागासीनाया-श्चतस्रोऽविधवा माता पिता च गुरुः सप्तमस्तां सहस्रच्छिद्रेण पवित्रेण स्नापयित्वाहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोतीन्द्रायेन्द्राण्यै कामाय भगाय ह्रियै श्रियै लक्ष्म्यै पुष्ट्यै विश्वावसवे गन्धर्वराजाय स्वाहेति।। १।।**

पाठक्रमादर्थक्रमस्य बलीयस्त्वात्तदनुसारेण व्याख्या कर्तव्या यथा जातं जनिना जुहोति जातमतिप्राणितीति, तथाग्निहोत्रेण जुहोति यवागूमधिश्रयतीति। तेना-यमर्थः - पादचतुष्टयमुक्ते भद्रपीठे शोभने आसने प्राङ्मुख्या उपविष्टायाश्चतसृषु दिक्षु चतस्रोऽविधवा भवन्ति, वामभागे माता, दक्षिणभागे पिता, अग्रे गुरुः संस्कारस्य कर्ता सप्तमः। तेषु यथासन्निवेशं स्थितेषु गोदाने भवा गौदानिकास्तन्मन्त्रैस्तां गुरुः कन्यां सहस्रच्छिद्रयुक्तेन पवित्रण पावनेन वस्त्रविशेषेण सुप्रजस्त्वाय गौदानिकैरेव मन्त्रैः कटककेयूरादिभिर्यथाविभवमलङ्कृत्याहतेनानुपभुक्तेन वाससा प्रच्छाद्य स्थालीपाकेन गुरुर्जुहोति। अत्र पल्लवचतुष्टयं वस्त्रस्य पवित्रस्य चतस्रोऽविधवा अवष्टभ्नन्ति। पितरौ जलमभिषिञ्चतः। गुरुर्मन्त्रपाठं करोति। स्नापनेऽलङ्करणे च गुरुरेव प्रयोजककर्ता, तेन होमेन समानकर्तृकत्वम्। ये त्वलङ्करणं विपरीतलक्षणया केशवपनं व्याचक्षते, अमाङ्गलिकास्ते। स्थालीपाकस्येत्युपादीयमानगतत्वादेकत्वं विवक्षितं पशुगतैकत्ववत्। जुहोतीत्येकवचनम् एक एव होमो नवस्वप्याहुतिषु - इति प्रत्यभिज्ञानबलेन सूचयति, तेनैवाहुतीर्निगदति। विश्वावसवे गन्धर्वराजायेत्येकैवा-हुतिस्तेन नव भवन्ति। इन्द्रः परमेश्वरः। इन्द्राणी शची। कमनीयः कामः। भजनीयो भगः। ह्रीर्लज्जा। श्रीः श्रयणीया। लक्षणीया लक्ष्मीः। पोषः पुष्टिः। स्वाहा सुहुतमस्तु।।

**नाडीं तूणवं मृदङ्गं पणवं सर्वाणि च वादित्राणि गन्धोदकेन समुपलिप्य कन्या प्रवादयते 'स्वनं वद दुन्दुभे सुप्रजस्त्वाय गोमुख। प्रक्रीडयन्तु कन्याः सुमनस्यमानाः सहेन्द्राण्या कृतमङ्गलाः' इति।। २।।**

नाड्यादीनि सर्वाणि वादित्राणि गन्धोदकेन सुगन्धिनोपलिप्य पूर्वं कन्यैव प्रवादयते। वाद्यमानेषु च गुरुर्मन्त्रं पठति। तत्र नाडीवंशः, तूणवो गोमुखो वाद्यविशेषः। मन्त्रार्थस्तु हे दुन्दुभे पटह स्वनं वायुं वद वादय शब्दं कारय। किमर्थम्। सुप्रजस्त्वाय सत्प्रजार्थम्। एवं हे गोमुख स्वनं वदेति पूर्ववत्। प्रकीडन्तु अन्योन्यं कन्याः सखिभूताः प्रक्रान्तविवाहया कन्यया सहिताः। ता अपि हि कन्या एव भवितुमर्हन्ति समानशीलानां सखित्वस्यान्योन्यान्तरत्वात्। कीदृशः कन्याः। सुमनस्यमानाः सुमनस्का हृष्टा इत्यर्थः। इन्द्राण्या सह इन्द्राण्यप्यत्रोत्सवे क्रीडितुमवतरत्वित्याशास्यते। सुमङ्गला मङ्गलप्रधानगीतघोषिण्यः।

अथ गौदानिकमन्त्रा व्याख्यायन्ते -

**या आपो दिव्याः पयसा सम्बभूवु-**
**र्या अन्तरिक्ष्या उत पार्थिवासः।**
**तासां त्वा सर्वासां रुचाभिषिञ्चामि वर्चसा।।**

**अभि त्वा वर्चसाचिचं यज्ञेन पयसा सह। यथासो मित्रवर्धनस्तथा त्वा सविताकरत्। इन्द्राय स्वाहा।।**

पूर्वा विराट्। उत्तरानुष्टुप्। या दिव्या दिवि भवा आपो, याश्च अन्तरिक्ष्या अन्तरिक्षे भवाः, याश्च पार्थिवासः पार्थिव्यः, पयसा सम्बभूवुः, क्षीरेण यज्ञोपयोगिना सम्भूताः, तासां सर्वासां रुचा दीप्त्या वर्चसा च सारेण बलेन हे कन्ये त्वामभिषिञ्चामि यज्ञेन पयसा वर्चसा सह यज्ञादियोग्यां च करोमीत्यर्थः। मित्रस्य मेहनस्य स्वर्गपशुपुत्रादेरसौ यज्ञादेश्च वर्धनो यथा भवति, तथा सविता आदित्य अकरत् तव करोतु हे कन्ये। इन्द्राय सुहुतमस्तु।। २।।

**।। इति सप्तदशी काण्डिका।। १७।।**



## ।। अथ अष्टादशी काण्डिका।।

**यज्ञियस्य वृक्षस्य प्रागायतां शाखां सकृदाच्छिन्नां सूत्रतन्तुना प्रच्छाद्य सावित्रेण कन्यायै प्रयच्छति, 'या तेऽलक्ष्मीर्मातृमयी पितृमयी संक्रामणी सहजा वापि काचित्तां तिष्येण सह देवतया निर्भजामि निर्णुदामि सा द्विषन्तं गच्छतु तिष्यबृहस्पतिभ्यां नमो नमः' इति।। १।।**

यज्ञमर्हति यज्ञियः। 'यज्ञर्त्विग्भ्यां घखञौ' (५.१.७१) इति घः, यज्ञार्हाणां वृक्षाणां वटादीनामन्यतमस्य सम्बन्धिनीं शाखां सकृदाच्छिन्नां सूत्रतन्तुना प्राच्यां दिश्यायतां प्रसृतां सकृदेकेनैव प्रहारेण छिन्नामेकसारेण सूत्रतन्तुना प्रच्छाद्य कन्यायै प्रयच्छति 'देवस्य त्वा' इत्यादिना 'तां प्रयच्छामि' इति शब्दान्तेन। गुरुर्गृहीतशाखां कन्यामनुमन्त्रयते 'या ते' इत्यादिना।

हे कन्ये या ते तव काचिदलक्ष्मीरलक्षणं मातृमयी पितृमयी वा मातुः पितुर्वा सकाशात्संक्रान्ता बीजादिदोषात् अन्यतो वा कुतश्चित् संक्रान्ता, तामहमनेन मन्त्रेण निर्भजामि त्वां प्रति निर्भागां करोमि। किमेककः। नेत्याह तिष्येण देवतया सहकृतः, तथा निर्णुदामि निःशेषेण नुदामि अपसारयामि। सा चापसारिता सती द्विषन्तं तव शत्रुं गच्छतु। अलक्षणापसारे चोद्यतस्य मम विघ्नापसारणाय तिष्यबृहस्पतिभ्यां नमस्कारोऽस्तु। अन्ये तु 'तिष्यबृहस्पतिभ्यां नमो नमः' इत्येतं यजुरेकदेशमाच्छिद्य शाखोत्सर्गेऽपि प्रयुञ्जते।।

**तस्या उत्सर्गः स्थावरोदके शुचौ वा देवतायतने।। २।।**

स्थावरोदकं तडागादि। तत्र तस्याः शाखाया उत्सर्गः प्रतिपत्तिकर्म शुचौ देवगृहे। देवगृहं मद्योपहारशोणितादिना अपवित्रमपि सम्भाव्येत, तदर्थं शुचिग्रहणम्।।

**।। इति अष्टादशी काण्डिका।। १८।।**



## ।। अथ एकोनविंशी काण्डिका।।

**अथातो हविष्यकल्पं व्याख्यास्यामः।। १।।**

हविष्यकल्प इति पारिभाषिकी कर्मविशेषस्य संज्ञा।। १।।

**दशवार्षिकं ब्रह्मचर्यं कुमारीणां द्वादशवार्षिकं वा।। २।।**

वर्षदशकादूर्ध्वं कुमारी न स्थापयितव्या पित्रा, अगत्या वा द्वादश वर्षाणि नातिक्रमणीयानि।। २।।

**ब्रह्मचर्यान्ते गन्धर्वे देवकुले वा द्वावग्नी प्रज्वाल्य द्वौ पशू उपाकरोत्यर्यम्णे दक्षिणं प्राजापत्यमुत्तरम्।। ३।।**

ब्रह्मचर्यावसाने विवाहात्पूर्वं गन्धर्वे निर्निमित्तजलस्राविणि देशे, देवतायतने वा लौकिकौ द्वावग्नी प्रज्वाल्य, द्वौ पशू च्छागौ कन्यासंस्कारार्थमुपाकुर्यात्पशुकल्पवत्, एकमर्यम्णे दक्षिणभागवर्तिन्यग्नौ, द्वितीयं प्रजापतये उत्तरदिग्भागवर्तिन्यग्नौ। इति-कर्तव्यतां समन्त्रव्याख्यानां पशुकल्पे एव व्याख्यास्यामः।। ३।।

**असम्भवे त्वेकपशुः।। ४।।**

प्रचुरार्थाद्यभावे एक एव द्विदैवतः पशुरूपाकर्तव्यः। अदानानि च हृदयादिभ्यो मेदोऽन्तेभ्यो द्वादशेभ्यो द्विर्द्विर्ग्रहीतव्यानि। 'अर्यमप्रजापतिभ्यां स्वाहा' इति चोहः। एक एव च योगः संहतयोरेकदेशत्वधर्मसमवायात्। अत एवच केचित् हृदयादिभ्यो द्विगुणानि अवदानानि नेच्छन्ति।। ४।।

**तण्डुलैर्वा कुर्यात्।। ५।।**

धनदौर्गत्ये सति अहिंसानियमे वा तण्डुलैर्वा कुर्यात्। तण्डुलग्रहणं पिष्टकार्थम्।।

**यथास्थानं पशुर्यथास्थानमवदानानि तथा हविः।। ६।।**

यत्रैव स्थाने आज्यभागाभ्यां पूर्वो मुख्यपशुः, तत्रैव पिष्टकपशुः, अवदानान्यपि हृदयादिभ्यस्तद्वत्। तेषां च श्रपणहोमौ सर्वदान्यापीतिकर्तव्यता रशनाबन्धयूपनियोज-नोपायेन विशसनादिः। लुप्तार्थवर्जं हविः पशुपुरोडाशस्थाने स्थालीपाकस्तदपि यथा-स्थानं पशुपुरोडाशक्रमे, वपाहोमस्थाने त्वाज्यहोमः।। ६।।

**अग्निं सोमं वरुणं मित्रमिन्द्रं बृहस्पतिं स्कन्दं रुद्रं वात्सीपुत्रं भगं भगनक्षत्राणि कालीं षष्ठीं भद्रकालीं पूषणं त्वष्टारं महिषिकां च गन्धाहुति-भिर्यजेत।। ७।।**

सुगन्धचन्दनघनसारादिद्रव्ययुतेनाज्येनाहुतयो गन्धाहुतयः, ताभिरग्न्यादिकाः सप्तदश देवता यजेत। वात्सीपुत्र इति देवतानाम यतः शब्दैकसमधिगम्या देवता। विभक्तिविपरिणामेन चतुर्थ्यन्तैः स्वाहाकारयुक्तैः शब्दैरुद्दिश्याग्न्यादिदेवता यष्टव्याः, 'अग्नये स्वाहा' इत्यादिकैः।। ७।।

**।। इति एकोनविंशी काण्डिका।। १९।।**



## ।। अथ विंशी काण्डिका।।

**अथातो हविष्यपुण्याहः।। १।।**

इयमपि पारिभाषिकी संज्ञा। हविष्येण व्रीह्यादिना पुण्येऽहनि क्रियमाणता शब्दप्रवृत्तिनिमित्तम्।। १ ।।

**उदाकान्तं गत्वा यथोपपत्ति वा पयसि स्थालीपाकं श्रपयित्वा सर्वगन्धैः फलोत्तरैः सशिरस्कां स्नापयित्वाहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोतीन्द्राणी वरुणानी गन्धर्वाण्युदकान्यग्निर्जीवपुत्रः प्रजापतिर्महाराजः स्कन्दोऽर्यमा भगः प्रजानक इति।। २।।**

उदकस्य समीपं गत्वा अतिदूरतडागादिके तु ग्रामे, यथोपपत्ति यत्रोपपद्यते स्थाने, तत्र क्षीरे स्थालीपाकं कृत्वा माङ्गलिकबिल्वाक्षोटादिकफलोपेताभिः सर्वौषध्यादिगन्धयोगिनीभिश्चाद्भिरामलकैः कन्यां स्नापयेत्। सशिरस्कामित्यनेनान्यदा स्त्रीणामशिरस्कमपि स्नानं भवतीति सूचयति। स्नापनाहतवस्त्राच्छादनव्यवधानेन च स्थालीपाकेन होमः, स्नानाच्च पूर्वं स्थालीपाक इति विवक्षितः क्रमः। चतुर्थ्या देवतापदपरिणामः स्वाहाकारश्च पूर्ववत्। जीवपुत्रोऽग्निरित्येकैव देवता, जीवः प्राणो वायुः, पुत्रो रक्षकोऽस्येति बहुव्रीहिरन्यपदार्थप्रधानो योग्यश्च सन्निहितोऽग्निरेवान्यपदार्थः। महाराज इत्यत्र, 'न पूजनात्' (५.४.६९) इति प्रतिषेधो नास्ति नियमाश्रयणात् 'पूजायां स्वतिग्रहणं कर्तव्यम्' इति वचनात् अन्यथा हि परमराज इत्यादावपि टचः प्रतिषेधः स्यात्। ये तु महाराजा इत्याकारान्तं पठन्ति, ते स्वतिनियमं नाद्रियन्ते।

**।। इति विंशी काण्डिका।। २०।।**



## ।। अथ एकविंशी काण्डिका ।।

**यामेव द्वितीयां रात्रिं कन्यां विवाहयिष्यन्स्यात्तस्यां रात्र्यामतीते निशाकाले नवां स्थालीमाहृत्य पयसि स्थालीपाकं श्रपयित्वा सर्वगन्धैः फलोत्तरैः सशिरस्कां स्नापयित्वाहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोत्यग्नये सोमाय मित्राय वरुणायेन्द्रायोदकाय भगायार्यम्णे पूष्णे त्वष्ट्रे राज्ञे प्रजापतये इति ।। १ ।।**

एका विवाहाहोरात्ररात्रिस्तस्याः पूर्वा या द्वितीया रात्रिर्यस्यां पिता कन्यां विवाहयिष्यन्भवेत् विवाहयिष्यामीत्यनेनाध्यवसानेन युक्तः, अथवा यां भविष्यन्तीं रात्रिमधिकृत्य पिता कन्यां विवाहयिष्यन्स्यात्तस्या या पूर्वा द्वितीया रात्रिस्ता-माश्रित्येतिकर्तव्यताप्रवृत्तः सन् तस्यामेव रात्र्यामतीते मध्यमप्रहरद्वये महानिशाख्ये पूर्ववत्स्थालीपाकेन यागं कुर्यात् गुरुरग्न्यादिभ्यो देवताभ्यः ।। १ ।।

**एता एव देवताः पुंसः कुम्भं वैश्रवणमीशानं च यजेत ।। २ ।।**

पुंसोऽपि तस्यां रात्र्यां संस्कारार्थमेतयैवेतिकर्तव्यतया एता एव देवता यजेत कुम्भाद्याश्च तिस्रः इति। एतावानेव च विशेषः स्त्रियो द्वादशाहुतयः, पुंसः पञ्चदश ।। २ ।।

**।। इति एकविंशी काण्डिका ।। २१ ।।**



## ।। अथ द्वाविंशी काण्डिका।।

**चतस्रोऽष्टौ वाविधवाः शाकपिण्डीभिः स्त्रियोऽन्नेन च ब्राह्मणान्भोजयित्वा वीणागायिभिः सह संगायेयुरपिवा चतुरो नर्तनं कुर्यात्, 'क्रीडं वः शर्धो मारुतमनर्वाणं रथेशुभम्। कण्वा अभिप्रगायत।।' इति।। १।।**

अविधवा जीवद्भर्तृकाः। शाकमिश्राः पिण्ड्यः शाकपिण्ड्यः, 'भक्ष्येण मिश्रीकरणम्' (२.१.३५) इति तत्पुरुषः। चतस्रोऽष्टाविति च प्रथमान्तस्त्रीपदसमानाधिकरणम्। चतस्रोऽष्टौ वेति यथासम्भवं विकल्पः। समसंख्यानियमार्थमेतत्। चतुष्ट्वाष्टत्वनियमार्थमिति तु केचित्। तेनायमन्वयः अन्यूनाश्चतसृभ्योऽविधवाः स्त्रियः समसंख्याः षट्कवर्जाः शाकपिण्डीभिरन्यैश्च यथासम्भवद्भिर्भोजनविशेषैर्ब्राह्मणान्भोजयित्वा वीणया वाद्यमानया सह ये गायन्ति तच्छीलास्तैः सह सम्भूता भूत्वा मङ्गलगानं गायेयुः। ब्राह्मणभोजनानन्तरं मङ्गलगानावसरोऽत्र विवक्षितो, नतु समानकर्तृत्वेऽतीवादरः, तेन ते ब्राह्मणान्भोजयेयुरन्ये वा, सर्वथा ब्राह्मणभोजनानन्तरं मङ्गलगानं कर्तव्यम्। अपिवा चतुरो नर्तनं कुर्यात् चतुरो नर्तनप्रवीणो नर्तनं कुर्यात् यदि सौशील्यादिगुणयुक्तो भवेत्, विपर्यये तु न ताभिः सह नर्तनं कुर्यादित्यनेनाभिप्रायेणापिवाशब्दः। अनुष्ठानं त्वार्यावर्ते यथा दृश्यते, तथा ब्रूमः - कन्याया मातृप्रभृतयोऽष्टौ चतस्रो वाविधवा यथाविभवं भोजयित्वा ब्राह्मणांश्चाविधवाभिः सह वीणागायिभिश्च गायन्ति नृत्यन्ति सोत्साहम्। तदनुसारेणायमर्थः - चतस्रोऽष्टौ वा स्त्रियः कर्मभूता ब्राह्मणांश्च शाकपिण्डीभिरन्येन च भोज्यप्रकारेण भोजयित्वा वीणागायिभिः सहाविधवाभिश्च सङ्गायेयुः। के। अर्थात् कन्यामात्रादयः। अपिवेति समुच्चये। सकलोऽसौ स्त्रीगणश्चतुरः सोत्साहो भूत्वा नर्तनं कुर्यात्।। 'क्रीडं वः' इत्यनया गायत्र्यानुमन्त्रयते। व्याख्याता चेयं कृच्छ्रेषु।। १।।

**अक्षतसक्तूनामग्निं पुष्टिपतिं प्रजापतिं च यजेत, 'अग्निना रयिमश्नवत्पोषमेव दिवेदिवे। यशसं वीरवत्तमम्।।' 'प्रजापते नहि त्वत्' इति च।। २।।**

अक्षतानामनवहतानां यवानां सक्तुभिरग्निं पुष्टिपतिं यजेत 'अग्निना रयिम्' इत्येतयर्चा। तथा प्रजापतिं 'प्रजापते' इत्यादिमन्त्रेण। एतावाज्यभागान्ते यागौ।।

**सर्वत्रोद्वाहकर्मस्वनादिष्टदैवतेष्वग्निं पुष्टिपतिं प्रजापतिं च यजेत।। ३।।**

यत्र नाम्ना मन्त्रवर्णैर्वा देवतानिर्दिष्टा विवाहप्रकरणोक्ते कर्माणि, तत्राग्निं पुष्टिपतिं प्रजापतिं च यजेत प्रकृतत्वादक्षतसक्तुभिः। आज्यभागान्ते भविष्यत्सु प्रास्थानिकादिष्वेतद्बोद्धव्यम्। पूर्वोक्तेषु तु क्वचिन्नाम्ना क्वचिन्मन्त्रवर्णेभ्यो देवता सर्वेषु प्रतीता।।

अग्निना इज्यमानेनाहं रयिं धनमश्नवत् 'अशू व्याप्तौ' व्याप्नुयाम् व्याप्तस्य च प्राप्तस्य पोषं पुष्टिं दिने दिने अश्नुयाम्। कीदृशं रयिम्। यशसं यशस्करं, वीरवत्तमं वीरपुरुषयुक्तं, वीरैर्वा पुत्रैरतिशयेन युक्तम्। 'प्रजापते नहि' इति जातकर्माणि व्याख्यास्यते।। ३।।

**।। इति द्वाविंशी काण्डिका।। २२।।**



## ।। अथ त्रयोविंशी काण्डिका।।

**अथ प्रास्थानिकं कर्म।। १।।**

प्रस्थाननिमित्तं प्रास्थानिकं कर्मानन्तरं वक्ष्यत इत्यर्थः। प्रस्थान च वरस्य श्वशुरगृहप्राप्तये विवाहं कर्तुम्।। १।।

**तस्मिन्यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा पश्चाद्भगिनी सिचं गृह्णाति शस्त्रं गृहीत्वा।। २।।**

तस्मिन्प्रास्थानिके कर्मणि यथोक्तमुपसमाधाय, अग्नेः पूर्वं कर्तव्यम् उद्धतस्य चावोक्षितस्य च परिसंवाहनपर्युक्षणपरिस्तरणपूर्वकमाज्याहुतिपञ्चकेन सन्तनी-होमैश्चैकादशभिः संस्करणमुपसमाधानमुच्यते, तत्र जयप्रभृतिभिर्मन्त्रैर्होमं कुर्यात् जयाभिधानान्वा होमान् कुर्यात् 'आकूतं चाकूतिश्च' 'बृहस्पतिपुरोहिताः' 'ऋताषाट्' इत्यादिभिर्मन्त्रैर्जुहुयादित्यर्थः। एते हि मन्त्रास्तत्साध्या वा होमा जयाभ्यातराष्ट्रभृदाज्य-भागादिशब्दसाध्यतया प्रसिद्धाः। आज्यभागान्ते चाग्निं पुष्टिपतिं प्रजापतिं च यजेत, 'सर्वत्रोद्वाहकर्मस्वनादिष्टदैवतेषु' इत्यादिसूत्रवचनप्रामाण्यादिति केचित्। अन्ये त्वाहुः सूत्रकारप्रामाण्यादेव जयशब्दोऽत्राग्निप्रजापतिदेवतयोर्होमयोः परिभाष्यते आज्य-भागान्तं चोपसमाधानमिति। कश्चित्त्वाह विवाहप्रकरणेऽन्तरान्तरा चोदितत्वात् आज्य-भागान्तानि कर्माणि कृत्वा पुष्ट्यर्थमग्नये पुष्टिपतये चाक्षतसक्तुभिर्होमः कर्तव्यः सूत्रकारवचनसम्प्रत्ययार्थमिति। अन्यथा हि नाम्ना मन्त्रवर्णैर्वा सर्वत्र देवतावगमान्ना-नादिष्टदैवतं किञ्चिदुद्वाहकर्मसु कर्म विद्यते इति सूत्रार्थसम्प्रत्ययाभावः स्यात्। एवं जयहोमेषु कृतेषु आज्यभागान्ते वरस्य पश्चात्स्थिता सती भगिनी मुख्या उपचरिता वा यथासम्भवं खङ्गक्षुरिकादीनामन्यमतं शस्त्रविशेषं हस्ते तूष्णीं गृहीत्वा, तूष्णीं सिचमुपरिपरिधानीयस्य वाससो भ्रातुः सम्बन्धिनोऽञ्चलं गृह्णाति परिधानदशां हस्तेन स्पृशतीत्यर्थः। अञ्चलग्रहणमदृष्टसंस्कारार्थं शस्त्रग्रहणमपि। तथाच प्रायस्तदेव शस्त्रमुत्तर-कालेऽपि रक्षार्थं शयनादिसन्निधौ स्थाप्यमानमार्यावर्ते लक्ष्यते।। २।।

**पूषा मेति यान्ति यत्रोदकम्।। ३।।**

पूषा मा प्रपथे पात्वित्यादिना मन्त्रेणोदकसम्मुखा व्रजन्तीत्यर्थः।। ३।।

**शन्नो देवीरित्युपस्पृश्य प्राची दिगिति यान्ति यथादिशम्।। ४।।**

उदकान्तं प्राप्य उदकोपस्पर्शनं शिरसि प्रक्षेपणमाचमनं कृत्वा 'प्राची दिगग्निर्देवता' इत्यादिना मन्त्रेण यथादिशं या दिग्येषां गन्तव्या, तदभिधायिना मन्त्रेण यथालिङ्गमभिधाय वरप्रभृतयो गच्छति। अत्र विवाहस्य कारयिता यो गुरुः, स एव पिता वा वरस्य मन्त्रपाठे कर्ता।। ४।।

**पूषा मा प्रपथे पातु पूषा मा पशुपाः पातु पूषा माधिपतिः पातु।।**

पुष्णाति वर्धयतीति पूषा पृथिवी अन्तरिक्षं द्यौश्च। तथाच ब्राह्मणम् - 'इयं वै पूषा प्रपथेऽन्तरिक्षं पशुपा द्यौरधिपतिः।' इति।

एतद्धि इयमित्यपरोक्षनिर्देशेन प्रयुक्तस्य पूषशब्दस्य मन्त्रे पृथिव्यर्थतां दर्शयति। अन्तरिक्षं पूषेत्यनेनापि मध्यवर्तिना मन्त्रेण पूषशब्दस्यान्तरिक्षवृत्तित्वं दर्शयति। यथैवहि भूतानि पुष्णानीति पृथ्वी पूषा, तथैव पशूनवकाशदानेन पाति पुष्णातीति कृत्वा अन्तरिक्षं पूषा। एवं द्यौरपि पूषा, सा हि सर्वलोकाधिपतिः यतोऽसौ सर्वलोकान् वृष्ट्यादिद्वारेण पुष्णाति। तेनायं मन्त्रार्थः - पूषा पृथिवी प्रपथे गन्तुं प्रस्तुते पथि मार्गे मां पातु, तथा पशुपा यः पूषा अन्तरिक्षलक्षणः, सोऽपि मां पातु रक्षतु। तथा अधिपतिर्यः पूषा द्युलक्षणः, सोऽपि मां पालयतु पथि गच्छन्तम्। शन्नो देवीरित्यादयो व्याख्याताः।। ४।।

**प्राची दिगग्निर्देवताग्निं स ऋच्छतु यो मैतस्या दिशोऽभिदासति, दक्षिणा दिगिन्द्रो देवतेन्द्रं स ऋच्छतु यो मैतस्या दिशोऽभिदासति, प्रतीची दिक् सोमो देवता सोमं स ऋच्छतु यो मैतस्या दिशोऽभिदासति, उदीची दिक् मित्रावरुणौ देवता मित्रावरुणौ स ऋच्छतु यो मैतस्या दिशोऽभिदासति, ऊर्ध्वा दिग्बृहस्पतिर्देवता बृहस्पतिं स ऋच्छतु यो मैतस्या दिशोऽभिदासति, इयं दिगदितिर्देवतादितिं स ऋच्छतु यो मैतस्या दिशोऽ-भिदासति।।**

या प्राची दिक्, तस्या अग्निर्देवता। अत एव तस्या दिशः सम्बन्धी कश्चित् यो मामभिदासति 'दसु-उपक्षये' उपक्षेप्तुमिच्छत्याभिमुख्येन सोऽग्निमृच्छतु अग्निम-भ्यृच्छतु अग्निं लक्षणीकृत्येन्द्रियप्रलयमनुभवतु, अग्निस्तस्याक्ष्यादिनिग्रहं करो-

त्वित्यर्थः। एषैव सर्वत्र योजना तुल्या। पर्वतारोहणावरोहणमूर्ध्वमधश्च गमनमस्तीति तत्परत्वमपि मन्त्रस्य युक्तम्। केचिदाहुः - यदभिमुखं गमनं, तल्लिङ्गक एव मन्त्रैकदेशः प्रयोक्तव्य इति। तदयुक्तं यत उपद्रवनिवारणायैष मन्त्रः, अन्यतमदिगभिमुखगमन-प्रवृत्तस्य सर्वदिक्केभ्योऽपि सम्भाव्यते विप्लवः, सर्पाशनिप्रभृतिभ्योऽधस्तनोपरितनेभ्यः। एवं पार्श्वादिप्रभवेभ्योऽपीति। सर्वप्रस्थानेषु चैषेतिकर्तव्यता बोद्धव्या।।

**।। इति त्रयोविंशी काण्डिका।। २३।।**



## ।। अथ चतुर्विंशी काण्डिका ।।

**षडर्घ्यार्हा भवन्त्याचार्य ऋत्विग्राजा विवाह्यः प्रियः स्नातक इति ।। १**

विवाहात्पूर्वमेव पाद्यार्घ्यमधुपर्कैर्विवाह्यः श्वशुरेण पूजनीयः। तुल्यं च पूजाविधानं षण्णामपीति षण्णामुद्देशः। अर्घ्यं पूजामर्हन्तीति अर्घ्यार्हाः षट् भवन्ति। आचार्यः उपनेताध्यापयिता च शिष्यस्य। ऋत्विग्याज्यस्य, तस्यापि प्राक्कर्मणः सम्माननं (समानात्), राजा क्षत्रियोऽपि नत्वभिषेकभावेन स जनपदस्य पूज्यः। विवहनमर्हतीति विवाह्यः, 'अर्हे कृत्यतृचश्च' (३.३.१६९) इति कृत्यो ण्यप्रत्ययः, स कन्यायाः पितुरर्घ्यार्हः। तथा यो यस्य प्रियो गुणोत्कर्षेण, स तस्य दानाद्यवसरे अर्घ्यार्हः। स्नातकस्तु सद्यःस्नात आचार्यस्य।। १।।

**अथैनमर्हयन्ति।। २।।**

अथशब्दो वक्ष्यमाणप्रकारस्वीकारार्थो निपातानामनेकार्थत्वात्। एनमाचार्यादीनामन्यतमं वक्ष्यमाणप्रकारेणार्हयन्ति पूजयन्ति संमानयन्ति।। २।।

**आदौ च कर्मणः।। ३।।**

विवाहोत्तरकालमर्हणं विहितमिति यथाचोदितमानुपूर्व्यमिति नयेन विवाहादूर्ध्वमेव मधुपर्कादिदानं कर्तव्यमिति केचित्प्राहुरत एव च विवाहोत्तरकाल एवेदमपकृष्य व्याचक्षते। तन्निरासादेयम्। कर्मण आदावेव पूजनं कर्तव्यं पाठक्रमादर्थक्रमस्य बलीयस्त्वात्। संस्कारो ह्ययमुत्साहादिजननमुखेन ऋत्विक्प्रभृतीनां कर्मणि योग्यताविशेषाधानार्थः, संवृत्ते यज्ञविवाहादिके कर्मणि ऋत्विक्प्रभृतीनां क्रियमाणो निष्फल एव स्यात्। स्मार्तोऽपिचायं संस्कारः, स्मृतिषु च प्रागेव कर्मणोऽभिहितः। किञ्च विवाह्य इत्यर्थे आवश्यके वा कृत्यः - विवहनमर्हतीति, विवहति वा अवश्यं कन्यामिति विवाह्यः, 'अर्हे कृत्यतृचश्च' 'आवश्यकाधमर्ण्ययोर्णिनिः' 'कृत्याश्च' इति स्मृतेः। नच विवाहादूर्ध्वं विवाहार्हो भवति।। ३।।

अर्घ्यलक्षणमाह -

**अर्घ्यमुदकं सौषधं दर्भा इति।। ४।।**

उदकं, व्रीहियवयोश्चान्यतरत्, दर्भा एतत्त्रयमर्घ्यम्।। ४।।

मधुपर्कलक्षणपूर्विकां पूजयितुरनुपदेशां पूजाप्रतिपत्तिमाह -

**कंसे चमसे वा दध्यासिच्य मधु च वर्षीयसा पिधाय विष्टराभ्यां परिगृह्य पाद्यप्रथमैः प्रतिपद्यन्ते।। ५।।**

अत्र पूजयितारः इत्यर्थाल्लभ्यते। कांस्यपात्रे चमसे वा दारुपात्रविशेषे दध्यासिच्यते मधु च। मधु मधुपर्क उच्यते। तच्च मधुपर्कपात्रं बृहता पात्रेण पिधाय स्थगयित्वा विष्टराभ्यां गृहीत्वा पाद्यं प्रथमं येषां पाद्यार्घ्यमधुपर्काणां तैर्यथायोग्यतमूर्ध्वमधो मध्ये च पाद्यार्घ्यमधुपर्काणां तैर्यथायोग्यतमूर्ध्वमधो मध्ये च पूजां स्वयमेव प्रतिपद्यन्ते पूजयितारो, नतु तत्राप्युपदेशमपेक्षन्ते।। ५।।

**मयि दोहोऽसि विराजो दोहः पाद्यायै विराजो दोहमशीयेत्याह्रियमाणमनुमन्त्रयते।। ६।।**

कन्याया दातरि विवाह्यस्य निकटीभूते सति ऋत्विक् पाद्यादिकं कन्यादातृसमीपमानाययति। तदानीयमानमनेन मन्त्रेण विवाह्योऽनुमन्त्रयते। अमन्त्रज्ञश्चेद्विवाह्यस्तदा ऋत्विगेवैनं पाठयति। एवं सर्वत्र ज्ञेयम्। अयं मन्त्रार्थः - 'दुह-प्रपूरणे' दोहः प्रपूरकः आप्यायकः, विराट् स्वर्गादौ प्रजापतिः, पाद्यादिकमुच्यते हे पाद्यादिक यस्त्वं मयि मन्निमित्तो मदर्थो दोहः प्रपूरकः, स विराजः प्रजापतेः दोहः पूरकः जलादेः प्रजापतिना दिवो नियुक्तत्वादतो मम पाद्यायै प्रतिपत्तये त्वं भव, विराजश्च प्रजापतेः सम्बन्धिनं दोहं पाद्यादिकमहमशीय व्याप्नुयां पश्येयमित्यर्थः। पाद्यस्य संस्कारार्थं दर्शनम्।। ६।।

**विष्टरोऽसि मातरि सीदेति विष्टरमास्तीर्य तस्मिन्नुपविशति।। ७।।**

विष्टरोऽसीत्यादिना मन्त्रेणासनान्तरस्योपरि दर्भविष्टरमास्तीर्य विवाह्य उपविशति तूष्णीम्। हे विष्टर असि त्वं विष्टरः विष्टरो भवसि अत आच्छादयासनान्तरमाच्छादनार्थमेव मातरि आसनान्तरे सीद तिष्ठ।। ७।।

**विष्टर आसीनायैकैकं त्रिः प्राह।। ८।।**

विष्टरे दर्भाच्छादितासनविशेषे आसीनायोपविष्टाय विवाह्याय पाद्यादीना-

मेकैकं त्रिः प्राह कन्याया दाता - पाद्यम् ३ अर्घ्यं ३ मधुपर्कः ३ आचमनीयम् ३ इति। आसीनायेति सप्तम्यर्थे चतुर्थी, विष्टर आसीने विवाह्य इत्यर्थः।

**नैव भोरित्याह न मार्षेति।। ९।।**

अभ्यर्हणीयस्याभिमुख्यापादनाय यत् भो इति पूजासम्बोधनं प्राप्तं, नामसम्बोधनं च मार्ष ब्रह्मदत्त इत्यादि, तन्निषेधयति।। ९।।

**शन्नो देवीरित्यपोऽभिमन्त्र्य पाद्याभिः प्रक्षालयते दक्षिणं पादमवनेनिज इदमहमस्मिन् कुले ब्रह्मवर्चसं ददाम्युत्तरं पादमवनेनिज इदमहं मां मयि तेजो वीर्यमन्नाद्यं प्रजां पशून् ब्रह्मवर्चसं ददामि।। १०।।**

शन्नो देवीरित्यादिमन्त्रैः पूर्वव्याख्यातैरपोऽभिमन्त्र्यः विशेषेण पाद्याभिः पादयोर्धावनसमर्थाभिः पादौ प्रक्षालयते अभ्यर्हणीयस्य कन्याया दाता। पादयोः प्रक्षालने यथालिङ्गं मन्त्रौ दक्षिणमित्यादि, उत्तरमित्यादि।

इदमित्यनेन सद्यःफलं दर्शयति कन्याप्रदानं विवाहान्तरसाधितं च तत्क्षणादेव कर्मानुष्ठानादिसम्बन्धिरूपम्। अस्य विवाह्यस्य ब्रह्मवर्चससम्पन्नमुत्तरं वामपादमवनेनिजे शोधयामि। इदमहं तेजो वीर्यमन्नाद्यं प्रजां पशून् ब्रह्मवर्चसं ददामि विवाह्यादिके अर्घ्योर्हे। मां मयि - यत्तु मां प्राप्तं तेजःप्रभृति, तन्मय्येव चिरमस्त्वित्यर्थः।।

**आपोहिष्ठीयाभिरर्घ्यं परिगृह्य सावित्रेण मधुपर्कं विष्टरोऽस्यन्तरिक्षमधिविश्रयस्वेति विष्टरमवकृष्योरु त्वेत्यपसार्य तच्चक्षुरिति वीक्ष्य पृथिव्यास्त्वेति विष्टरे निधाय मधुवाता ऋतायते इति तिसृभिः प्रदेशिन्या प्रदक्षिणमालोडयति।। ११।।**

आपो हिष्ठेत्यादिभिर्व्याख्यातार्थाभिरर्घ्यं प्रतिगृह्णाति। देवस्य त्वेत्यादना 'मधुपर्कं प्रतिगृह्णामि' इत्यध्याहारपूरितेन सवितृदेवताकेन मन्त्रेण मधुपर्कं प्रतिगृह्णाति। विष्टरोऽसीतिमन्त्रेणोपरितनं विष्टरमपकर्षति। अपकृष्य चाक्षिप्य उरु त्वेति मन्त्रेणाऽपसारयति। तच्चक्षुरित्यादिना मधुपर्कं वीक्ष्य, पृथिव्यास्त्वेत्यादिना मन्त्रेणाधस्तने विष्टरे मधुपर्कपात्रं निदधाति। मधु वाता ऋतायते इति तिसृभिरङ्गुष्ठसमीपवर्तिन्या प्रदेशिनीसंज्ञयाङ्गुल्या प्रदक्षिणं कृत्वा दधिमधुनी मिश्रयति। प्रदिशति तर्जयति तच्छीला प्रदेशिनी तर्जनी।। ११।।

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां मधुपर्कं प्रतिगृह्णामि।।**

देवस्य दानद्योतनादिगुणकस्य सवितुरादित्यस्य प्रसवेऽनुज्ञायां वर्तमाना अश्विनोर्देवभिषजोर्बाहुभ्यां पूष्णश्च हस्ताभ्यां न तु स्वाभ्यां चर्ममयाभ्यां मधुपर्कं प्रतिगृह्णामि।

**विष्टरोऽस्यन्तरिक्षमधिविश्रयस्व।।**

असि त्वं विष्टरः मिथ्यैवावारकः, अतोऽस्मादधस्तनविष्टरादपसरान्तरिक्षमाकाशमाश्रय।

**उरु त्वा वाताय।।**

हे विष्टर त्वामहं पृथिव्यां प्रक्षिपामि, अतः उरु दूरं गच्छ। किमर्थम्। वाताय वाय्वर्थम्।

**तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्।**
**पश्येम शरदः शतं जीवेम शरदः शतम्।।**

तदेतच्चक्षुः शस्तं यद्देवहितं सत्पुरस्तादुच्चरति, तदेव कृतकरणीयं चक्षुः देवार्थं हविरादिवीक्षणयागदानहोमादिषु साधनभावं भजत इत्यर्थः। कीदृशम्। शुक्रं शुक्लम्। अत आशास्महे वयं यागादिसाधनानि वर्षशतं पश्येम, तदर्थमेव संवत्सरशतं जीवेम।

**पृथिव्यास्त्वा नाभौ साधयामि।।**

हे मधुपर्क त्वामहं पात्रस्थमपि सन्तं नाभावधस्तने दर्भविष्टरे साधयामि। धान्यानि हवींषि वेदिप्रस्तरे साध्यन्ते। पृथिव्या हि सारमोषधयस्तासामपि दर्भा इति नाभित्वं दर्भविष्टरस्य।

**मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः।**
**माध्वीर्नः सन्त्वोषधीः।। १।।**
**मधु नक्तमुतोषसा मधुमत्पार्थिवं रजः।**
**मधु द्यौरस्तु नः पिता।। २।।**
**मधुमान्नो वनस्पतिर्मधुमां अस्तु सूर्यः।**
**माध्वीर्गावो भवन्तु नः।। ३।।**

वाता वायवः मधु सन्तु मधुरसपर्यवसायिनो भवन्तु। कस्मै। ऋतायने ऋतं सतं यज्ञं वा य इच्छति, तस्मै। सिन्धवो नद्यः मधु क्षरन्ति क्षरन्तु स्रवन्तु। तथा ओषधयः फलपाकान्ताः व्रीह्यादयो मधुमत्योऽस्माकं सन्तु। नक्तं रात्रिप्रथमभागः मधुमान्नो भवतु, उत अपि च उषसा रात्रिपश्चिमभागेन सह। मधुमत्पार्थिवं रजः - रजो भूमिलोक उच्यते, धूलिर्वा। द्यौर्द्युलोकः मध्वस्तु मधुरसस्यन्दिनी वृष्ट्यादिद्वारेण भवतु। कीदृशी द्यौः। पिता पालयित्री। वनस्पतिः फली मधुमानस्माकं भवतु। एवमस्माकं सूर्यो मधुमान् भवतु। अनेन कर्मणा गावश्च मधुमत्यो नः सन्तु क्षीरादिदानद्वारेण मधुरसाः।। ११।।

**वसवस्त्वाग्निराजानो भक्षयन्तु पितरस्त्वा यमराजानो भक्षयन्तु रूद्रास्त्वा सोमराजानो भक्षयन्त्वादित्यास्त्वा वरुणराजानो भक्षयन्तु विश्वे त्वा देवा बृहस्पतिराजानो भक्षयन्त्विति प्रदक्षिणं प्रतिदिशं प्रतिमन्त्रं पात्रस्यान्तेषु लेपान्निर्मार्ष्टि।। १२ ।।**

प्राच्या आरभ्य प्रदक्षिणं कृत्वा भक्षयन्त्वन्तैर्मन्त्रैर्मधुपर्कपात्रप्रान्तेषु अङ्गुलिलेपान् निर्मार्ष्टि। प्रतिदिशं प्रतिमन्त्रमितिवचनात्पञ्चमेन मन्त्रेणार्थात्पूर्वोक्तदिक्कोणे निर्मार्जनमापतति। मन्त्रार्थस्तु -

हे लेप प्राच्यां दिशि वर्तमाना वसवो देवताविशेषास्त्वां भक्षयन्तु वसवस्त्वया तृप्ता भवन्त्वित्यर्थः। कीदृशा वसवः। अग्निराजानोऽग्निर्येषां राजा। तत्पुरुषे हि समासान्तः स्यात्। एषा योजना सर्वमन्त्रेषु तुल्या।। १२।।

**यन्मधुनो मधव्यस्य परमस्यान्नाद्यस्य परममन्नाद्यं रूपं तेनाहं मधुनो मधव्यस्य परमस्यान्नाद्यस्य परमोऽन्नादो मधव्यो भूयासं त्रय्यै विद्यायै यशोऽसि श्रियै यशोऽसि यशसे ब्रह्मणो दीप्तिरसि सत्यश्रीर्यशःश्रीर्मयि श्रीः श्रीः श्रयतामिति मधुपर्कस्य चतुष्प्राश्नात्यङ्गुष्ठद्वितीयाभिः कनिष्ठया प्रथममेवमनुपूर्वं सर्वाभिस्तदवशिष्टं सुहृदे प्रयच्छति।। १३।।**

यन्मधुन इत्यादिमन्त्रेण मधुपर्कस्य सम्बन्धिनो भागानङ्गुष्ठसहितया एकैकया अङ्गुल्या गृहीत्वा चतुरो वारानश्नाति अङ्गुष्ठसहितया कनिष्ठया प्रथमं, ततोऽनामिकया,

मध्यमया, प्रदेशिन्या प्रत्येकमङ्गुष्ठसहितयावदानचतुष्टये गृहीते यच्छिष्यते, तत्सुहृदे कनीयसे भ्रातृप्रभृतये प्रयच्छति। मन्त्रार्थस्तु -

पृथिव्यादीनि भूतानि मध्विवामृतमिव, मधव्यं मधुसारः अमृतसारः सारसार इत्यर्थः, यन्मधुनोऽमृतस्य सम्बन्धि मधव्यं सारसारः पृथिवीति, 'इयं पृथिवी सर्वेषां भूतानां मधु' (२.५.१) इत्यादिना बृहदारण्यके पृथिव्या भूतसारत्वेन प्रतिपादनात्, तस्य मधव्यस्य पृथिवीलक्षणस्य सारसारस्य यत्परममुत्कृष्टतमं रूपमन्नादिलक्षणं, तेन भुक्तेनाहं मधव्यस्य सर्वामृतसारस्य मधुनोऽमृतस्य नित्यानन्दरूपस्य परमस्य परमात्मतादात्म्यवृत्तेरन्नाद्यस्यादनीयस्य सुसंवेदनभोग्यस्य परमोऽन्नादः परमात्मस्वरूपः तत्र लयात् भूयासं ब्रह्मभूयमहं गच्छेयमिति यावत्। किञ्च हे मधुपर्क असि त्वं त्रय्यै विद्यायै वेदत्रयस्य यशः प्रकाशः, तथा श्रियै सम्पदो यशः प्रकाशोऽस्ति, अतो यशसे त्वामश्नामि। किञ्च ब्रह्मणः परमात्मनो दीप्तिः प्रकाशस्त्वं, सत्यस्य वेदार्थस्य श्रीः सम्पदसि यशसश्च श्रीः, अतो मयि श्रीः श्रीः श्रयतां भूयोभूयो मयि श्रीस्तिष्ठत्वित्यर्थः।। १३।।

**आचामत्यमृतोपस्तरणमसीति।। १४।।**

अनेन मन्त्रेणाचामति। हे आचमनोदक अमृतस्य मधुपर्कस्य उपस्तरणमाच्छादकमसि।। १४।।

**तस्मा असिपाणिर्गां प्राह।। १५।।**

अर्हयिता दत्तमधुपर्कः सन् खड्गपाणिर्भूत्वा तस्मै अर्हणीयाय भक्षितमधुपर्काय गामाह गां करिष्ये इत्यनुज्ञां प्रार्थयते अन्यार्थेनेत्यर्थः। गोश्च करणं निपातनम्।।

**तां शास्ति।। १६।।**

तां गां शास्ति 'ओं कुरुष्व' इत्यनुज्ञाम् अर्हणीयो ददातीत्यर्थः।। १६।।

अर्हयितामुं मन्त्रमाह -

**मम चामुष्य च पाप्मानं जहि हतो मे पाप्मा पाप्मानं मे हत।। १७।।**

हे गौः मम चाग्निशर्मणोऽमुष्य च विष्णुशर्मणः पूज्यस्य यदुद्देशेन वैदिकविधिपरवशीकृतोऽहमिदमकर्तव्यं करोमि तस्य पाप्मानं जहि नाशयेति यावत्,

अथवा हतो मे पाप्मा नास्त्यतः कर्मणो मम पापं विधिचोदितत्वादित्यर्थः। हे विशसितारः मम पाप्मानं हत नाशयत।। १७।।

**ओं कुरुतेति।। १८।।**

हे विशसितारः गौः क्रियतामित्यनुजानातीत्यर्थः।। १८।।

**चतुरो नानागोत्रान् ब्राह्मणान्भोजयेदेष आद्योपायः।। १९।।**

नानागोत्रान्नानाप्रवरांश्चादौ चतुरो ब्राह्मणान् भोजयेत्पश्चात्सबान्धवमर्हणीयम्। एष आद्यो ब्राह्मणायोपायो गोकरणादिक उपदिष्टस्तेन नात्र विचिकित्सा कर्तव्येत्यर्थः।। १९।।

**यद्युत्सृजेन्माता रुद्राणामिति जपेत् माता रुद्राणां दुहिता वसूनां स्वस्यादित्यानाममृतस्य नाभिः। प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट।। सूयवसाद्भगवती हि भूता अथो वयं भगवन्तः स्याम। अद्धि तृणमघ्न्ये विश्वदानी पिव शुद्धमुदकमाचरन्ती।। २०।।**

निश्चितेऽपि यदिशब्दो दृष्टः 'यदि वेदाः प्रमाणम्' इति यथा। उक्तामितिकर्तव्यतां विधाय गामुत्सृजेत् न हन्यादित्यर्थः, माता रुद्राणामित्यादि च पठेत्। इयं गौ रुद्राणामन्तरिक्षचारिणां देवताविशेषाणां माता परिपोषिका पयःप्रभवाहुतिद्वारकवृष्ट्यादिद्वारेण, वसूनां वासयितृणामोषधीनां भूमिजानां दुहिता पोषणीया, आदित्यानां स्वसा भगिनी अदितितनया, अतोऽहं प्रनुवोचं चिकितुषे जनाय, नुशब्दो निश्चये, निश्चयं कृत्वा प्रवदामि चिकितुषे चैतन्यातिशयवते जनाय। किं वदामि। हे विशसितारः गां मा वधिष्ट। कीदृशीम्। अनागामपापाम्, अदितिमखण्डितां दैन्यशून्यां वा। कुतः। यस्मादियं शोभनं यवसं घासमत्तीति सूयवसात्। किञ्च हे गौः भगो धनं पयो यशश्च विद्यते यस्याः सा भगवती पयस्विनी त्वं भूयाः, तथा वयमपि त्वत्प्रसादात् भगवन्तो धनयुक्ताः यशस्विनश्च स्याम। हे अघ्न्येऽनुपहिंसिते तृणमद्धि भुङ्क्ष्व। यतस्त्वं विश्वदानी सर्वस्य दात्री पयोद्वारेण। पिव शुद्धमुदकमा समन्तात् चरन्ती विहरन्ती।। २०।।

**ओमुत्सृजत तृणान्यत्त्वित्युक्त्वा तामुत्सृष्टां पशुमङ्गं वा।। २१।।**

**नामांसो मधुपर्कः स्यादिति ह विज्ञायते।। २२।।**

**अपिवा घृतौदन एव स्यात्।। २३।।**

अर्हयिताह ओमित्यविचारितसिद्धं कृत्वा हे विशसितारः यूयं गामुत्सृजत। उत्सृष्टा सती स्वाच्छन्द्येन तृणान्यत्तु भक्षयतु इत्युक्त्वा तामुत्सृष्टां दृष्ट्वां पशुं छागं, पश्वङ्गं वा मांसखण्डं प्रतिनिदधीत। नामांसो मांसविहीनो मधुपर्कः स्यादिति ह श्रुतितो विज्ञायते, हशब्द इति हासे। अपिवा घृतमिश्रित ओदन एव कर्तव्यो मांसद्वेषिणे तादृशा वा।। २१, २२, २३।।

**।। इति चतुर्विंशी काण्डिका।। २४।।**





## ।। अथ पञ्चविंशी काण्डिका।।

**अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो वरेयम्। समर्यमा सम्भगो नो निनीयात् सं जास्पत्यं सुयममस्तु देवा इत्युदाहारं प्रहिणोति।। १।।**

अनृक्षरा इत्यादिमन्त्रेण गृहीतजलभाण्डमुदकस्य आहर्तारं प्रेषयति कन्या-स्नानाद्युपयोगि जलमानेतुं पुरुषं प्रहिणोतीत्यर्थः। ऋगर्थस्तु - ब्रह्मण आर्षं सूर्यस्य वा। त्रिष्टुप्। पन्था इति व्यत्ययेनैकवचनम्। ऋक्षराः कण्टकादयः परुषास्तृणविशेषाः, न विद्यन्ते ऋक्षराः येषु ते अनृक्षराः पन्थानः सन्तु, ऋजवश्चाकुटिलाः। येभिर्यैः नोऽस्माकं सम्बन्धिनः सहाया वरेयं वरणीयं गङ्गादिकं जलाहरणस्थानं यन्ति गच्छन्ति। सखाय इति व्यत्ययेन बहुवचनम्। किंचार्यमा आदित्यः भगश्च नोऽस्माकं सम्बन्धिनं सखायं सन्निनीयात् सम्यगुदकस्थानं प्रापयेत्। हे देवाः ऋत्विग्प्रभृतयः आदित्यप्रभृतयश्च युष्मत्प्रसादात् जास्पत्यं जायायाः पत्युश्च समागमः सम्यक् सुयम-मस्तु सुसंयतं स्थिरतरं सम्पूर्णमस्तु। 'जायायास्पत्यौ वा च्छन्दसि' इति जास्पत्य-शब्दच्छन्दसि निपातितः।। १।।

**शमीशाखया सपलाशया पिधायाहरेत्।। २।।**

स प्रहित उदाहारः उदककुम्भं शमीशाखया सपत्रया पिधाय स्थगयित्वा उदकमानयेत्।। २।।

**एतासामेवापामुदकार्थान् कुर्वीत।। ३।।**

एतासामेव आहारितानामपां सम्बन्धिनो भागानवदायावदायोदकसम्पा-द्यानर्थान् कन्यास्नानसुवर्णक्षारणाग्निपर्युक्षणादीन् कुर्यान्नान्येन जलेन।। ३।।

**शन्न आपो धन्वन्याः शन्नः सन्त्वनूप्याः। शन्नः समुद्रिया आपः शमु नः सन्तु कूप्या या इमा इत्यकेवलाभिरद्भिः स्नातां या अकृन्तन्या अवयन्या अतन्वत याश्च देवीरन्ताम् अभितोऽततन्थ। तास्त्वा देवीर्जरसा संव्ययन्त्वा-**

**युष्मतीदं परिधत्स्व वास इत्यहतं वासः परिधाप्याशासानेत्यन्तरतो मौञ्जेन दार्भेण वा योक्त्रेण सन्नह्यति।। ४।।**

शन्न आप इत्यादिमन्त्रेणाकेवलाभिः सर्वौषध्यादिगन्धद्रव्ययुक्ताभिः फलविशेषसहिताभिश्चाद्भिः कन्यां स्नापयेत्। ततो 'या अकृन्तन्' इत्यादिना अहतमपूर्वपरिहितमत्यन्ताभिनवं वस्त्रं परिधापयेत्। ततश्च 'आशासाना' इत्यादिना मन्त्रेणान्तरे गुप्तां कृत्वा यथा न दृश्यते तथा वा सन्नहनं कन्यायाः कुर्यात् मौञ्जेन दर्भनिर्मितेन वा योक्त्रेण।

शन्न आप इत्यनुष्टुप् व्याख्याता। या इमा उदाहारेणाहृताः, ताः शं सुखं नः सन्त्विति विशेषः।

या अकृन्तन्निति जगती। हे आयुष्मति कन्ये इदं वासः परिधत्स्व परिधेहि। त्वां च सर्वास्ता देव्यो जरसा परिव्ययन्तु जरसा वेष्टयन्तु जराजर्जरितां सभर्तृकां सतीं त्वां देवताः सम्पादयन्तु दीर्घमायुस्तव कुर्वन्त्वित्यर्थः। कास्ता देव्यः। या इदं वासोऽकृन्तन् याभिः कर्तनेन सम्पादितमधिष्ठात्रीभिर्देवताभिः, या अवयन् याभिरुतं सम्पादितं वासः, या अतन्वत याभिः सूत्रमाततं दैर्घ्येण प्रसारितं, याश्च देवीरन्ताम् अभितोऽततन्थ, उभयतो मूलपल्लवस्य चान्ताः प्रान्ताः याभिरातानिता इत्यर्थः। ताश्च देवता मन्त्रान्तरे स्वनाम्नैवोपात्ताः रेवतीस्त्वा व्यक्ष्णन् इति।

**आशासाना सौमनसं प्रजां सौभाग्यं रयिम्। अग्नेरनुव्रता भूत्वा सन्नह्ये सुकृताय कम्।।**

अनुष्टुप्। पृथिव्या आर्षम्। अहं सन्नह्ये वस्त्रं बध्नामि। किमर्थम्। सुकृताय कर्मणे विवाहपूर्वयागदानहोमादिकर्मार्थम्। कमिति कामायेत्यर्थः। यथा 'चक्षुषे कं पूर्वमात्यज्यते' इत्यत्र चक्षुष्कामप्रतीतिः, एवं सुकृताय कमिति सुकृतकामप्रतीतिः। कीदृशी सती सन्नह्ये। सौमनसं प्रसन्नमानसत्वं तथा सौभाग्यं भर्त्रानुकूल्यं रयिं च धनमाशासाना इच्छन्ती, तथा अग्नेरनुव्रता सती आहवनीयादिपरिचरणशीला सती सन्नह्ये।। ४।।

**प्रेतो मुञ्चातु मामुतः सुबद्धाममुतस्करत्। यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगा सति। पूषा त्वेनो नयतु हस्तगृह्याश्विनौ त्वा प्रवहतां रथेन। गृहान्गच्छ**

**गृहपत्नी यथासो वशिनी त्वं विदथे मा वदासि।। मा विदन्परिपन्थिनो य आसीदन्ति दम्पती। सुगेभिर्दुर्गमतीतामपद्रान्त्वरातय इत्युदानीयोक्तं वाससः कर्म।। ५।।**

प्रेतो मुञ्चात्वित्यादिभिस्तिसृभिः उदानीयस्थानादुत्क्षिप्योत्सङ्गे कृत्वा स्थानान्तरे पिता ज्येष्ठो भ्राता वा यथोक्तं वासस उपरिभागाच्छादनस्याप्यधस्तनाच्छादनवत् 'या अकृन्तन्' इत्यादिना मन्त्रेण कर्म कुर्यादित्यर्थः। सूर्यस्यार्षम्। प्रथमतृतीयेऽनुष्टुभौ, द्वितीया त्रिष्टुप्। हे कन्ये इतः स्थानात्प्रमुञ्चातु प्रमुञ्चामि त्वां नयामि भवतीम्। मुञ्चात्विति तिङ्व्यत्ययः पुरुषव्यत्ययश्च, तथाच शाखान्तरे प्रेतो मुञ्चामीति मन्त्रः पठ्यते। पितृकुले भर्तृकुले च सुबद्धां सुश्लिष्टां सतीमेतां कन्याममुतः पितृकुला-दमुतश्च भर्तृकुलात् माकरत् कश्चिन्मा कार्षीत् कुलद्वये विगमं तस्या मा कार्षीत् कश्चिदपीत्यर्थः। हे इन्द्र परमेश्वर मीढ्वः सेक्तः इयं कन्या सुपुत्रा सुभगा च यथा भवति, तथा कुरु। हे कन्ये इतः स्थानात् पूषा इन्द्रस्त्वां नयतु। हस्तगृह्य हस्तेन गृहीत्वा। अश्विनौ च त्वां रथेन प्रवहतामभिमतं स्थानं प्रापयताम्। तथा क्रमेण त्वं गृहान्भर्तृवेश्मानि गच्छ। तत्र च गृहपत्नी गृहस्य पालयित्री प्रभुर्यथा असः भवसि, तथास्तु। वशिनी जितकर्मकरजनादिका भव। विदथे च यज्ञे मा वदासि यज्ञ-प्रतिकूलं भर्तुर्मा वादीः वैदिककर्मकलापानुकूला भवेत्यर्थः।

ये परिपन्थिनो मार्गे प्रतिकूलाश्चौरप्रभृतयो दम्पती जायावरौ आसीदन्ति दुष्टबुद्ध्या समासीदन्ति, ते त्वां मा विदन् मा द्राक्षुः सुगेभिः शोभनगमनैर्दुर्गं मार्गम-तीतामतिक्रान्तां सर्वम्। किञ्च अपद्रान्त्वरातयः शत्रवो दानहीनाश्च धनाभावाश्च दारिद्र्याभिधाना अपद्रान्तु भीताः पराङ्मुखाः सन्तः पलायमानाः कुत्सितां स्खलनरूपां गतिं लभन्तामित्यर्थः।

**आचारिकाणि।। ६।।**

अस्मिन्नवसरे आचारिकाणि आचारादागतानि देशजातिकुलधर्मतया प्रसिद्धानि कर्माणि कारयेदित्यर्थः। तद्यथा - आगमनप्रयोजनकथनं कन्याया नामग्रहणं कुलदेवतापूजनं सुमनोलताभिस्ताडनमित्यादीनि।। ६।।

**तूष्णीं निर्मन्थ्यं भ्राष्ट्रात्सान्तपनं यत्र दीप्यमानं वा बहिरग्निमुपसमाधाय**

**परिसमूह्य पर्युक्ष्य परिषिच्य परिस्तीर्याऽऽज्यं विलीनोत्पूतं कृत्वाऽऽघारादाज्यभागान्तं हुत्वापरेणाग्निमनो रथं वावस्थाप्य योगे योग इति युनक्ति दक्षिणमितरमुत्तरमितराम्।। ७।।**

'एष औपसदोऽग्निर्वैवाहनो वा', 'तस्मिन् पाकयज्ञाः' इति वक्ष्यति (४७ का०)। वैवाहनस्य विकल्प्यमानाश्चतस्रः प्रकृतयोऽत्रोच्यन्ते। सद्यः अरणिभ्यां निर्मथितो यस्तत्र निर्मन्थ्यशब्दो रूढः। तत्र निर्मन्थनसामान्यान्निर्मन्थनान्तरवन्मन्त्रे प्राप्ते तूष्णीमित्युक्तम्। एष एकः। भ्राष्ट्रादिद्वितीयः। सान्तपनस्तृतीयः। यो बलेनाग्निना सन्तप्तादपसारिताग्निकाद्भूभागात् कार्पासगोमयचूर्णादिसंसर्गं कृत्वोत्पाद्यते पाषाणं कंसमणिं वा तापयित्वा सूर्यसम्मुखं सूर्यकान्तमणिं वा स्थापयित्वा, सोऽभिमतः। यत्र दीप्यमानश्चतुर्थः। अत्राविशेषश्रुतावपि त्रेतावसथश्मशानपरिगृहीतसूतकपतिताद्यग्निवर्जमिति ज्ञेयम्। उपसमाधायेति प्रत्येकं सम्बन्धनीयम्, गार्हपत्यवदुद्धतावोक्षिते जानुदघ्ने कुण्डे स्थापयित्वेत्यर्थः। गृहाद्बहिरेवेति नियमः। परिसमूहनं सजलेन करेण चतुर्दिक्संस्पर्शनम्। पर्युक्षणमासेचनम्। एवं चतुर्दिक्कमेव दर्भैः परिस्तरणं प्रथितम्। प्राग्दक्षिणोदक्ष्वस्तरणमित्यन्ये मन्यन्ते त्रिभिस्तरैः स्तृणातीति वैश्रवणीयदर्शनात्। आज्यस्य विलयनं विगलनम्, उत्पवनं पवित्रेण पावनम्। आघारादाज्यभागान्तान् होमान् हुत्वा अग्नेः पश्चिमभागे स्थितयोः सतोः कन्यावरयोर्यथासंख्यं वामदक्षिणभागेनाग्नेरपरभागे अनः शकटं, रथं स्यन्दनं वा सयुगमवस्थाप्य योगे योग इत्यादिकयर्चा कन्यावरौ यूपे युनक्ति दक्षिणभागे वरमुत्तरभागे कन्यां योक्त्रेण संयोजयतीत्यर्थः।

**योगे योगे तवस्तरं वाजे वाजे हवामहे। सखाय इन्द्रमूतये।।**

गायत्री। मैत्री। कश्यपस्यार्षम्। वयमिन्द्रं हवामहे आह्वयामः। कुत्र। योगे योगे, दम्पत्योः सहभावेनावस्थितयोः परिकर्मसम्बन्धे। तथा वाजे वाजे, वाजशब्दोऽन्नबलसङ्गमवचनः, इह त्वन्नवचनो गृह्यते गार्हस्थ्यस्यान्नमूलत्वात्, वाजशब्देन चान्नसाधनं वक्ष्यते, हविषि हविषि चाज्येष्टभागदानायेति प्रोत्साहना। किमर्थमाह्वयामः। ऊतये अवनाय। कीदृशा वयम्। सखायः समानख्यानाः। कीदृशमिन्द्रम्। तवस्तरं तवःशब्दो बलवचनः महत्त्ववचनो वा, बलवत्तरं महत्तरं वा।। ७।।

**तूष्णीं विमुच्य खे रथस्य खेऽनसः खे युगस्य शतक्रतो। अपाला-**

**मिन्द्रस्त्रिष्पूत्वा करोतु सूर्यवर्चसमिति हिरण्यं निष्टर्क्यं बद्ध्वाध्यधि मूर्धनि दक्षिणस्मिन्युगतर्मण्यद्भिरवक्षारयते शं ते हिरण्यं शमु सन्त्वापः शं ते मेथी भवतु शं युगस्य तर्म। शं त आपः शतपवित्रा भवन्त्वेना पत्या तन्वा संसृजस्वेति।। ८।।**

प्रकृतयोक्त्रयुक्ताविवात्रापि प्राप्तं मन्त्रं निषेधयति तूष्णीमिति। विमुच्य कशायोजितं योक्त्रं मोचयित्वा। खे रथस्येत्यादिकयर्चा हिरण्यं दर्भपवित्रेण बद्ध्वा युगस्य दक्षिणभागगते रन्ध्रे निदधाति। कथं बद्ध्वा। निष्टर्क्यं कृत्वा यथा सुखमोचनं भवति तथेत्यर्थः, निष्टर्क्यं सुखविमोचनम्। तत्सुवर्णं बद्ध्वानन्तरं दक्षिणभागे वरस्थाने कन्यामानीय ससुवर्णे दक्षिणस्मिन्युगस्य तर्मणि च्छिद्रे पूर्वोक्ताभिरद्भिरध्यधि क्षारयति, 'उपर्यध्यधसः सामीप्ये' (८.१.७) इति वीप्सायां सामीप्ये अध्यधीति द्विर्वचनम्, युगच्छिद्रस्याधः समीपे कन्यां स्थापयित्वा मूर्धनि सुवर्णोदकं क्षारयतीत्यर्थः। अस्मिन्नवसरे कन्यावरयोः स्थानपरिवृत्तिः सम्पन्ना, पुनः स्थान एव स्थितिर्भविष्यति। यद्वक्ष्यति, 'दक्षिणतः पुमान्भवति' (२५का०) इति।

खे रथस्येत्यैन्द्री अनुष्टुप्। ब्रह्मण आर्षम्। अन्यत्राप्युच्यमाने ब्रह्मण एवार्षम् - 'अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः।' इति सर्ववेदानां सामान्येन तद्दृष्टत्वस्मृतेः। हे शतक्रतो अनन्तक्रिय इन्द्रस्तेजस्विनां मध्ये परमेश्वर आदित्य एतां कन्यां सूर्यवर्चसमादित्यकल्पकान्तिं करोतु। किं कृत्वा। त्रिष्पूत्वा त्रीन् वरान् पवित्रयित्वा। कीदृशीम्। अपालां विवाहात्पूर्वं स्वच्छन्दचारिणीमत एव पावनयोग्याम्। क्व। रथस्य खे, तथा अनसः शकटस्य युगस्य च खे च्छिद्रे। अथवा अपालामिवेन्द्र इमां कन्यां पूतां कृत्वा सूर्यवर्चसं करोत्विति इवार्थगर्भं व्याख्यानम्। यथा किलापालेति नाम्ना अत्रेर्दुहिता कुष्ठव्याधिग्रस्ता शून्याश्रमे स्नानाद्यर्थापसृतमुनिके दृष्टा यूपादिच्छिद्रेषु सुवर्णोदकेनाभिषिच्येन्द्रेण व्यपगतरोगा सूर्यकान्तिः सम्पादिता, तद्वदेतामप्यपगतपापां कृत्वा सूर्चवर्चसं करोतु इन्द्रः। तथा चेतिहासः -

'अपालाऽत्रिसुता त्वासीत्कन्या त्वग्दोषिणी पुरा।
तामिन्द्रश्चकमे दृष्ट्वा विजने पितुराश्रमे।।
रथच्छिद्रे तु तामिन्द्रो युगस्य शकटस्य च।
प्रक्षिप्य निचकर्ष त्रिस्ततः सा सुत्वचाभवत्।।' इति।

शं ते हिरण्यमिति जगती। हे कन्ये ते तव हिरण्यं शं सुखमस्तु। शमु सन्त्वापः, उ इति निपातः समुच्चये, आपश्च ते सुखं सन्तु। मेथी रथावस्तम्भनं वरूथं शं सुखं तवास्तु। युगस्य तर्म च्छिद्रं तव सुखकरमस्तु। आपस्ते शतपवित्रा बहुपावन्यः सुखकारिण्यो भवन्तु। एना पत्या तन्वा संसृजस्व, एना अनेन भर्त्रा सह तन्वा शरीरेण संसृजस्व सम्बध्यस्व। क्वचित्तु शाखायां पठ्यते तन्वं संसृजस्वेति, भर्त्रा सह संयोजयेति तत्रार्थः।। ८।।

**दक्षिणतः पुमान् भवति।। ९।।**

कन्याया अभिषेकसंस्कारे कृते सति पुनरग्नेरपरभागे प्राङ्मुखः पुरुषो भवति दक्षिणेन, अर्थात् कन्या उत्तरेण भवतीति लभ्यते। अत्र दक्षिणभागमानीय संस्क्रियमाणत्वात् कन्या प्रधानमित्येके, स्वतन्त्रत्वात् तदा दक्षिणभागे चावस्थानात् पुरुषः प्रधानं विवाह इत्यन्ये।। ९।।

**अथ जुहोत्यग्नये जनिविदे स्वाहा, सोमाय जनिविदे स्वाहा, गन्धर्वाय जनिविदे स्वाहेति।। १०।।**

अथशब्दो मङ्गलार्थ इति माठरः, अन्तरालेऽक्षतसक्तुहोमद्योतनायाथशब्द इत्यादित्यदर्शनः। अवश्यं हि उक्तयुक्त्या ते होमान्तरालादावपि होतव्या इत्यत्रैवावसरे न क्षतिरिति। होमान् क्रमेणाह अग्नये इत्यादि।

'पूर्वं देवैः स्त्रियो भुक्ताः सोमगन्धर्ववह्निभिः।' इति श्रूयते। तेन निष्क्रयाय तेषां होमः। यद्यपि च सोमः प्रथमस्तथाप्यग्रतो होमोऽत्राग्नये 'येन कर्मणेच्छेद-ग्निमुखं कुर्यात्' इत्यभिप्रायेण। अग्नये स्वाहा सुहुतमस्तु। कीदृशाय। जनिविदे जनी वधूः जनीं वेत्ति विन्दते वा जनिवित् तस्मै। एवमन्यत्।। १०।।

**आयुषः प्राणं सन्तन्विति सन्तनीर्जुहोति।। ११।।**

एकादश सन्तन्य एवमाद्याः।। ११।।

**जयाभ्यातानान् राष्ट्रभृतश्च।। १२।।**

जुहोति इत्यनुषङ्गः। जयाश्चाभ्यातानाश्च, तान् राष्ट्रभृतश्च जुहोतीत्यर्थः।। १२।

**तानि यथोक्तम्।। १३।।**

तानि त्रीणि जयादीनि कर्माण्युक्तानतिक्रमेण कर्तव्यानि। द्वादशगृहीतेन जयाञ्जुहुयादिति लौगाक्षिः। यथाधीतं मन्त्रमनुद्रुत्य ऋगन्तेन स्वाहाकारेण द्वादशप्रक्षेपा अपीति केचित्। अन्ये तु द्वादशावदानगृहीताज्यस्य सर्वमन्त्रानुद्रवणे सर्वान्ते स्वाहाकारेणैक एव प्रक्षेप इत्यनुतिष्ठन्ति, प्रतिमन्त्रं तु द्वादशावदानान्युद्धरन्ति। अभ्यातानां होमे तु चतुर्गृहीतं जुहोति। तत्र 'बृहस्पतिपुरोहिताः', 'देवहूत्याम्' इति आघातग्रहणम्। राष्ट्रभृतस्तु द्वादशगृहीतेन त्रयोदश होमाः। ऋताषाडिति द्वादशभिर्वडन्तैर्हुत्वा 'स नो भुवनस्य पते' इति रथमुखेऽध्यध्यग्निं ध्रियमाणस्येति यथोक्तता। पाकयज्ञेषु ह्येतत्त्रयं यथावद्व्यवस्थितं, तत्रैव समन्त्रकं व्याख्यास्यामः।। १३।।

**आधिपत्यानि जुहोति।। १४।।**

अधिपतिशब्दोपलक्षितलिङ्गादाधिपत्यान्युच्यन्ते। तानि सानुषङ्गान्येकविंशतिर्यजूंषि।

**अग्निर्भूतानामधिपतिः स मावतु तस्मै स्वाहा। यमः पृथिव्या अधिपतिः स मावतु तस्मै स्वाहा। वायुरन्तरिक्षस्याधिपतिः स मावतु तस्मै स्वाहा। सूर्यो दिवोऽधिपतिः स मावतु तस्मै स्वाहा। चन्द्रमा नक्षत्राणामधिपतिः स मावतु तस्मै स्वाहा। विष्णुर्दिशामधिपतिः स मावतु तस्मै स्वाहा। पूषा पथीनामधिपतिः स मावतु तस्मै स्वाहा। त्वष्टा रूपाणामधिपतिः स मावतु तस्मै स्वाहा। सविता प्रसवानामधिपतिः स मावतु तस्मै स्वाहा। इन्द्रो ज्येष्ठानामधिपतिः स मावतु तस्मै स्वाहा। मित्रः सत्यानामधिपतिः स मावतु तस्मै स्वाहा। वरुणो धर्मणामधिपतिः स मावतु तस्मै स्वाहा। रुद्रः पशूनामधिपतिः स मावतु तस्मै स्वाहा। बृहस्पतिर्ब्रह्मणामधिपतिः स मावतु तस्मै स्वाहा। ब्राह्मणो वाचामधिपतिः स मावतु तस्मै स्वाहा। सोम ओषधीनामधिपतिः स मावतु तस्मै स्वाहा। समुद्रः स्रवत्यानामधिपतिः स मावतु तस्मै स्वाहा। अन्नं साम्राज्यानामधिपतिस्तन्मावतु तस्मै स्वाहा। गायत्री च्छन्दसामधिपत्नी सा मावतु तस्यै स्वाहा। मरुतो गणानामधिपतयस्ते मावन्तु तेभ्यः स्वाहा। पितरः पितामहाः परेऽवरेभ्यस्ते नः पान्तु ते नोऽवन्त्वस्मिन्ब्रह्मण्यस्मिन्कर्मण्यस्मिन्क्षेत्रेऽस्यामाशिष्यस्यां पुरोधायामस्यां देवहूत्यां स्वाहा।।**

भूतानां स्थावरजङ्गमानामग्निरधिपतिर्नियन्ता स मा अवतु आगच्छतु हविर्ग्रहीतुं मां रक्षतु च, तस्मै स्वाहा सुहुतमस्तु च। यमः पृथिव्या नियन्ता स मावतु स्वाहेत्यनुषङ्गः। एवमन्यत्र। विष्णुर्दिशामधिपतिर्व्यापकत्वात्। पूषा पथीनां पथिकानाम्।

त्वष्टा रूपाणां, त्वष्टा प्रजापतिर्विश्वकर्मा, सरूपाणां सर्वाकृतीनामधिपतिः। सविता प्रसवानां, प्रसूयन्त इति प्रसवाः अङ्कुरादयः। इन्द्रो ज्येष्ठानां प्राशस्त्यानाम्। मित्रः सत्यानामिति तथाच श्रूयते, 'मित्राय सत्यपतये' इति। वरुणो धर्मणां धर्माणो धर्तारस्तेषां वरुणोऽधिपतिः, 'वरुणोऽसि धृतव्रतो वरुणस्त्वोत्तुभ्नातु' इति दर्शनात्, धर्तॄणां पृथिव्यादीनां सर्वेषां वरुणो धर्तेति वैशेषिकादिभिरप्युक्तम्। रुद्रः पशूनां, स ह्यऽभ्यर्थयते, 'अहमेव पशूनामीशे' इति। बृहस्पतिर्ब्रह्मणां वेदानामधिपतिः। ब्राह्मणो वाचां, स एव हि दैवीनां मानुषीणां च वाचामुपदेष्टा, 'तस्माद्ब्राह्मण उभे वाचौ वदति दैवीं च मानुषीं च' इति श्रुतेः। सोमश्चन्द्रो ग्राम्यारण्यानामोषधीनां फलपाकान्तानामधिपतिः। स्रवत्यानां फलपाकान्तानामधिपतिः। स्रवत्यानां नदीनां समुद्रोऽन्तरिक्षाख्योऽधिपतिः, अपामाश्रयणीयं ह्यन्तरिक्षं सूक्ष्माणामन्यथावश्यायः कथम्। साम्राज्यमैश्वर्यं, तेषामन्नं, पृथिव्याः सौरो रसोऽधिपतिः। मरुतो गणानां, सर्वेषामेवाग्न्यादिगणानां मरुतोऽधिपतयो व्याख्याताः। अवरेभ्यः निकटेभ्यः पितृपितामहादिभ्यो ये परे सर्गसमुद्भवा हिरण्यगर्भमनुप्रभृतयः पितरः, ते नः पान्तु पालयन्तु चेति प्रकृतमपेक्षणीयमवतेः प्रकृतस्य गत्यर्थत्वात्। क्वावन्तु। अस्मिन् ब्रह्मणि, एतेषु ब्राह्मणेषु ऋत्विक्षु दक्षिणया स्वीकृतेषु, अस्मिन् विवाहाख्ये कर्मणि, अस्मिन् क्षेत्रे पालने, अस्यां चाशिषि ऋत्विग्भिराधीयमानायां दम्पत्योः फलभृतायां, यद्यपि ऋत्विग्विशेषा मामवन्त्वित्युच्चारयन्ति, तथापि कर्मणो दक्षिणया तदीयस्य परिक्रीतत्वाद्यजमानस्यैव फलम्, पुरोधायां पौरोहित्यकर्मणि, देवहूत्यां देवानां हूतिराह्वानं हविर्दानाय यत्र, सा देवहूतिर्विवाहभूमिरिह।। १४।।

**आकूत्या इति त्रिभिस्त्वेत्यन्तैर्हिरण्यगर्भ इत्यष्टभिः प्रत्यृचं भूः स्वाहेति महाव्याहृतिभिश्चतसृभिरग्न आयूंषीत्याग्निपावमानीभिस्तिसृभिर्हुत्वा हुत्वा मूर्ध्नि सम्पातानवनयेत्।। १५।।**

'आकूत्यै वा' इत्यादिभिर्मन्त्रैराज्यं हुत्वा हुत्वा कन्याया मूर्ध्नि सम्पातान् हुताज्यशेषबिन्दून् मूर्ध्न्यवनयेत् स्रावयेत्। त्वेत्यन्तैरिति स्वाहाकारान्ततां निवर्तयतीति केचित्। अन्ये त्वाहुः त्वान्तानामेव पाठात् स्वान्तत्वाव्यभिचारात् अन्यान्तत्वमप्यस्तीति स्वाहाकारान्ततार्द्योतनाय त्वान्तग्रहणमिति। हिरण्यगर्भ इत्यादिना सकलेनानुवाकेनैक

एव होमो मा विज्ञायीति प्रत्यृचग्रहणम्। आग्निपावमानीभिरित्यग्निलिङ्गाभिः पवमानलिङ्गाभिश्च।।

**आकूत्यै त्वा कामाय त्वा समृद्ध्यै त्वा।।**

आकवनमाकूतिरभिप्रायः, अभिप्रेतसिद्धये हे आज्य त्वां जुहोमीत्यर्थः। व्याख्यानाङ्गं जुहोतिरध्याह्रियते, न तु मन्त्रैकदेशः। अध्याह्रियमाणस्य मन्त्रैकदेशत्वे ऋचामपि साकाङ्क्षत्वादध्याहारसहितानां यतिर्विनश्येत्, ततश्च गायत्र्यनुवाक्या त्रिष्टुबिति नावकल्पते। तस्मादर्थव्याख्यानाङ्गमेव अध्याहारो, न मन्त्रैकदेशः, इत्याहुः। कामाय काम्यमानसिद्धये त्वां जुहोमि। समृद्धिः सम्पत्, तदर्थं त्वां जुहोमि।

**हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।**
**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम।। १।।**

अष्टानामपि पुरुषस्य नारायणस्यार्षम्। हिरण्यगर्भः प्रजापतिः पुरुषो नारायणः प्राणो जगत्सूत्रं कः सम्राडिति पर्यायाः। हिरण्यगर्भः अग्रे सर्गादौ समवर्तत प्रादुर्बभूव। स च जातः प्रादुर्भूतः सन् एक एव भूतस्य समस्तस्य पृथिव्यादिभूतजातस्य अभिव्यङ्ग्यस्य वा महदादेः पतिः पालकः प्रभुरासीत्, व्यत्ययेनातीतविभक्तिः, प्रादुर्भवति। जगदादौ हिरण्यगर्भः पतिश्च भवति सर्वस्येत्यर्थः। स हीमां प्रत्यक्षां पृथिवीं क्षितिं दाधार धारयते, उत तथा द्यां स्वर्गं पृथिवीं च। पृथिवीशब्दः सामीप्यादन्तरिक्षे वर्तते। हिरण्यगर्भ एव हि सर्वं प्रोतं सूत्रे मणिगणा इव। तस्मै कस्मै प्रजापतये, देवाय दानादिगुणयुक्ताय, हविषा आज्येन विधेम परिचराम, तस्मै हविर्दद्म इति यावत्।

**यः प्राणतो निमिषतश्च राजा पतिर्विश्वस्य जगतो बभूव।**
**ईशे यो अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम।। २।।**

यः प्राणापानादिमतो निमेषादिमतश्च देवमानुषादेः राजा प्रभुः, पतिः पालयिता। प्राणेन अपानाद्युपलक्ष्यते, निमेषेण स्पर्शनादिकं बुद्धीन्द्रियकर्मेन्द्रियक्रियायोगित्वम्। प्राणनादिकं कुर्वतः निमिषतो जिघ्रतो विहरत इत्यादि ज्ञेयम्। विश्वस्य सर्वस्य जगतो जङ्गमस्य बभूव भवति। स हि ईशे ईष्टे प्रभवति द्विपदो देवमनुष्यादेः, चतुष्पदो गवादेः। तस्मै कस्मै देवायेति पूर्ववत्।

**य ओजोदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः।**
**यस्य च्छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम।। ३।।**

ओज उत्साहः, बलं सामर्थ्यं, तद्ददातीत्योजोदा बलदाः। यस्य सम्बन्धिनं प्रशिषमनुशासनमनुज्ञां विश्वे सर्वे जना देवाश्चोपासते सेवन्तेऽनुवर्तन्ते। यस्य सम्बन्धिनी छाया आश्रय आराधनम्, अमृतं मोक्षफलम्। यस्य च विपर्यय अर्थादनाराधनं, मृत्युः संसारकारी। तस्मै कस्मा इति समानम्।

**येन द्यौरुग्रा पृथिवी दृढा च येन स्वः स्तभितं येन नाकम्।**
**यो अन्तरिक्षं विममे वरीयः कस्मै देवाय हविषा विधेम।। ४।।**

येन प्रजापतिना द्यौरन्तरिक्षमुग्रा उन्नता, दृढा अवष्टब्धा, तथा पृथिवी व्याप्ता, तथा स्वः स्तभितं व्याप्यमवष्टब्धं प्रोतं, स्वर्गोऽप्यवष्टब्ध इत्यर्थः। येन नाकमादित्यमण्डलमवष्टब्धम्। स्वरित्यस्य विशेषणं वा नाकमिति, कं सुखं, न कमकं दुःखं न विद्यते यत्र तन्नाकम्। यश्चान्तरिक्षं विममे निर्ममे। कीदृशम्। वरीय उरुतरम्। तुल्यमन्यत्।

**य इमे द्यावापृथिवी तस्तभाने अधारयद्रोधसी रेजमाने।**
**यस्मिन्नधि विततः सूर एति कस्मै देवाय हविषा विधेम ।। ५।।**

इमे प्रत्यक्षदृश्ये द्यावापृथिव्यौ रेजमाने वेपमाने सत्यौ योऽधारयत् धारयते। कीदृश्यौ। रोधसी रुन्धाने। कथं कृत्वा। तस्तभाने निःशल्ये कृत्वा। यस्मिन्नधि यस्योपरि सूर आदित्य एति गच्छति। कीदृशः। विततो विस्तीर्णः।

**यस्येमे विश्वे गिरयो महित्वा समुद्रं यस्य रसया सहाहुः।**
**दिशो यस्य प्रदिशः पञ्च देवीः कस्मै देवाय हविषा विधेम।। ६।।**

यस्य हिरण्यगर्भस्य इमे प्रसिद्धा मेर्वादयो गिरयः महित्वा महिमानं माहात्म्यमाहुः, तथा पञ्च दिशः प्रागाद्या ऊर्ध्वया सह, विदिशश्च नाग्या सह पञ्च यस्य माहात्म्यमाहुः। देवीर्दानादिधर्मिकाः इति दिशां विशेषणम्।

**आपो ह यन्महतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम्।**
**ततो देवानां निरवर्ततासुरेकः कस्मै देवाय हविषा विधेम ।। ७।।**

यस्मिन् काले सर्गादौ महत्य आपः प्रथमं सृष्टाः सत्यो विश्वं सर्वमायन् व्याप्तवत्यः। किं कुर्वाणाः। गर्भं दधानास्तमेव हिरण्यगर्भं गर्भरूपेण दधानाः धारयन्तः। यथोक्तम् - 'अप एव ससर्जादौ तासु वीर्यमवासृजत्।' (मनु.) इति। कीदृश्यः। जयन्तीरग्निम्। अग्निं तेजःपुञ्जरूपम्, अन्यच्च अण्डादिकं जनयन्त्यः। अथवा अग्निमिति गर्भविशेषणं, तेजः पुञ्जरूपमित्यर्थः। ततो गर्भाधानानन्तरं देवानां द्योतमानामिन्द्रियाणां प्राणिनां वा गत्यादियोगिनां सुरमानुषप्रभृतीनां य एक एवासुः प्राणः सर्वसूत्ररूपो निरवर्तत निर्वृत्तः, तस्मै हविषा विधेम।

**आ नः प्रजां जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः।**
**संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु।। ८।।**

स व्यानरूपो हिरण्यगर्भः प्रजापतिर्नोऽस्माकं प्रजामाजनयतु, धाता विधाता च भूत्वा गर्भं दधातु नः सुमनस्यमानः प्रसन्नचित्तः। संवत्सररूपः सन् ऋतुभिश्चाक्लृपानो विवर्तमानः आर्तवैः पदार्थैर्विपरिणममानः। चाक्लृपान इति लिटः कानच्। उपलक्षणमेतत्प्रथमविवर्तस्य। जलस्य हिरण्यगर्भो विवर्तः, तस्योङ्कारस्तस्य वेदा इत्यादिरूपेण स एव विवर्तते। स हिरण्यगर्भो यतः पुष्टिपतिस्ततोऽस्माकं पुष्टिमादधातु। महाव्याहृतयो व्याख्याताः।

**अग्न आयूंषि पवस आसुवोर्जमिषञ्च नः।**
**आरे बाधस्व दुच्छुनाम्।। १।।**

तिस्रो गायत्र्यः। कूष्माण्डानामार्षम्। हे अग्ने त्वमायूंषि पवसे पुनासि रोगजरादिमलैर्विहीनानि सम्पादयसि। नोऽस्मभ्यमूर्जं बलम् इषं चान्नमासुव जनय देहि। दुरःशुनिपरतस्तान्तादेशे प्रातिशाख्ये दुच्छुनामित्यन्वाख्यानात् शुनामिव दुष्टानां दुच्छुनां हिंस्राणां बाधस्व आरे दूरत एव। दुच्छुनामिति हिंसार्थानामिति कर्मणि षष्ठी।

**अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः।**
**तमीमहे महागयम्।। २।।**

अग्निर्ऋषिः दुष्टान् पवमानः पुनानः, पञ्चजना मनुष्याश्चत्वारो वर्णाः अनुलोमजवर्गः पञ्चमस्तेभ्यो हितः, पुरोहितः, अग्निर्वै देवानां पुरोहितः पुरोऽग्रे परलोके वा हितः कर्मसम्पादनद्वारेण, तं वयम् ईमहे याचामहे महागयं महागृहम्।। २।।

**अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम्।**
**दधद्रयिं मयि पोषम्।। ३।।**

हे अग्ने अस्मे अस्मान् पवस्व पुनीहि। अप इति कर्मनाम, शोभनान्यपांसि यस्य स स्वपाः सुकर्मा अग्निः। किं कुर्वन् पुनीहि। वर्चस्तेजः शोभनं च वीर्यं, तथा रयिं धनं पोषं च पुष्टिं दधद्विदधानः ददद्वास्मभ्यम्।। ३।। १५ ।।

**या ते पतिघ्नी तनूरपतिघ्नीं ते तां करोमि स्वाहा, या तेऽपुत्रिया तनूः पुत्रियां ते तां करोमि स्वाहा, या तेऽपशव्या तनूः पशव्यां ते तां करोमि स्वाहेति त्रिभिः।। १६।।**

या त इत्यादिभिश्च त्रिभिर्मन्त्रैर्हुत्वा हुत्वा कन्याया मूर्ध्नि सम्पातानवनये-दित्यनुषङ्गेण समाप्तिः। मन्त्रत्रयार्थस्तु - हे कन्ये या ते तव पतिघ्नी तनूस्तामपतिघ्नीं करोमि अनेन सम्पातावनयेन, तथा तव या अपुत्रिया पुत्रेभ्योऽहिता तनूस्तां पुत्रेभ्यो हितां पुत्रियां करोमि, याच अपशव्या पशुभ्योऽहिता तनूस्तां पशव्यां पशुभ्यो हितां करोमि। अत्रावसरे पूर्वनिदर्शितविधानेनाक्षतसक्तून् जुहुयात्।। १६।।

पाणिग्रहणमाह -

**उदगग्रेर्दर्भेषु प्राचीमवस्थाप्य शुचिः पुरस्तात्प्रत्यङ्ङुपयन्ता देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णामीति हस्तं गृह्णाति दक्षिणमुत्तानं साङ्गुष्ठं नीचारिक्तमरिक्तेनैवं सव्यं सव्येन।। १७।।**

अग्नेरुदीच्यां दिशि दर्भास्तीर्णे देशे प्राङ्मुखीं कन्यामवस्थाप्य गुरुर्देवस्य त इत्यादिना मन्त्रेण कन्यायाः सम्बन्धिनं हस्तं ग्राहयतीत्यधाहर्तव्यं समानकर्तृकत्वार्थम्। केन प्रयुज्य ग्राहयतीत्यपेक्षायामर्थाद्वरेणोपयन्त्रेति योज्यम्। सचोपयन्ता गुरुणानुज्ञातस्तं गृह्णाति। कीदृशो वोढा गृह्णाति। शुचिः करग्रहणेऽधिकृतः धर्मोपयोगिनी ममेयमिति शुद्धसङ्कल्पः, प्रत्यङ्मुखः कन्यायाः पुरस्तादग्रे स्थितः सन्। 'प्राङ्मुखः सर्वकर्माणि कुर्वीत' इत्यस्यापवादार्थं प्रत्यङ्मुख इति। दक्षिणं लोकप्रसिद्धं, साङ्गुष्ठमङ्गुष्ठसहित-मुत्तानं नीचा दक्षिणेन नितान्तमञ्चति चेष्टासु प्रगल्भते न्यक् दक्षिणस्तेन। यथोक्तं धनुर्वेदे 'पूर्वं वामेन शिक्षेत पूर्वसिद्धो हि दक्षिणः।' इति। न्यञ्चतीति न्यक् तेन नीचा न्यग्भूतेनेत्यावृत्त्या योज्यम्। अरिक्तं साभरणम्, असम्भवे सुवर्णकर्णिकादि-

युक्तम्, अतिदौर्गत्ये पुष्पफलादिसहितम्। अरिक्तेनेति तद्वत्। एवं सव्येन सव्यमिति समस्तस्य मन्त्रादेरतिदेशः। हे कन्ये ते तवाहं हस्तं गृह्णामि, देवस्यान्तरात्मनः सवितुः वैदिककर्माणि चिकीर्षोः प्रसवेऽनुज्ञायां वर्तमानः आदित्यस्य वा सवितुः प्रसवेऽनुज्ञायां वर्तमानोऽश्विनोर्बाहुभ्यां नत्वात्मीयाभ्यां चर्ममयाभ्यां पूष्णो हस्ताभ्यां गृह्णामि।। १७।।

**गृह्णामीति चतस्रस्त्रिष्टुभावनुष्टुभौ जपति।। १८।।**

**गृह्णामि ते सुप्रजास्त्वाय हस्तौ मया पत्या जरदष्टिर्यथासः।**
**भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः।। १।।**

सूर्याया आर्षम्। मान्त्रवर्णिकी देवता। हे पत्नि अहं ते तव हस्तौ गृह्णामि। किमर्थम्। सुप्रजास्त्वाय लोक्यपुत्रसिद्धये। त्वं च मया पत्या भर्त्रा सता जरदष्टिर्यथासः भवसि, तथा भूयाः जराजर्जरितदेहा भूयाः असमये भवत्याः प्रमयो मा भूदित्यर्थः। अमुत्र पक्षे जरया दष्टिरुपक्षयो यस्याः सा जरदष्टिः। त्वा त्वां भगादयश्चत्वारो देवा अदुर्दत्तवन्तः गार्हपत्याय गार्हपत्यार्थम्।

**तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति।**
**या न ऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम्।। २।।**

हे पूषन् आदित्य अस्याः प्रियायास्तां शिवतमां मतिं आ ईरयस्व प्रेरयस्व तनुं वा। यस्यां सत्यामधिकरणभूतायां बीजं रेतो मनुष्या वपन्ति क्षिपन्ति। या नोऽस्मानुशती कामयमाना सती ऊरू विश्रयाते विविधं कृत्वा श्रयाते समर्पयति विततयति वात्मीयावूरू। वयमपि यस्यामुशन्तः कामयमानाः सन्तः प्रहराम प्रक्षिपाम शेपं प्रजननम्, अन्योन्यमावयोः प्रीतिरस्त्वित्यर्थः। तथाह्ययमुपकारो भवति -

**सम्प्रीतिर्यत्र दम्पत्योस्त्रिवर्गस्तत्र वर्धते।**

**सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये।**
**रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्।। ३।।**

इयं कन्या पूर्वं सोमस्य सम्बन्धिन्यासीत्। स सोमो भुक्त्वेमां गन्धर्वायाददत् ददौ, गन्धर्वोऽग्नये। अग्निर्मह्यं सम्प्रति ददातु। न केवलमिमां यावता रयिं धनं

पुत्रांश्चाग्निर्मह्यं ददातु अग्निरिमां कन्यां मह्यं दत्वा पुत्रधनसमृद्धां करोत्वित्यर्थः। एतमेवार्थं चतुर्थ्यर्चा प्रपञ्चयति -

**सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः।**
**तृतीयोऽग्निष्टे पतिस्तुरीयोऽहं मनुष्यजः।। ४।।**

हे कन्ये त्वां सोमः प्रथमो विविदे पतिस्तव बभूव प्रथमः। तत उत्तरो द्वितीयः गन्धर्वो विविदे। तृतीयोऽग्निस्ते पतिस्तव पतिर्बभूव। तुरीयश्चतुर्थोऽहं मनुष्यजो मानुष्यः सम्प्रति भवामि।। १८।।

**ततो गाथा वाचयति सरस्वति प्रेदमवेत्यनुवाकमुभावित्येके यदि पृथक्तन्त्रम्।। १९।।**

गीयन्त इति गाथाः विशिष्टा एव ऋचः। अत एव कास्ता इत्यपेक्षायां, सरस्वति प्रेदमवेत्यनुवाकमाह अत्रानुवाके याः स्थितास्ता एवेत्यर्थः। द्व्यन्तरस्वर-युक्तासु च कासुचिदृक्षु गाथाशब्दो रूढः। यथोक्तम् -

'छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः।
उच्चनीचस्वरं प्राहुः स वै गाथिक उच्यते।।' इति।

अयं समुदायार्थः - ततोऽनन्तरं सरस्वतीत्यनुवाकपरिच्छिन्ना गाथा गुरुर्वरं वाचयति भाणयति। एके पुनर्मन्यन्ते उभावपि कन्यावरौ गाथा गुरुर्वाचयति। किं सर्वदा। नेत्याह, यदि पृथक्तन्त्रमिति। अत्रायमभिप्रायः - विवाहोद्वाहौ हि भिन्ने कर्मणी। कन्यासंस्कारो विवाहः। वरसंस्कार उद्वाहः। तत्र यदि देशकालकर्त्रैक्या-त्तन्त्रेणेतिकर्तव्यता, तदा सकृदेकं वरमेव भाणयति गाथाः स्वाध्यायिको गुरुः, यदि तु देशकालैक्येऽपि कन्यावरयोरेवाधिकृतत्वादृत्विजो दक्षिणया क्रीतत्वात् कर्तृ-भेदात्तन्त्रभेदस्तदोभावपि वाचयितव्यौ इति।

**।। सारस्वतानुवाकविवृतिः।।**

**सरस्वति प्रेदमेव सुभगे वाजिनीवति।**
**यां त्वा विश्वस्य भूतस्य प्रागायाम्यस्याग्रतः।। १।।**

अत्रानुवाके ब्रह्मण आर्षम्। अनुष्टुप् छन्दः। गन्धर्वाप्सरोराजर्षिप्रभृतीनां

चरितं द्व्यन्तरेण स्वरेण याभिर्गीयते, ता गाथा इत्युक्तम्। इह च सर्ववाक् सरस्वती, तद्रूपेण च वधूरुपचर्यते। मनोमेघप्रभृतिश्च गन्धर्वः। तद्रूपो वरः स्तुत्यर्थमुच्यते सरस्वतीति। प्रेत्युपसर्गोऽवेत्याख्यातेन सम्बध्यते। हे सरस्वति सा त्वमिदं कर्म प्राव 'अव रक्षणे' गोपाय। सुभगे सर्वहितकारिणि। वाजिनीवति वाजिन्यः फलपाकान्ता ओषधयस्तद्वति। स्तनयित्नुवाग्रूपा सरस्वती वृष्ट्यादिरूपेण। सा का। यां त्वामहं प्रागायामि शब्दयामि स्तौमि। कीदृशीम्। अस्य विश्वस्य सर्वस्य भूतस्योत्पन्नस्य सर्गादावग्रे स्थितां शब्दब्रह्मविवर्तत्वात् सर्वस्य सरस्वत्याश्च शब्दरूपत्वात्।

**याग्रे सर्वं समभवद्यस्यां विश्वमिदं जगत्।**
**तामद्य वाचं गास्यामि या स्त्रीणामुत्तमं मनः।। २।।**

तां चाद्य अस्मिन्नहनि सरस्वतीं वाचं गास्यामि शब्दयिष्यामि। या स्त्रीणामुत्तमं मनः मानसं प्रकाशनम्, प्रकाशात्मिका हि वाक्, प्रकाशरूपं च हृदयं चेतः। या च अग्रे प्रथमं सर्गादौ समभवत् सर्वं, विवर्तरूपा बभूव। यस्यां चेदं वर्तमानं विश्वं सर्वं जगदाश्रितम्।

**य इह पूर्वे जना आसन् पूर्वे पूर्वतरेभ्यः।**
**मूर्धन्वांस्तेभ्यो गन्धर्वः पुरा देवेभ्य आपतत्।। ३।।**

य इह पूर्वे जनाः, य इह जगति पूर्वे जना अभूवन्, तत्पूर्वतरेभ्योऽपि च पूर्वे, तेभ्योऽपि पुरा गन्धर्वो मूर्धन्वान्नाम्नासीत्। किं बहुना, देवेभ्योऽपि यः पुरा आतपत् प्रकाशितवान् ब्रह्मरूप इत्यर्थः। गां सरस्वतीं धारयति वृणोति च गन्धर्वः। सरस्वती वागात्मिकेयमधिगीयमाना कन्या, प्रजापतिरूपो गन्धर्वो वर इति प्ररोचनार्थः।। ३।।

**य एति सर्वतः प्राग्भ्यो दिशोऽधिपवमानः।**
**मूर्धन्वांस्तेभ्यो गन्धर्वः पुरा देवेभ्य आपतत् ।। ४।।**

यो वायुरूपः सन् सर्वत एति आगच्छति अधिपवमान आधिक्येन पवित्रीकुर्वन्। अतश्च प्रागादिभ्यो दिग्भ्य आगच्छन्तः प्राच्यादिदेशभेदेन व्यपदेशभेदभिन्ना वायवो भवन्ति, तेभ्योऽपि देवेभ्यो वायुभ्यः पुरा पूर्वं मूर्धन्वानेव गन्धर्वः आतपत्।। ४।।

**स भगवो न मरिष्यस्यहं चेदस्मि भेषजम्।**
**मूर्धन्वांस्तेभ्यो गन्धर्वः पुरा देवेभ्य आपतत्।। ५।।**

यः पूर्वोत्पन्नः सन् जीवात्मना सह प्राणाख्यो वायुः, हे भगवः भगवन् जीव, स त्वं मरणधर्मापि न मरिष्यसि यावदहमस्मि भवामि भेषजं तिष्ठामि इन्द्रियैः सह। तेभ्योऽपि देवेभ्यो द्योतनादिधर्मकेभ्यः प्राणेन्द्रियेभ्यः पुरा मूर्धन्वान् गन्धर्व आतपत्।। ५।।

**हिरण्यवर्णो वैरम्पः स त्वा मन्मनसं करोतु।**
**यद्राजा याति समितिं समुद्रमिव सौभ्रवः।। ६।।**

स प्रकृतो गन्धर्वः प्रजापतिः हे वधु त्वां मन्मनसं करोतु इति वर आशास्ते मदेकचित्तां पतिव्रतां करोत्वित्यर्थः। कीदृशः सः। हिरण्यवर्णाः भास्वरप्रकाशैकरूपः। वैरम्पो वीरस्य योगिनो मोहवैचित्र्यमोहनसमर्थस्य कर्मवैरं, तत् पाति रक्षतीति वैरम्पः। यत् यः सौभ्रवः शोभनभ्रूमध्यसंयमात्प्रतीतो योगिनां, राजा राजमानः, समितिं संग्राममिव समुद्रमिमं संसारदुःखभारं याति तारयतीत्यर्थः। य एति सर्वतः प्राग्भ्यो दिश इति पञ्चम्याः स्थाने व्यत्ययेन प्रथमा। केचित्प्राग्भ्यो विश इति पठन्ति, तत्र छान्दसो वर्णव्यत्ययः। पुराणतरच्छान्दसास्तु पठन्ति प्राग्वादिभ्योऽधिपवमान इति, अर्थं च व्याचक्षते प्राक् प्रथमं वाति वायते वा गच्छति प्राग्वा, सर्वाभ्यः सर्वतो दिग्भ्यः पवमान एतीति।

'विच्छिन्नसम्प्रदायेषु शताध्ययनवर्तिषु।
मन्त्रेष्वपौरुषेयेषु यथेच्छं परिकल्पनात्।।
पाठानां गत्यभावेन यथादृष्टि प्रदर्शनम्।
क्रियमाणं सतामग्र्यैर्नोपालभ्यं कथञ्चन।।'

**न वातस्याभि वायते नोद्वातस्यामि धीयते।**
**न वातस्या धुरं वहतो नोद्वातस्यापमीयते।। ७।।**

वातस्याभि अग्रे न अन्येन केनापि देवेन वायते गम्यते। नोद्वातस्याभि धीयते नच वातस्याभिमुखेन केनापि धीयते आगन्तुं मन्यते। वातस्य धुरं वहतः पृथिव्यादिकं धारयतो विमानादिकं च प्रेरयतो नान्येन केनाप्यपमीयते सह गम्यते

माहात्म्यमाचर्यते। उदिति निपातः सहार्थे। पुनःपुनर्वातशब्दोदीरणमतिशयार्थमहो रमणीया अहो रमणीयेत्यादिवत्। केचित्तु पठन्ति नेद्वातस्याद्ध धीयते न इत् वातस्य आत् ह धीयते, उकारो वर्णागमः, हशब्द इतिहासे, अन्येनाधीयते सहायेनागम्यते।। ७।।

**आ सत्यहरितो रथः सौभ्रवः सुहिरण्ययः।**
**तं वात इद्ध्रजीयत्युद्वातो दृढया धुरा।। ८।।**

आ इत्युपसर्गो ध्रजीयतीत्यनेनाख्यातेन सम्बध्यते। सत्यः सत्यप्रधानो हरितो हरितवर्णः आदित्यरथः, अथवा सत्यप्रधानाश्च ते हरयोऽश्वास्ते विद्यन्ते यस्य स सत्यहरित इति मत्वर्थीयस्तकारः। सौभ्रवः भ्रूसंयमेन तीक्ष्णदृष्टिभिरपि द्रष्टुमशक्यः। हिरण्ययः हिरण्मयस्तैजसः। तमुद्वात ऊर्ध्वगतिर्वात आध्रजीयति आध्रजयति गमयतीति विवर्तस्य प्रजापतिरूपस्य वायोर्माहात्म्यवर्णनम्। कया आध्रजीयति उद्वातः। दृढया धुरा ऊर्ध्वे उत्कृष्टो वात एव दृढा धूस्तया।। ८।।

**तवैव राजन्दुन्दुभयस्तव दुन्दुभिरानकः।**
**तव वातोद्वाता अश्वौ तव चैत्ररथं वनम्।। ९।।**

मूर्धन्वान् गन्धर्व उच्यते। हे मूर्धन्वन् राजन् तवैव दुन्दुभयो जयोद्घोषणा वाद्यविशेषाः उत्कृष्टा वा शब्दादयः प्रकाशनपराः, तथा आनकः पटहाख्योऽपि दुन्दुभिविशेषः, तवैव वातस्तिर्यग्गतिः पवनः, उद्वातः ऊर्ध्वगतिर्वातोऽधःपतनाद्वा, तथा अश्वौ। अथवा देहगतः प्राणो वायुरुद्वातः, अपानो वातस्तौ वातोद्वातौ प्राणापानौ शरीरस्य रथस्य अश्वाविव सर्वप्राणिनाम्। चैत्ररथाख्यं वनं देवोद्यानं तवैव, सर्वविभवास्त्वत्स्वामिका इत्यर्थः।। ९।।

**ते शुक्रं शक्रस्याविन्दन्पराञ्चं निहितङ्गुहा।**
**मूर्धन्वांस्तेभ्यो गन्धर्वः पुरा जत्रुभ्य आतृदः।। १०।।**

ते देवा वाय्वादयः शक्रस्य शक्तस्य सर्वकारणस्य प्रजापतेः शुक्रं सारमविन्दन् ज्ञातवन्तः। पराञ्चं परोक्षं गुहायां हृदये विदुषां निहितम्, अविद्याभेदप्रपञ्चो वा गुहा। यद्वा शक्रस्येन्द्रस्य शुक्रं प्रजननमुदकलक्षणं गुहायां रश्मिसङ्घाते निहितं परोक्षं ज्ञातवन्तः ते देवाः। तेभ्यो देवेभ्यः पुरा पूर्वं मूर्धन्वान् गन्धर्वोऽविन्दत्। किमवधि ज्ञातवान्। जत्रुभ्य आतृदः आजत्रुभ्य आतृदः जत्रूणि संश्लेषणानि सर्वाधिकरणानि

'सृपितृदोः कसुन्' (३.४.१७) तृदः तर्दनं विनाशः आसृष्टेराप्रलयात् यदुत्पादन-पालनप्रलयसम्पादनसामर्थ्यं, तन्मूर्धन्वानविन्दत् सकलमिच्छातः।। १०।।

**हिरण्यवर्णं सुभृतं शोभमानं कन्याया हस्तं परिगृह्य पुण्यम्।**
**सा पुत्रकामा सुभगाय भर्त्रे भव वशीयान्गिरिवत्स्थिराय।। ११।।**

एष कश्मीरेष्वेव सम्प्रति पठ्यते। वर आशास्ते कन्याया हस्तं गृहीत्वा अहं वशीयान्भव भूयासम्। भवेति व्यत्ययेन मध्यमपुरुषः। अथवा अन्तरात्माभिधीयते कन्याया हस्तं गृहीत्वा हे अन्तरात्मन् वशीयान्भव गिरिवत्स्थिराय पर्वतवत् स्थैर्याय। हे वधु त्वमपि या मयोह्यसे सा भर्त्रे भर्त्रर्थं पुत्रकामा भव। कामनं कामः पुत्रार्थ एव कामो रतिर्यस्याः सा पुत्रकामा। किमर्थम्। सुभगाय सौभाग्याय, पुत्रवती हि सती लोके श्लाघ्या भवति, नतु रत्येकफला। भर्तृविशेषणं वा सुभगायेति। हस्तं विशिनष्टि - हिरण्यवर्णं सुवर्णकान्तिं, सुभृतं कङ्कणाद्याभरणैः सुपूर्णमत एव शोभमानं, मन्त्रवत्परिग्रहात्पुण्यं पवित्रम्।। ११।।

**वैरम्पे मुनिपर्वते गिरौ हस्तिसङ्काशे।**
**सङ्कल्परमणेऽमरावुभौ सुमनसौ चरावः।। १२।।**

वर आह - हे वधु वैरम्पाख्ये मुनिजनसेविते हरितसङ्काशे सुवर्णमये मेराविति यावत्, सङ्कल्पमात्रेण सर्वाभिलषितसत्फलप्राप्तिर्यत्र तत्र सङ्कल्परमणे, अमरावमरणधर्मकौ देवौ भूत्वा उभावपि सुमनसौ प्रसन्नचित्तौ चरावः सञ्चरिष्यावः पुरुषायुषे पूर्णे।। १२।।

**आणी व रथवेष्टसि वने वारिवर्षण्ये।**
**अप्सराः सूर्यवर्चसिनी वशिनी मन्मना भूयाः।। १३।।**

आणी रथकाष्ठिका, हे वधु त्वमाणी व रथवेष्टसि रथव्यापिनी यथा रथाव्यभिचारिणी, तथा मयि भूयाः पवित्रा। वशब्द उपमायाम्। तथा वने वारिवर्षण्ये विद्युल्लता यथा अव्यभिचारिणी मेघं वनं विना न दृश्यते, तथा त्वं मयि भूयाः। वारि वर्षत् पतत् नयत्यनुमापयतीति वारिवर्षण्या तडित्। अप्सराश्च सेत्याहुः। तथा सूर्यवर्चसिनी तेजस्विनी भूयाः वशिनी च ईशाना मन्मनाश्च मयि दत्तचित्ता पतिव्रता भूया इत्यर्थः।। १३।।

**यासा उपरि तिष्ठति वने वारिवर्षण्ये।**
**वसुगा सूर्यवर्चसिनी वशिनी मन्मना भूयाः।। १४।।**

अथवा यासौ तडिद्रूपधारिणी अप्सरा उपरि तिष्ठति, सैवेह त्वं रूपान्तरेणावतीर्णा अहं च मेघो वारिवर्षण्यः। अतश्च त्वं मयि दत्तचित्ता भूया इति समानं पूर्वेण। वसुगा धनवतीति विशेषः।। १४।।

**अश्वत्थक उपरि श्येनो रमणीयतरो नाम।**
**तस्मिन्ह रम्भा रमते शक्र इव परितक्म्यायाम्।। १५।।**

प्रशस्तो वटवृक्षोऽश्वत्थकस्तत्रोपरि श्येनः शंसनीयो रमणीयतरो नाम गन्धर्व आस्ते। तस्मिन्नप्सरा रम्भा नाम रमते क्रीडते। शक्र आदित्यः, स तथा परितक्म्यायां रात्रौ विश्राम्यति।। १५।।

**आस्यन्दमाना सुभगे निर्गिरिभ्यः सरस्वति।**
**मातेव दुहितृभ्यः कुल्याम्भो विभजा वसु।। १६।।**

सरस्वतीं नदीं वाचं वा मध्यमामभ्यर्थयते। हे सरस्वति सुभगे निर्गता गिरिभ्यः, स्यन्दमाना स्रवन्ती, कुल्याभ्योऽन्यनदीभ्यः वसु जलमाभज विभज मातेव दुहितृभ्यः। यथा माता दुहितृभ्यो धनं पैतृकं विभजते, तद्वत्। मध्यमवाक्पक्षे गिरयो देहाः, कुल्या गलबिलानि।

इदानीं 'वाग्वा अनुष्टुप् वाक्सरस्वती' इति श्रुत्यानुष्टुभः सरस्वतीरूपत्वप्रतिपादनादनुष्टुप्छन्दोरूपेण स्तोतुमाह -

**मध्यं तच्छन्दस आहुर्यत्रादधुर्नाम परेति देवाः।**
**अरुणपिशङ्गोऽश्वोऽस्य दक्षिणा यस्तद्वेद स इहागन्तुमर्हति।। १७।।**

छन्दस इति व्यत्ययेनैकवचनम्। छन्दसां देवानामसुराणां च तदनुष्टुप्छन्दो मध्यं मध्यवर्ति देवा ऋत्विज आहुर्वदन्ति। यत्र च्छन्दसि परेति परागच्छति देवासुरच्छन्दसां मध्यमनुसरति अनुष्टुबित्यनर्थकं नाम देवा आदधुः विहितवन्तः। अत्रान्तरा मध्येऽनुष्टुप् व्यवस्थिता। तानि षोडशिनि ग्रहे विनियुक्तानि। तत्र च षोडशिनि ग्रहे अरुणपिशङ्गोऽश्वोऽस्य दक्षिणा मता। सा चेतरच्छन्दोमध्ये व्यवस्थितस्य राज़प्रख्यस्यास्यैव च्छन्दसोऽनुष्टुब्लक्षणस्य भवतीति सम्भाव्यते। अत

एवम्भूतं तदनुष्टुप्छन्दो यो वेद वेत्ति, स इह पाणिग्रहणस्थाने आगन्तुमर्हति ऋत्विग्जन्यप्रभृतिः, नातद्वित्। देवासुरच्छन्दसां तु मध्यवर्तित्वमनुष्टुभ इत्थम् -

**गायत्र्युष्णिगनुष्टुभो बृहतीपङ्क्तित्रिष्टुभः।**
**जगती चेति विज्ञेयाश्छन्दसां सप्त जातयः।।**

तत्रैकैकाक्षरवृद्ध्या दैवान्येकाक्षरादीनि सप्ताक्षरान्तानि सप्त च्छन्दांसि भवन्ति। दैवी एकाक्षरा गायत्री। द्व्यक्षरा उष्णिक्। त्र्यक्षरानुष्टुप्। एवमादिक्रमेण दैवी जगती सप्ताक्षरा, आसुरी तु पञ्चदशाक्षरा। एकैकाक्षरहान्या च प्रातिलोम्येनान्यान्यासुराणि च्छन्दांसि भवन्ति। तत्र नवाक्षरा गायत्री भवति। एवं चैकाक्षरादारभ्य सप्तमाक्षरपर्यन्तान्यानुलोम्येन दैवानि च्छन्दांसि स्थितानि। पञ्चदशाक्षरादारभ्य प्रातिलोम्येन नवममक्षरं यावदासुराणि। अष्टमं त्वक्षरं वर्गद्वयस्य मध्ये भवति। तेनेयमष्टाक्षरा अनुष्टुप् मध्ये भवतीत्यलमितिवैतत्येन।। १७।।

**इषीकवर्णे लेखभ्रूः सुभगे सुस्मिते।**
**मूर्धन्वांस्त्वा गन्धर्वो मामभिनियच्छतु।। १८।।**

इषीकं शरकाण्डं सुवर्णमित्येके। हे सुवर्णवर्णे शरकाण्डगौराकारे वा, हे लेखभ्रूः अञ्जनलेखावद्भ्रुवौ यस्याः, सा सम्बोध्यते, हे सुभगे प्रियदर्शने, सुस्मिते चारुहासिनि, त्वा मूर्धन्वान्गन्धर्वो मामभि मां प्रति नियच्छतु नियतां मदेकाधीनां करोतु। स हि कन्यास्वामीत्युक्तम्।। १८।।

**उभये त्वा देवगन्धर्वाः सध्यञ्चो विह्वयामहे।**
**तेषां यतरान्कामयसे तानभ्येहि सरस्वति।। १९।।**

सोमक्रयिणी वाक् सरस्वतीत्युच्यते। हे सरस्वति देवा गन्धर्वाश्चोभये सध्यञ्चः सहाञ्चमानाः सह भूत्वा त्वां विह्वयामहे तव विविधमाह्वानं कुर्मः। तेषामुभयेषां मध्ये यतरान् कामयसे देवान् गन्धर्वान्वा, तानभ्येहि आभिमुख्येन गच्छ।। १९।।

**अभ्यावर्तेऽहं देवान्गायतः कामयामहे।**
**गायन्तं स्त्रियः कामयन्ते न तथा ब्रह्मवादिनाम्।। २०।।**

सरस्वत्याह - गायतो देवानेवाहमभ्यावर्ते आभिमुख्येन वर्ते, नतु वेदं

पठतः सुरान्। यतोऽहं गायत एव कामयामहे कामये इति वचनव्यत्ययः। तथाहि गायन्तमेव हि स्त्रियः कामयन्ते, न तु ब्रह्मवादिनं वेदानां पाठकम्।। २०।।

**या सा उपरि पर्वत आत्मना रममाणेव।**
**क्षौममृद्वी ह वा असि त्वोत ओजसि शृणोमि।। २१।।**

या उपरि पर्वते गिरौ मेघे वा विद्युद्रूपेण मध्यमवाग्रूपेण वा आत्मना स्वेन रूपेण रममाणेव क्रीडन्तीव तिष्ठति सरस्वती, सा हे वधु असि भवसि त्वं, नास्ति नः संशयः। कीदृशी। क्षौममृद्वी दुकूलवत्कोमला जलवृष्टिदानेनार्थाभिधानेन वा। ह वै इति निपातौ पादपूरणौ। एवं च सति वधूं वदति वरः - यतस्त्वं सरस्वती, तेन त्वया ऊतो रक्षितः सन्नहमोजसि सति शृणोमि आकर्णयामि। सकलं कर्तव्यं श्रुतिस्मृतिविहितं कर्तव्यतया व्यवस्यामि सहधर्मचारिण्यास्तव लाभबलेनेत्यर्थः। केचित्तु शृणोत्विति पठन्ति। तत्राप्ययं मदात्मा शृणोत्वित्यर्थः।। २१।।

इति सारस्वतानुवाकविवृतिः।

ततो गाथा वाचयति सरस्वति प्रेदमवेत्यनुवाकमुभावित्येके यदि पृथक्तन्त्रमिति विवृतमियता। यदि पृथक्तन्त्रमित्युत्तरसूत्रेणापि सम्बध्यते।। १९।।

**प्रदक्षिणमग्निमानीय तत्रैवोपवेश्य संस्थापयेत्।। २०।।**

पृथक्तन्त्रप्रक्षेऽग्निप्रदक्षिणं कृत्वा वधूवरावानीय पुनस्तत्रैवोपवेश्य यत्र पाणिग्रहणं वृत्तं, संस्थापयेत् समापयेदृतुतिथ्यादिकं भविष्यत्तन्त्रमुद्वाहसम्बन्धितया, ततो विवाहसम्बन्धितया भूय उद्वाहनतन्त्रं सकलं पूर्वं प्रदर्शितं विवाहसम्बन्धितयोपक्रम्य वक्ष्यमाणं कुर्यादित्यर्थः।। २०।।

**एककर्मणि तन्त्रे उत्तरेणाग्निं प्रत्येत्य ततो विवाहः।। २१।।**

कर्मशब्दः प्रयोगवचनः। तन्त्रमितिकर्तव्यता विध्यन्ता। सकृदनुष्ठीयमानेतिकर्तव्यतोपकारपक्षे उत्तरेणाग्निं प्रत्येत्य प्रदक्षिणमकृत्वैव उत्तरभागेनैव कतिपयक्रमान् गत्वा प्रत्यागत्य ततो विवाहः विवाहाङ्गतया वक्ष्यमाणानामृतुतिथ्यादीनां प्रयोगः। तन्त्रेण चोद्वाहोपकारोक्तानां वक्ष्यमाणानां च आवृत्त्यानुष्ठानमित्यर्थः। एककर्मणि तन्त्रे विवाहोद्वाहलक्षण इत्यपि केचित्पदयोजनां कुर्वन्ति।। २१ ।।

एत एव तन्त्रावृत्ती स्पष्टार्थमेकेनैव सूत्रेण विवरीतुमाह -

**य इमे द्यावापृथिवीत्यादय उद्वाहहोमा जयप्रभृतयश्च नैककर्मणि तन्त्रे स्विष्टकृदाज्यभागौ च।। २२।।**

उद्वाहे होमा ये जयप्रभृतयः, य इमे द्यावापृथिवीत्यादयश्च, तथा स्विष्टकृत्, तथा आज्यभागौ। एते सर्वे न एककर्मणि तन्त्रे आवृत्त्या कर्तव्या इत्यर्थाज्ज्ञायते। तेन श्रुत्यर्थानां विधिनिषेधलक्षणमर्थद्वयं यथासम्भवमनेन निदर्शितम्। स्विष्टकृच्छब्द उपरितनस्य तन्त्रखण्डस्योपलक्षणार्थः, आज्यभागशब्दोऽप्यधस्तनस्य।। २२।।

**पश्चादग्नेर्दर्भेषु सा त्वमसीति वाचयति सा त्वमस्यमोऽहममोऽहमस्मि सा त्वम्। ता एहि विवहावहै पुंसे पुत्राय कर्तवे। रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय।। २३।।**

एककर्मणि तन्त्रे उत्तरेणाग्निं प्रत्येत्य प्रत्यानीयाग्नेः पश्चाद्दर्भेषु विनिहितचरणौ वधूवरौ कृत्वा 'सा त्वमसि' इति वरं गुरुर्वाचयति।

सा नाम ऋगासीत् अमो नाम साम, सा च अमश्च साम ऋक् च गीतिश्चेत्यर्थः। एवं सामशब्दस्य व्युत्पत्तिः। ऋक्सामरूपावावामिति विभज्य वरः प्रदर्शयति - हे वधु त्वं सा ऋगसि भवसि, अमोऽहमस्मि अहममः साम भवामि। सा त्वं सा त्वं भवसि, अमोऽहममोऽहं भवामीति द्विरुक्त्या ऋक्सामरूपत्वं द्रढयति। ता एहि विवहावहै तौ द्वावावां हे वधु एह्यागच्छ विवहावहै विवाहं कुर्वः। किमर्थम्। पुंसे पुत्राय कर्तवे, कर्तवे इति तुमर्थे भावे तवेन्प्रत्ययः, पुंसे पुत्रायेति सुब्व्यत्ययः, पुमांसं पुत्रं कर्तुम्। तथा रायो धनस्य पोषाय पुष्टये, सुप्रजास्त्वाय शोभनप्रजालाभाय, सुवीर्याय सुवीर्यं कर्मस्वोजस्विता तदर्थम्।। २३।।

**अग्निमभिदक्षिणमानीयेह्यश्मानमातिष्ठाश्मेव त्वं स्थिरो भव। कृण्वन्तु विश्वेदेवाः आयुष्टे शरदः शतमिति दक्षिणेन पदाश्मानमास्थापयत्यातिष्ठेममश्मानमश्मेव त्वं स्थिरा भव। प्रमृणीहि दुवस्यवः सहस्व पृतयन्त इति।। २४**

अग्निमभिदक्षिणं वधूवरावानीय, अग्नेरुत्तरभागेऽश्मानं स्थापयित्वा दक्षिणेन चरणेन आस्थापयति गुरुः प्रयोजकः, वधूवरावातिष्ठत आक्रामतः। यथामन्त्रलिङ्ग-

माद्येन वरोऽश्मानमाक्रामयति, उत्तरेण वधूः। गुरुस्त्वाशास्ते तयोर्मन्त्रेणेष्टम् - हे वर अश्मानमातिष्ठ अश्मवत् स्थिरो भव, किञ्च ते तव विश्वेदेवाः शरदः शतमायुः कृण्वन्तु कुर्वन्तु, हे वधु इममश्मानमातिष्ठ त्वं चाश्मवत् स्थिरा भव, तथा दुवस्यवः दुवस्तून् उपतापमिच्छतः शत्रून् प्रमृणीहि जहि, तथा पृतन्यतः पृतनां सेनामिच्छतो युयुत्समानान् सहस्व प्रसहस्व अभिभव। दक्षिणेन पदेत्युत्तरमन्त्रेऽप्यनुषज्यते।।

**आज्यस्याञ्जलावुपस्तीर्येदं हविरित्यभिमृश्याथास्यै शमीलाजानावपति भ्राता ब्रह्मचारी वा।। २५।।**

आज्येनाञ्जलावुपस्तृणाति चतुरवदानेन। तत इदं हविरित्यादिना मन्त्रेण शूर्पस्थान् शमीपर्णमिश्रान् लाजानभिमृशति वरः। अनन्तरमञ्जलावस्था वध्वा भ्राता, ब्रह्मचारी वा भ्रातुरसन्निधाने, शमीपर्णमिश्रान् लाजानावपति।

**इदं हविः प्रजननं मे अस्तु दशवीरं सर्वगणं स्वस्तये। आत्मसनि प्रजासनि पशुसन्यभयसनि लोकसनि। अग्निः प्रजां बहुलां मे करोतु अन्नं पयो रेतो अस्मासु धत्त।।**

कोकिलस्य राजपुत्रस्यार्षम्। अनुष्टुप् छन्दः। इदं लाजाख्यं हविः मे मम प्रजननं दशपुत्रसम्पादनं भवतु, तथा सर्वगणं सर्वेषां गणैः पुत्रप्रभृतीनां पशूनां गणैर्युक्तं, स्वस्तयेऽविनाशाय चास्तु। आत्मसनि आत्मानं शरीरमात्मीयत्वात्सनति 'षणु दाने' इत्यस्माद्धातोः ददाति प्रज्ञापयतीत्यात्मसनि। एवं प्रजासनि पशुसन्यभयसनि लोकसनि। सर्वत्रेह हविरन्यपदार्थः। अग्निर्मम पुत्रपौत्रादिकां भूयसीं प्रजां करोतु। अन्नादिकं चास्माकं धत्त स्थिरं कुरुत। बहुवचनादर्यमगन्धर्वत्र्यम्बका इज्यमाना एवं प्रार्थ्यन्तेऽपरार्धे।। २५।।

**तानविच्छिन्दती जुहोत्यर्यमणं नु देवमिति।। २६।।**

तान् लाजान् अविच्छिन्दती विच्छेदमकुर्वती एकेनैव प्रक्षेपेण जुहोत्यर्यमणं नु देवमित्यादिमन्त्रेण।।

**अर्यमणं नु देवं कन्या अग्निमयक्षत।**
**सोऽस्मान्देवो अर्यमा प्रेतो मुञ्चातु मामुष्य गृहेभ्यः स्वाहा।।**

ब्रह्मण आर्षम्। अर्यमगन्धर्वत्र्यम्बका देवताः। उपरिष्टाद्बृहत्यो होममन्त्राः। इयं नारीत्यनुष्टुप्। कन्या अग्निं देवमयक्षत इष्टवत्यः। अर्यमणमित्यग्नेर्विशेषणम्।

अरीन् यच्छतीत्यर्यमाग्निः, तम्। अयक्षतेति तिङ्व्यत्ययः यजन्ते। अन्ये त्वग्निमित्यपि द्वितीयां सप्तम्याः स्थाने वर्णयन्ति अग्नावर्यमणं कन्या यजन्ते। अत्र पक्षेऽर्यमैव देवता। एवमनूच्य वधूर्यज्ञफलमाशंसति। अमुष्येति सामान्येन भर्तृनाम लक्ष्यते। सोऽर्यमा इष्टः सन् अमुष्य देवदत्तस्य इतो गृहेभ्योऽस्मान्मा प्रमुञ्चातु, मा इति निषेधार्थो निपातः, इतो भर्तृगृहेभ्योऽस्माकं च्यावं मा कार्षीदित्यर्थः। स्वाहा सुहुतमस्तु।।

**अग्निर्मा जनितामिति वाचयति।। २७।।**

वरं भाणयति गुरुरग्निरित्यादिमन्त्रमित्यर्थः।

**अग्निर्मा जनिमाननया जनिमन्तं करोतु। जीवपत्निर्भूयासम्।।**

जनी जाया। अग्निर्यतो जायावानतो मामपि जायया अविच्छिन्नसम्बन्धं करोतु। तत्प्रसादादहमपि जीवपत्निर्भूयासं जीवा पत्नी यस्य स जीवपत्निरहं स्याम्।

**इयं नारीति सर्वत्रानुषजति।। २८।।**

इयं नारीत्यस्य अनुष्टुभः त्रिष्वप्यनुषङ्गः कर्तव्यः।

**इयं नार्यपब्रूते तोक्मान्यावपन्तिका।**
**दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम।।**

एषा नारी ब्रवीति। किम्। दीर्घायुरस्तु मे पतिर्ज्ञातयश्च मित्रादयो मम वर्धन्तामिति। किं कुर्वती ब्रवीति। तोक्मान्यावपन्ती लाजान् जुह्वतीत्यर्थः।। २८।।

**एवं द्विरुत्तरम्।। २९।।**

द्वौ वारौ द्विः। एवमुत्तरं कर्म द्वौ वारौ कर्तव्यम्।। २९।।

तदेव स्फुटं दर्शयितुमाह -

**पर्ययणे पर्ययणे लाजाहोमो यजमानं चाश्मानं चास्थापयन्ति गन्धर्वं पतिवेदनमिति।। ३०।।**

पर्ययणमग्निपरिगमनं यजमानानुषञ्जनम्। तत्र च वरः कर्ता अर्थात्। ततोऽश्मनः स्थापनम्। तत्र परिस्तीर्य लाजानामावपनं गन्धर्वं पतिवेदनमिति।

**गन्धर्वं पतिवेदनं कन्या अग्निमयक्षत।**
**सोऽस्मान्देवो गन्धर्वः प्रेतो मुञ्चातु मामुष्य गृहेभ्यः स्वाहा।।**

गां पृथ्वीं धारयतीति गन्धर्वस्तमग्निं पतिवेदनं पत्युर्लम्भयितारं कन्या अन्या यतोऽयक्षत इष्टवत्यः, अतोऽहमपि यजे इति नारी ब्रूते इत्यर्थः। स च देवोऽग्निरिष्टः सन् गन्धर्वोऽमुष्य भर्तृगृहेभ्योऽस्मान् मा प्रमुञ्चातु इति पूर्ववत्प्रतिषेधः।। ३०।।

**सोमो मा ज्ञातिमानिति वाचयति।। ३१।।**

सोम इत्यादिमन्त्रं गुरुर्वाचयतीत्यर्थः।

सोमो मा ज्ञातिमाननया ज्ञातिमन्तं करोतु। जीवपत्निर्भूयासम्।

यतः सोमो ज्ञातिमानतो मामप्यनया नार्या ज्ञातिमन्तं करोतु। जीवपत्निर्भूयासमिति व्याख्यातम्।। ३१।।

**त्र्यम्बकं यजामह इति।। ३२।।**

त्र्यम्बकमित्यादिना तृतीयो होमः।

**त्र्यम्बकं यजामहे सुगन्धिं पतिपोषणम्।**
**उर्वारुकमिव बन्धनान्मृत्योर्मृक्षीय मामुष्य गृहेभ्यः स्वाहा।।**

त्र्यम्बकं शङ्करं यजामहे हविर्दानेन पूजयामः। सुगन्धिं सुयशसं, गन्धशब्दो यशोऽभिधायी प्रसिद्धः। पतिपोषणं भर्तुः पोषयितारम्। अहं च त्र्यम्बकस्य पूजितस्य प्रसादात् मृत्योः सकाशात् मुक्षीय। कुतः किंवत्। उर्वारुकमिव बन्धनात् उर्वारुकं कर्करीफलं, तद्यथा बन्धनाद्वृन्तात्पक्वं सत्स्वत एव विमुच्यते वा अर्थिभिस्त्रोट्यते, तद्वदहं मृत्योः सकाशान्नित्यविश्लिष्टा स्यामित्यर्थः। अमुष्य भर्तुर्गृहेभ्यः पुनर्मा कदाचन मुक्षीयेति निषेधः।

**पूषा मा पशुमानिति वाचयति।। ३३।।**

अस्यापि वाचनमेव, नत्वनेन होमः।।

**पूषा मा पशुमाननया पशुमन्तं करोतु। जीवपत्निर्भूयासम्।।**

अनया पशुस्वामिनं मां पूषा करोत्विति विशेषः।। ३३।।

**शिष्टान्स्विष्टकृते जुहोति शूर्पेण कर्ता।। ३४।।**

लाजशब्द उभयलिङ्गः सूत्रकृता दृष्टः। कन्यया ये हुतास्तेभ्यो ये शिष्टा लाजास्तान् स्विष्टकृते जुहोति शेषान् स्विष्टकृते समवद्यति इति वचनात्। कन्यया

हि प्रधानहोमः कृतोऽञ्जलिना। तन्निवृत्तये शूर्पग्रहणं कर्तृग्रहणं च। विवाहकर्मणि यः कर्ता।। ३४।।

अथ दक्षिणा केन देयेत्याह -

**वरो दक्षिणाम्।। ३५।।**

वर एव दक्षिणां विवाहकर्मकर्त्रे दद्याद्विद्वत्त्वाद्धनस्वामिकत्वाच्च, नतु नारीत्यर्थः। ऋतुतिथ्यादि यावत् स्विष्टकृत्।। ३५।।

**तूष्णीं हस्तौ विमुच्य वि ते मुञ्चामीति सन्नहनम्।। ३६।।**

सावित्रेण मन्त्रेण हस्तग्रहणं यथा, तथा विमोको मा भूदिति तूष्णींग्रहणम्। हस्तौ विमुच्य ततो 'वि ते मुञ्चामि' इति मन्त्रेण सन्नहनं योक्त्रं विमुञ्चति कर्ता मन्त्रलिङ्गात्, नतु स्वयम्।

**वि ते मुञ्चामि रशनां वि रश्मीन्वि योक्त्राणि परिचर्तनानि।**
**दत्त्वायास्मभ्यं द्रविणेह भद्रं प्र मा ब्रूताद्धविर्दा देवताभ्यः।।**

त्रिष्टुप्। यतीनामार्षम्। 'विमोक एवास्यैष ते' इति वचनादग्नेरेष विमोकोऽन्यत्रानेन प्रतीतः। बन्धनस्य च रशनारश्मियोक्त्रशब्दा अभिधायका उच्यन्ते। युज्यन्ते एभिरिति योक्त्राणि। कीदृशानि। परिचर्तनानि समन्तात् चर्तनं नियन्त्रिततया येषां तानि परिचर्तनानि। मुक्तमग्निं यजमानो ब्रूते - विमुक्तिः सन्नग्निरस्मभ्यं द्रविणानि यज्ञोपयोगीनि धनानि दत्त्वा भद्रं च कल्याणं दत्त्वा मां प्रब्रूयात्। कीदृशं माम्। हविर्दा देवताभ्यः, हविषो दातारं यज्ञानुष्ठाने मां विनियुक्तमिति प्रार्थयते यजमान इत्यर्थः। इहापि परिक्रीतेनर्त्विजा अर्थ्यमानस्य यजमानार्थतया यजमानस्याशीर्भवति। रशनारश्मिशब्दौ च योक्त्रपर्यायौ, पर्यायप्रयोगोऽतिशयार्थः। अथवा योक्त्राणि विमुञ्चामि न केवलं योक्त्राण्येव रशनां च अविद्यामित्यर्थः, विरश्मीन् रश्मींश्चाविद्यामूलान्रागादीनित्यर्थः। दम्पत्योश्च योक्त्रविमोकेन विवाहभूमौ स्थितोऽग्निर्मुक्तो भवति स्वातन्त्र्यसञ्चरणेन तस्य सङ्कटपरिहारात्। अतो विमुक्तः पूर्ववदभ्यर्थ्यते।

**उत्तरतोऽग्नेर्दर्भेषु प्राचीं प्रक्रामयत्येकमिषे द्वे ऊर्जे त्रीणि रायस्पोषाय चत्वारि मयोभवाय पञ्चप्रजाभ्यः षड्तुभ्यो दीर्घायुत्वाय सप्तमं सखा सप्तपदा भव। सुमृडीका सरस्वति मा ते व्योम सन्दृशि। विष्णुत्स्वान्वेत्वित्यनुषङ्गः।। ३७**

अग्नेरुत्तरेणास्तीर्णेषु दर्भेषु प्राङ्मुखीं वधूं प्रक्रामयति कर्ता सप्तपदानि सप्तभिर्मन्त्रैः। विष्णुस्त्वान्वेत्विति सर्वत्रानुषङ्गः। एकमिषे विष्णुत्स्वान्वेतु - एकं पदमिषेऽन्नाय निधेहि, त्वां च गच्छन्तीं विष्णुरन्वेतु। द्वे ऊर्जे विष्णुस्त्वान्वेतु - द्वे पदे ऊर्जे बलाय निधेहीति पूर्ववत्। त्रीणि रायस्पोषाय विष्णुस्त्वान्वेतु - त्रीणि पदानि रायो धनस्य पुष्टये निधेहि। चत्वारि मयोभवाय विष्णुत्स्वान्वेतु - मयः सुखं तद्भवत्यस्मादिति मयोभूस्तस्येदं मयोभवं, तदर्थं चत्वारि पदानि निधेहि सुखभवन-प्रार्थनायेत्यर्थः। पञ्च प्रजाभ्यो विष्णुस्त्वान्वेतु - पुत्रपौत्रप्रजार्थं पञ्च पदानि निधेहि। षड्ऋतुभ्यो विष्णुस्त्वान्वेतु - षट् पदानि ऋतुसांमुख्याय निधेहि, ते च ऋतवः सम्मुखीभूताः फलैः सम्बन्धन्तु त्वामित्यर्थः। दीर्घायुत्वाय सप्तमं सखा सप्तपदा भव। सुमृडीका सरस्वति मा ते व्योम सन्दृशि। विष्णुस्त्वान्वेतु - दीर्घायुत्वायायुषे सप्तमं पदं निधेहि। एभिश्च सप्तभिः पद्भिर्भर्तुः सुखाय भव। सुमृडीका 'मृड-सुखने' सुमुखा। हे सरस्वति मा ते तव व्योम आकाशस्थः कश्चित्समयं पदं द्राक्षीत् पवनान्दोलि-कवाससो नग्नं वा कञ्चित्प्रदेशम्।। ३७।।

**तच्चक्षुरित्यादित्यमुपस्थापयति।। ३८।।**

तच्चक्षुरित्यादिना कर्ता कन्यामादित्यमुपस्थापयति।।

**तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्।**
**पश्येम शरदः शतं जीवेम शरदः शतम्।।**

देवहितं देवविहितं, देवेभ्यो वा हितं हितकारि। शुक्रं शुक्लम्। उच्चरत् ऊर्ध्वं चरत् गच्छत् उद्यत्।। ३८।।

**अस्तमितेऽग्निम्।। ३९।।**

विवाहे क्रियमाणे यदि रात्रिर्भवति रात्रौ वा विवाहः, तदा तच्चक्षुरित्यनयाग्नि-मुपस्थापयेत्।। ३९।।

**जीवन्तीं ध्रुवं स्वस्त्यात्रेयं दर्शयत्यरुन्धतीं च।। ४०।।**

जीवन्तीं कन्यामिच्छन् ध्रुवादितं दर्शयेत्। अत्र केचिद्रात्रावित्यनुवर्तयन्ति दिवा ध्रुवादिदर्शनाभावात्, अपरे नानुवर्तयन्ति यतोऽग्रे पश्यसीति प्रश्ने अपश्यन्ती

अपि पश्यामीति प्रतिवचनमाहेत्यर्थो लक्ष्यते। दर्शनमात्रविवक्षया हि पश्येः प्रैषः पश्यामि न वेत्यत्र चोत्तरं पश्येम।। ४०।।

**एतेषामेकैकं पश्यसीत्याह।। ४१।।**

पश्यसीत्येकैकस्य नाम गृहीत्वा पृच्छेद्गुरुः।।

**पश्यामीति प्रत्याह।। ४२।।**

सापि पृष्टा सती पश्यामीति प्रतिब्रूयात्।।

**सुमङ्गलीरियं वधूरिमां समेत्य पश्यत। सौभाग्यमस्यै दत्त्वायाथास्तं विपरीतनेति वीक्षितानानुमन्त्रयते।। ४३।।**

वीक्षितान् ध्रुवादीन् गुरुरनुमन्त्रयते। सुमङ्गलीरित्याद्यनुष्टुप्। इयं वधूः शोभन-मङ्गलयुक्ता भवतु भवत्प्रसादात्। इमां समेत्य सम्भूय पश्यत। अस्यै च सौभाग्यं दत्त्वा पश्चादस्तं गच्छत। दत्त्वार्येति क्त्वो यक्। तेन दिवापि ज्ञेयमेतत्। ध्रुवादिदर्शनं हि जीवनद्योतनमाहुः। तदिहावसरेऽपश्यन्त्या अपि पश्यामीति प्रतिवचनमपमृत्यु-व्याघाताय स्मर्यते। अत एव ध्रुवादिकं यद्दर्शयेत्, तत्स्वस्त्यविनाशमेव दर्शये दित्यर्थः।। ४३ ।।

**उदुत्तममिति प्रागुदीचीमावसथं यतीमनुमन्त्रयते यतो वा स्यात्।।४४**

उदुत्तममित्यादिना अनुष्टुप्चतुष्टयेनावसथं गृहं यतीं गच्छन्तीं प्रागुदीची-मुत्तरपूर्वदिगभिमुखीमनुमन्त्रयते। यत्र वा आवसथः स्यात्, तदभिमुखं गच्छेत्।

**उदुत्तममारोहन्ती व्यस्यन्तीव पृतन्यतः।**
**मूर्धानं पत्युरारोह प्रजया च विराड्भव।। १।।**

हे वधु उत्तममुत्कृष्टं गृहं सुचरितं वा आरोहन्ती, पृतन्यतः पृतनां सेनामिच्छतः शत्रून् व्यस्यन्तीव क्षिपन्तीव, पत्युर्भर्तुर्मूर्धानमधिरोह तस्य स्वगुणगणेन मान्या भवेत्यर्थः, तथा प्रजया पुत्रपौत्रादिकया विशेषेण राजमाना भव।

**इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु।**
**दशाऽस्यां पुत्रानाधेहि पतिमेकादशं कृधि।। २।।**

हे इन्द्र मीढ्वः मिह सेचने सेक्तः, गर्भग्रहणाख्याया रेतःस्थितेरिन्द्रप्रसादा-

यत्तत्वादेवं सम्बोधनम्, इमां वधूं सुपुत्रां सौभाग्ययुक्तां च कुरु। दशाऽस्यां पुत्रानाधेहि विधेहि एकादशं पतिं सम्पादय।

**सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव।**
**ननान्दरि सम्राज्ञी भव सम्राज्ञी अधिदेवृषु।। ३।।**

हे वधु सम्राज्ञी श्वशुरे त्वं सम्राज्ञी माननीयतमा सम्यग्राजमाना भव, तथा श्वश्र्वां ननान्दरि च भर्तुर्भगिन्यामेवमधिदेवृषु देवरेषु।

**स्नुषाणां श्वशुराणां च प्रजायाश्च धनस्य च।**
**पतीनां च देवृणां च सजातानां विराड्भव।।**

सजाताः बान्धवपरिजनप्रभृतयः। देवृणां, 'छन्दस्युभयथा' (६.४.५) इति ह्रस्वः, मध्यदेशे तु दीर्घः पठ्यते, देवराणाम्। सर्वं गृहगतं तवायत्तमस्त्वित्यर्थः। अत ऊर्ध्वं त्वं नो अग्र इत्यादितन्त्रपरिसमाप्तिः। अत्र भर्तृगृहगमनावसरे मधुपर्ककाण्डिका पठ्यते। सा च स्नातकप्रकरणे व्याख्यास्यते।। ४४।।

**।। इति जालन्धरीयजयपुरवास्तव्यभट्टोपेन्द्रसूनुहरिपालपुत्र-देवपालविरचिते समन्त्रकाठगृह्यभाष्ये विवाहप्रकरणं समाप्तम्।।**

**।। इति पञ्चविंशी काण्डिका।। २५।।**



## ।। अथ षड्विंशी काण्डिका ।।

**पुण्याहे युंक्ते। योगे योग इति युनक्ति।। १ ।।**

यदा वधूः पुण्ये दिवसे भर्तृगृहं गच्छति तदा रथं शिबिकां वा यथासम्भवं युङ्क्ते। तत्र च योगे योग इति व्याख्यातमन्त्रावृत्त्या अश्वादिकं युनक्ति।। १ ।।

**अङ्कुन्यङ्का अभितो रथं ये ध्वान्ता वाताग्रमभि ये सम्पतन्ति। दूरेहेतिः पतत्रिणीवाजिनीवांस्ते नोऽग्नयः पप्रयः पारयन्त्विति चक्रे अनुमन्त्रयते।। २ ।।**

अङ्कन्यङ्कावित्यादिकया जगत्या आग्निमारुते रथचक्रेऽनुमन्त्रयते ऋत्विक् पार्श्वे वा। सकृच्च मन्त्रः प्रयोक्तव्यो द्विवचनलिङ्गात्। अञ्चतीत्यङ्कुः, न्यञ्चतीति न्यङ्कः, अङ्कुश्च न्यङ्कश्चाङ्कुन्यङ्कौ अञ्चकन्यञ्चकौ गन्तृविशेषौ याभ्यां चक्रे गच्छतः। अङ्कुन्यङ्कौ रथस्याभितः स्थितौ नोऽस्माकं तेऽग्नयः पारयन्तु पथस्तारयन्तु पालयन्तु वा पथि। के तेऽग्नयः। ये ध्वान्तास्तमोरूपाः काष्ठादीन्धनजाः। ये च वाता ग्रमभिसम्पतन्ति वैद्युतादिरूपा इत्यर्थः। यश्च दूरेहेतिर्दूरगतार्चिरादित्यादिरूपः। यश्च पतत्रिणीवाजिनीवान् पतत्रिणीवान् वाजिनीवांश्चेत्यर्थः, पतत्रिणीवान् वायुगरुडादिमूर्तिषु व्यवस्थितः, वाजिनीवान् व्रीह्यादिमूर्त्याश्रितः। कीदृशा अग्नयः। पप्रयः पॄ पालनपूरणयोः प्रीणन्तीति पप्रयः पालयितारः पूरयितारो वा कामानां, प्रा पूरणे इत्यस्य वा पप्रिशब्दः।। २ ।।

**खे रथस्य खेऽनसः खे युगस्य च तर्मसु। खे अक्षस्य खे अवदधामीति युगतर्मसु शमीशाखामवदधाति।। ३ ।।**

खे रथस्येत्यादिना युगस्य तर्मसु च्छिद्रेषु शमीशाखामवदधाति। रथस्य खे आकाशे छिद्रे अवदधामि शाखां, तथा खेऽनसः गन्त्र्याः, एवं युगस्य तर्मसु च्छिदेषु, तथा खे अक्षस्य रथाधारकाष्ठविशेषस्यान्यत्रापि च खे छिद्रे शान्त्यर्थं शमीशाखामवदधामि।। ३ ।।

**सुकिंशुकं शल्मकिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम्। आरोह सूर्ये अमृतस्य योनिं स्योनं पत्ये वहतुं कृणुष्वेत्यारोपयते।। ४ ।।**

सुकिंशुकमित्यादिना वधूं रथमारोपयति। हे वधु रथमारोह। कीदृशम्। सुकिंशुकं शोभनपलाशकुसुमैस्तदुपलक्षितैरन्यपुष्पैश्च परिजनाऽऽहितैः शोभनं, शल्मलिं 'शल हुल पल्ल-गतौ' गमनशीलम्, अथवा किंशुकशल्मलिदारुनिर्मितत्वा-देवमुच्यते, विश्वरूपं नानाकारं, हिरण्यवर्णम् उज्ज्वलरूपं, सुवृतं फलकुसुमादिभिः परिवृतं सुवर्तुलं वा सुवर्तनं सुखचेष्टं वा, तथा शोभनचक्रम्, अमृतस्य योनिम् अमरणधर्मस्य कारणमप्रमापणकारिणम्। पत्ये भर्त्रे व्यत्ययेन भर्तुः स्योनं सुखं कृणुष्व कुरुष्वैनं वहतुं, वहतीति वहतुस्तम्।। ४ ।।

**मा विदन्परिपन्थिनः सुमङ्गलीरिति च प्रवाहयते।। ५ ।।**

'मा विदन्परिपन्थिनः' इति 'सुमङ्गलीः' इति चैताभ्यां व्याख्यातार्थाभ्यां प्रवाहयते रथम्।।

**संकाशया विवहतं ब्रह्मणा गृहैरघोरेण चक्षुषा मैत्रेण। पर्याणद्धं विश्वरूपं यदस्याः स्योनं पतिभ्यः सविता कृणोतु तदिति वधूसङ्गमे।। ६ ।।**

एतां जगतीं सावित्रीं वधूसङ्गमे जपति सङ्काशयेत्यादिकाम्। अश्वावुच्येते। सम्यगनया प्रकाशमानया दृष्ट्या इदमनो विवहतं प्रापयतम्। ब्रह्मणा अन्नेन सह, गृहैश्च पत्या गृहशब्देन गृहस्थपत्न्युच्यते, अघोरेण शिवेन, चक्षुषा मैत्रेण मित्रसम्बन्धिना, न तु शात्रवेण। कीदृशं वहतम्। पर्याणद्धं समन्ताच्छन्नम्। तथा नानारूपं यदनः अस्या वध्वाः पतिभ्यः स्योनं सुखं पतिभ्य इति वचनव्यत्ययः पत्ये तच्च सविता च सुखादिकं सर्वं करोतु। रथयोरन्योन्यसंघाते विघातशंकायामेष जपः।। ६।।

**ये पथीनामिति चतुष्पथेषु जपतीमे चत्वार इति च।। ७ ।।**

व्याख्यातौ मन्त्रौ। ये पथीनामित्यनुष्टुप्। इमे चत्वार इति त्रिष्टुप्। सूत्रं स्पष्टार्थम्

**ये श्मशानेष्विति श्मशानेषु ।। ८ ।।**

जपतीत्यनुषङ्गः।

**ये श्मशानेषु पुण्यजनाः शावास्तेषु शेरते।**
**तत्रैव ते रमन्तां मा वधूरन्ववेक्षत।।**

श्मशानेषु शवशयनेषु ये पुण्यजना यक्षा ये च शावाः प्रेतास्तेषु श्मशानेषु

शेरते तिष्ठन्ति, तत्रैव ते रमन्तां रतिं कुर्वन्तु, मा वधूरन्ववेक्षत मा द्राक्षुर्वधूम्। वधूरिति सुब्व्यत्ययः।। ८ ।।

**ये वनेष्विति महावनं महावृक्षं च दृष्ट्वा जपति।। ९ ।।**

स्पष्टम्। मन्त्रोऽपि विवृतः।। ९ ।।

**इह रडिरिति क्रूरं दृष्ट्वा ।। १० ।।**

इह रडिरित्यादिकं क्रूरं सिंहादिकं दृष्ट्वा जपतीत्यनुषङ्गः।।

**इह रडिरिह रतिरिह धृतिरिह विधृतिरिह स्वधृतिरिह रन्तिरिह रमतामग्रे वेट् स्वाहा वट्।।**

'लड-विलासे' लडनं रडिः क्रीडा, इह अस्मासु रमताम्। तथा रतिः प्रीतिः। सर्वत्र रमतामित्यनुषजति। इह धृतिः सन्तोषः। इह विधृतिर्विधरणं स्थैर्यम्। स्वधृतिः स्वस्य धनस्य धारणम्। इह रंतिः रमणं रन्तिः, रड्यादिकं हिंस्रदर्शनादस्मत्सकाशान्मा दूरीभूदित्यर्थः। अग्रे वेट् स्वाहा वट् सम्प्रदानार्थीया निपाताः।। १० ।।

**नमो अस्तु सर्पेभ्य इति सर्पान्।। ११ ।।**

दृष्ट्वा जपतीत्यनुषङ्गः।

**नमो अस्तु सर्पेभ्यो ये के च पृथिव्यामधि।**
**ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः।।**
**येषु वा यातुधाना ये वा वनस्पतींरनु।**
**ये वावटेषु शेरते तेभ्यः सर्पेभ्यो नमः।।**
**ये वादो रोचने दिवो ये वा सूर्यस्य रश्मिषु।**
**येऽप्सु सदांसि चक्रिरे तेभ्यः सर्पेभ्यो नमः।।**

गतार्थम्।। ११ ।।

**ये तीर्थानीति तीर्थे ता मन्दमानेति च।। १२ ।।**

तीर्थे जपति प्रतीकमुद्रितान्मन्त्रानित्यर्थः। ये तीर्थानीति व्याख्याता। तीर्थमत्र निपानं नद्यवतारस्थानम्। यथोक्तं -

'तीर्थाभिधानमिच्छन्ति त्रितयं कृतबुद्धयः।
शास्त्रं चैव निपानं च वारि चाप्यृषिसेवितम्।।' इति।

**ता मन्दमाना मनुषो दुरोण अधत्तं रयिं सहवीरं वचस्यवे।**
**कृतं तीर्थं सुप्रपाणं शुभस्पती स्थाणुं पथेष्ठामप दुर्मतिं हतम्।।**

आश्विनी। जगती। हे अश्विनौ मन्दमानौ स्तूयमानौ हर्षयुक्तौ मद स्तुतिमोदमदेत्यादिकादर्थनिर्देशात् मनुषो मनुष्यस्य दुरोणे गृहे रयिं धनम् अधत्तं छान्दसो ह्रस्वः आधत्तम्। कीदृशं धनम्। सहवीरम् पुत्रसहितं, सहस्रवीर्यं वा पुत्रपौत्रादिमालायुक्तमित्यर्थः। किञ्च तीर्थं सुप्रपाणं कृतं युवां कुरुतं स्ववगाहं, तथा स्थाणुं तिष्ठन्त्यस्मिन् सम्पद इति स्थाणुः। कस्मै। वचस्यवे वच इच्छत्यात्मनः 'सुप आत्मनः क्यच्' (३.१.१८) 'क्याच्छन्दसि' (३.२.१७०) इत्युत्वं तस्मै वचस्यवे। हे शुभस्पती शुभस्य पालयितारौ दुर्मतिं दुष्टां मतिमस्य मनुष्यस्य अपहतं विनाशयतम्। कीदृशीं दुर्मतिम्। पथेष्ठां पथि तिष्ठति पथेष्ठा तां सुरूढामित्यर्थः।

**अयं नो मह्याः पारं स्वस्ति नैषद्वनस्पतिः।**
**सीरा नः सुतरा भव दीर्घायुत्वाय वर्चसे।।**

तीर्थविशेषनदीतरणेऽयं मन्त्रः। गायत्री। अयं वनस्पतिर्वानस्पत्यो रथः नोऽस्मान् मह्याः महत्या नद्याः पारं नैषत् नयतु। स्वस्ति अविनाशं कृत्वा। सीरा च नदी नोऽस्माकं सुतरा भव भवतु। दीर्घायुत्वाय दीर्घायुषे, वर्चसे च अस्माकं सीरा भवतु। दीर्घायुत्वायेत्यत्र त्वपत्योरिति सलोपश्छान्दसः।

**अश्मन्वती रीयते संरभध्वमुत्तिष्ठत प्रतराम सखायः।**
**अत्राजहाम ये असन्नशेवाः शिवान्वयमुत्तरेमाभिवाजान्।।**

अनेन प्रकृता नदी तीर्यते। हे सखायः जन्याः उत्तिष्ठत, संरभध्वं सप्रयत्ना भवत, प्रतरामो नदीम्। प्रयत्नविशेषेण प्रेषणे हेतुमाह यतोऽश्मन्वती पाषाणसङ्घट्टवती नदी रीयते तीर्यते। शेव इति सुखनाम। ये चाशेवा असुखा असन् सन्ति, तानत्रैव स्थाने आजहाम त्यजामः त्यक्त्वा तान्गच्छाम इत्यर्थः। वयं च शिवान्देशविशेषान् अभिवाजान् वाजाभिमुखान् अन्नविशेषयुक्तान् तरेम तीर्त्वा प्राप्नुयामेत्याशंसा।। १२

**।। इति षड्विंशी काण्डिका।। २६ ।।**



## ।। अथ सप्तविंशी काण्डिका ।।

**शन्न इति नदीं तरति ।। १ ।।**

गतार्थं समन्त्रकम् ।। १ ।।

**य ऋत इति रथाङ्गे विशीर्णे ।। २ ।।**

अविशेषाभिधानाद्यस्मिन्कस्मिंश्चिद्रथाङ्गे विशीर्णे श्लथे रथे य ऋत इत्यादिकामैन्द्रीं बृहतीं जपतीत्यर्थः ।। २ ।।

**य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।**
**सन्धाता सन्धिं मघवा पुरूवसुर्निष्कर्ताविहुतं पुनः ।।**

हे रथ यस्त्वं जत्रुभ्यो ग्रन्थिभ्यो बन्धनेभ्यः ऋते विना अभिश्रिषः विशीर्णो विनाशं प्राप्तः पुरा पूर्वमेवातृदः आतर्दनादहिंसित एव नष्ट इत्यर्थः, तं त्वा मघवा पुनः निष्कर्ता सन्धिं सन्धीयत इति सन्धिस्तं निःशेषेण पुनः करिष्यतीत्यर्थः । सहि सन्धाता सन्धानशीलः । कीदृशं सन्धीयमानं त्वां करिष्यति । अविहुतमकुटिलगतियोग्यम् । कीदृशो मघवा । पुरूवसुः बहुधनः । चिदिति पादपूरणो निपातः ।

**अपराह्णेऽधिवृक्षसूर्ये गृहानुपयायोर्जं बिभ्रतीति गृहान्प्रतिदृश्य जपति ।।३**

अपराह्णसमयेऽधिवृक्षसूर्ये यदा वृक्षाणामुपर्येव रविरश्मयो दृश्यन्ते नाधस्तात्, तदा गृहानुपयाय, गृहग्रहणेन स्वग्राम उपलक्ष्यते, स्वग्रामसमीपं गत्वा, तत्र स्वगृहान् प्रतिदृश्य आभिमुख्येन दृष्ट्वा ऊर्जं बिभ्रतीत्यादि जपति । वध्वा एष जपो मन्त्रलिङ्गात् ।

**ऊर्जं बिभ्रती वसुवनिः सुमेधा गृहानागां मोदमाना सुवर्चाः ।**
**अघोरेण चक्षुषा मैत्रेण गृहाणां पश्यन्ती वय उत्तिरामि ।।**
**गृहाणामायुः प्र वयं तिराम गृहा अस्माकं प्रतिरन्त्वायुः ।**
**गृहानहं सुमनसः प्रपद्ये वीरघ्नी वीरपतिः सुशेवा ।।**
**इरां वहतो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशामि ।**
**येषां मध्येऽधिप्रवसन्नेति सौमनसं बहु ।।**

**गृहानुपह्वयामहे ते नो जानन्तु जानतः।**
**सूनृतावन्तः स्वधावन्त इरावन्तो ह सामदाः।।**
**अक्षुध्या अतृष्यास्त गृहा मास्मद्बिभेतन।**
**उपहूता इह गाव उपहूता अजावयः।।**
**अथो अन्नस्य कीलाल उपहूतो गृहेषु मे।**
**उपहूता भूरिधनाः सखायः साधुसम्मदाः।।**
**अरिष्टाः सर्वपूरुषा गृहा नः सन्तु सर्वदा।**

अहं गृहानागाम् आगता, ऊर्जं बिभ्रती अन्नं धारयन्ती पुष्णती च, वसुवनिः। 'वन-षण-सम्भक्तौ' वसूनि धनानि विभजमाना, सुमेधाः शोभनया प्रज्ञया युक्ता मोदमाना हृष्यन्ती, सुवर्चाः शोभनदीप्तिः, गृहाणामिति व्यत्ययेन द्वितीयार्थे षष्ठी, अघोरेण सौम्येन, मैत्रेण हितैषिणा चक्षुषा गृहान्पश्यन्ती। वय इति धननाम, धनमुत्तिरामि ददामि परिजनाय। वयमेतेषामायुः प्रतिरामः उपलेपनादिद्वारेण स्थैर्यं सम्पादयामः। गृहा अपि गृहाधिष्ठात्र्यो देवता अस्माकमायुः प्रतिरन्तु सम्पादयन्तु। अहमेतान् गृहान् प्रपद्ये गच्छामि प्रविशामि। कीदृशान्। सुमनसः सौमनस्यकारिणः। वीरघ्नी गत्यर्थोऽत्र हन्तिः, पुत्राणां प्रापिका लम्भिका। वीरपतिः विक्रान्तियुक्तभर्तृका। सुशेवा शेवोऽन्नं धनं च, सुधना। कीदृशान् गृहान्। इरामन्नं वहतः धारयतः। तथा घृतमुक्षमाणा आसिञ्चन्तो बहुगवादिकत्वात् ये गृहास्तानहं सुमनस्का सती प्रविशामि। किञ्च येषां गृहाणां मध्ये निवसन् बहु सौमनसमेति प्रपद्यते, तान् गृहानुपह्वयामहे आह्वयामः। तेऽस्माञ्जानतो ज्ञानयुक्तान् जानन्तु। गृहाधिष्ठातृदेवताप्रसादाच्च वयं सूनृतावन्तः सत्यवाचः स्याम, तथा स्वधावन्तः पितृयज्ञकारिणः इरावन्तोऽन्नवन्तः, हेत्यनर्थकः, सामदाः स्याम सान्त्वनलक्षणेन प्रथमेनोपायेन स्वीकारकाः स्यामेत्यर्थः। यथोक्तं -

'साम दानं च भेदश्च दण्डश्चेति चतुर्विधः।
मायेन्द्रजालोपेक्षाश्च सप्तोपायाः प्रकीर्तिताः।।' इति।

अस्मभ्यमिति तादर्थ्ये चतुर्थी, तेनास्मदर्थं सत्यवचनयुक्ता यूयं भवतेत्यप्यर्थः सम्पद्यते। अस्मभ्यं सामदा भवतेति प्रदाने चतुर्थी अपि योज्या। हे गृहा अस्माभिरधिष्ठिताः

सन्तः अस्मत् मा बिभेतन अस्मत्सकाशाद्भयं मा कार्षुः।। इह च गृहेषु उपहूता आहूता गावस्तथा अजा अवयश्च अथो तथा अन्नस्य सम्बन्धी कीलालो मृष्टरस आहूतो मम गृहेषु, तथा सखायः सहायाः भूरिधनाः बहुवित्ताः, आहूतास्ते साधु कृत्वा सम्मदाः सम्यक् हर्षयुक्ताः सर्वदा सन्तु, तथा अरिष्टा अनुपहिंसिता नोऽस्माकं गृहाः सर्वपूरुषाश्च सर्वदा भवन्तु।। ३ ।।

**।। इति सप्तविंशी काण्डिका।। २७ ।।**



## ।। अथ अष्टाविंशी कण्डिका ।।

**उलपराजीं स्तृणात्याशयनीयात् ।। १ ।।**

उलपो वीरणः, प्रसूना दीर्घदर्भा इति तु प्रसिद्धिहीनं वचो मध्यदेशादौ वीरणानामेव तथा प्रसिद्धेः। ऋत्विक् वीरणपंक्तिं स्तृणाति रचयति रथावतरण-स्थानादारभ्य वधूशयनगृहविशेषं यावत् ।। १ ।।

**तया प्रविशति ।। २ ।।**

तया राज्या प्रविशति गृहं रथादवतीर्य वधूसहितो वरः ।। २ ।।

**अध्याहिताग्निं सोदकं सौषधमावसथं प्रतिपद्यते ।। ३ ।।**

अध्याहितः स्थापितो विवाहाग्निर्यत्र तं, तथा सोदकमुदकुम्भभूषितं, सौषधं व्रीह्याद्योषधिसनाथम्, आवसथं गृहविशेषं प्रतिपद्यते प्रविशति। अत ऊर्ध्वं हि पाकयज्ञेष्वधिक्रियते। वास्तुहोमानन्तरं चैष प्रवेश इष्यते। उक्तं हि सूत्रम् - 'अमीवहा वास्तोष्पत इति चतसृभिर्वास्तोष्पतीयस्य स्थालीपाकस्येष्ट्वाथ वास्त्वा-विशेत्' (१२.१) इति ।। ३ ।।

**अमीवहा वास्तोष्पते० ।।**

आद्या गायत्री। तिस्रस्त्रिष्टुभः। ब्रह्मण आर्षम्। हे वास्तोष्पते माध्यमिकदेवता-विशेष वायुरूप नोऽस्माकम् अनमीव एधि, 'अम रोगे' रोगशून्यो भव अस्मान्नीरोगा-न्कुर्वित्यर्थः। अमीवानं व्याधिं हन्तीति अमीवहा व्याधिप्रध्वंसकारी, अनमीवस्तु रोगप्रागभावस्यैव स्थैर्यहेतुरित्यपौनरुक्त्यम्, तथा सुशेवः सुखसेव्यो भव। किं कुर्वन्। विश्वा रूपाण्याविशन् नानारूपाणि धारयन्, अश्वादीनि नानारूपाणि वा आविशन् प्रवेशयन् समृद्धं गृहं कुर्वन्नित्यर्थः ।। १ ।।

हे वास्तोष्पते अस्मान् प्रविविक्षून् प्रतिजानीहि, अभिमुख्येनानुकूल्येन पश्य, ततश्च स्वावेशः सुप्रवेशो रोगरहितोऽस्माकं, भव। यत् त्वा ईमहे याचामहे, तन्नः प्रतिजुषस्व तेन याचितेनास्मान् प्रीणीहीत्यर्थः। तस्मादस्माकं द्विपदे मानुषरूपे, चतु-ष्पदे गवादिके शं भव सुखरूपो भव ।। २ ।।

हे वास्तोष्पते अस्माकं प्रतरणो भव दुर्गमस्थानेभ्योऽस्मान् प्रतारयेत्यर्थः। हे इन्दो माध्यमिकत्वसामान्यात् चन्द्र अस्माकं गोभिरश्वैश्च गये गृहे स्फानः स्फीतो भव। तेन तव सख्ये वर्तमाना वयं अजरासः अजीर्णाः स्याम। त्वं चास्मान् प्रतिजुषस्व प्रीणीहि। क इव कान्। पितेव पुत्रान्।। ३ ।।

हे वास्तोष्पते ते तव सम्बन्धिन्या संसदा वेगादिसम्पदा शग्मया सुखरूपया वयं सक्षीम सङ्गच्छेम। हिरण्वया सुवर्णादिकया, गातुमत्या यज्ञादिकर्मवत्या यज्ञाद्युपयोगिन्येत्यर्थः। वरमुत्कृष्टं कृत्वा नोऽस्मान् अलब्धलाभात्मके योगे, प्राप्त-परिरक्षणात्मके च क्षेमे वर्तमानः पाहि रक्ष। यूयं त्वं व्यत्ययेन पात पाहि स्वस्तिभिरविनाशैः सर्वकालम्।। ४ ।।

**रोहिण्या मूलेन वा यद्वा पुण्योक्तमपरेणाग्निमानडुहे रोहिते चर्मण्यु-पवेश्यापिवा दर्भेष्वेव जयप्रभृतिभिर्हुत्वाग्निरैतु प्रथम इति च।। ४ ।।**

रोहिण्या मूलेन वा नक्षत्रेण युक्ते चन्द्रमसीति ज्ञेयम्। यद्वा पुण्योक्तं ज्योतिः शास्त्रे पुण्यरूपं श्रेयस्करं यद्दिनमुक्तं, तत्र वा। अपरेणाग्निं प्रकृतत्वादावसथ्यम्, अनडुह इदमानडुहं वार्षभं तत्र, रोहिते चर्मण्युपवेश्य वधूं वरः स्वयं चोपविश्य, केवलेषु वा दर्भेषु वधूमुपवेश्य स्वयं चोपविश्य जयहोमप्रभृतिकमाज्यभागान्त-माज्यसाधनत्वादर्थादाज्यधर्मयुक्तमुपसमाधानादिपूर्वकं हुत्वा, अग्निरैतु प्रथम इत्यादि-भिश्च कर्मान्तराणि कुर्यात्। कानि तानि। पाकयज्ञा अर्थात्।।

**अग्निरैतु प्रथमो देवतानां सोऽस्याः प्रजां नयतु सर्वमायुः।**
**तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं निरुन्ध्यात्स्वाहा।। १ ।।**

अग्निरैतु इति वैश्वदेव्यश्चतस्रस्त्रिष्टुभः। विश्वेषु देवेष्वागच्छत्सु सर्वदेवतानां प्रथमोऽग्रेऽग्निरा एतु एतु आगच्छतु। सोऽग्निः सर्वदेवपुरःसरोऽस्या वध्वाः प्रजां नयतु प्रापयतु, तां च प्रजां सर्वमायुः नयतु प्रापयतु। द्विकर्मकः अजां नयति ग्राममितिवत्। तच्चायुरग्निना प्राप्यमाणं वरुणो राजानुमन्यतां तत्रानुमतिं ददात्वेवमस्त्विति। राजग्रहणं तेनानुमतेन तदनुचरत्वात्सर्वे देवा अनुमन्यन्ते इत्याशयेन। यथाच इयं स्त्री वधूः पुत्रस्येदं पौत्रमघं पापं निरुन्ध्यात् पुत्रशोकं नानुभवेत्तथा तेन प्रकारेण वरुणो राजा अनुमन्यताम्।। १ ।।

**अग्निरिमां त्रायतां गार्हपत्यः सोऽस्याः प्रजां मुञ्चतु मृत्युपाशात्।**
**अरिक्तोपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियं स्वाहा।। २ ।।**

इमां वधूमग्निरावसथ्यस्त्रायतां रक्षतु। इयं वधूररिक्तोपस्था अस्तु, उपस्थ उत्सङ्गो बालकसुतैः क्रमेण जायमानैरस्या उत्सङ्गोऽरिक्तोऽशून्योऽस्त्वित्यर्थः। तथेयं जीवतां चिरायुषां पुत्राणां माता भवतु। पुत्राणामयं पौत्रस्तं चानन्दं सुखमियमाभिमुख्येन विशेषेण बुध्यताम्।। २ ।।

**मा ते गृहे निशि घोर उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु।**
**जीवपुत्रा पतिलोके विराज पश्यन्ती प्रजां सुमनस्यमानां स्वाहा।। ३ ।।**

हे वधु ते तव गृहे निशि दिवा घोरो रोदनादिशब्दो मा उत्थात् रोदनादिशब्दो दुष्टस्त्वद्गृहे मा भूत्कदाचिदित्यर्थः। रुदत्यो रोदनं कुर्वत्यस्त्वत्तव सकाशादन्यत्र संविशन्तु अन्यत्र तव दूरवर्तिनि देशे तिष्ठन्त्वित्यर्थः। त्वं पतिलोके पतिकुले विशेषेण राज शोभस्व जीवपुत्रा दीर्घायुर्बहुपुत्रा सती, तथा सुमनस्यमानां सुखिनीं प्रजां पुत्रादिकां पश्यन्ती सती।। ३ ।।

**मा ते कुमारः स्तनधः प्रमायि मा त्वं विकेश्युर आवधिष्ठाः। स्तनन्धयं ते सविताभिरक्षत्वा वाससः परिधानाद्बृहस्पतिर्विश्वेदेवा अभिरक्षन्तु नित्यं स्वाहा।। ४ ।।**

तव कुमारो बालकः स्तनन्धयः स्तनपः मा प्रमायि मा मृत। मा च त्वं विकेशी मुण्डा सती उरो वक्ष आवधिष्ठाः भर्तृविरहकुतमुरस्ताडनं तव मा भूदित्यर्थः। तव स्तनन्धयं सविता अभिरक्षतु बृहस्पतिश्च अभिरक्षतु आ वाससः परिधानात् परिधानवस्त्रपर्यन्तं यावत् रक्षतु, विश्वे देवाश्च नित्यमभिरक्षन्तु।। ४ ।।

एताभिश्चतसृभिर्ऋग्भिश्चतस्र आहुतयो दातव्या वरेण स्वयमेवमुत्तरा अपि। अग्ने प्रायश्चित्त इत्यादिभिर्यजुर्भिरन्या दश आज्याहुतयः क्रमापक्रमाभ्याम्।

**अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि।**
**यास्यां भृशा तनूस्तामस्या नाशय स्वाहा।।**

प्रायश्चित्तं पापनिवारणं धर्मजननं च कर्मोच्यते। तत्कारणत्वादग्निः प्रायश्चित्तिः। हे अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिर्दोषापसारे शुभजनने च निमित्तमतोऽस्यां वध्वां या भृशा अपवित्रा अतिशयेन बीजवशेन बालभावकृतकुचेष्टावशेन च तनू-

स्तामस्या वध्वा नाशय तद्गतमशुभं नाशय। वरस्य हि गार्भबैजिकदोषा जातकर्मादिभिर्नाशिताः, वध्वास्तु तानि प्रायेण न कृतानि -

गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानां प्रतिहन्यते।। (मनुः २.२७)

इति स्मृतेः। एनः पापमशुद्धिः।।

**वायो प्रायश्चित्ते०। सूर्य प्रायश्चित्ते०। चन्द्र प्रायश्चित्ते०। विष्णो प्रायश्चित्ते०। विष्णो प्रायश्चित्ते०। चन्द्र प्रायश्चित्ते०। विष्णो प्रायश्चित्ते०। चन्द्र प्रायश्चित्ते०। सूर्य प्रायश्चित्ते०। वायो प्रायश्चित्ते०। अग्ने प्रायश्चित्ते०।**

एतानि सानुषङ्गाणि पराणि पञ्च यजूंषि अपक्रमेण। तेनर्ग्भिश्चतसृभिश्चतस्रो, यजुर्भिश्च दशभिर्दशेति चतुर्दशाहुतयः सम्पन्नाः, त्र्यायुषमित्यनेन पञ्चदशी, - इत्यादित्यदर्शनः। स आज्यैकदेशे योऽनेन यजुषा वक्ष्यमाण आसेकस्तामेवाहुतिं मन्यते मन्त्रावृत्तिं वा।। ४ ।।

**त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषमित्याज्यस्यैकदेशे दध्यासिच्य दधिक्राव्णा इति त्रिर्दधि भक्षयित्वा माणवकायोत्सङ्ग इरामग्न इति फलानि प्रददाति।। ५ ।।**

स्वयंकर्तृकत्वादासां स्रुवेण पूर्वोक्ता घृताहुतीर्हुत्वा त्र्यायुषमित्यादियजुषा पृथक्पात्रोद्धृते घृते घृतैकदेशे दध्यासिच्य दधिक्राव्णः इत्यनया त्रीन्वारान् वधूं दधि भक्षयित्वा वरो माणवकाय वध्वा उत्सङ्गे निहिताय फलानि प्रददाति 'इरामग्ने' इति मन्त्रेण। मणिभिर्मन्त्रैरोषधिभिस्त्रिभिरुपायैः साध्यमानत्वात् त्र्य ुषं बालयुववृद्धावस्थात्रयभावित्वात् यागदानहोमसाध्यत्वात्तदारम्भकत्वाद्वा त्र्यायुषं यत् जमदग्नेः त्र्यायुषं, यच्च कश्यपस्य, यच्च देवानां, तत्स५ ।स्त्विति वर आशास्ते।

**दधिक्राव्णो अकारिषं जिष्णोरश्वर ' वाजिनः।**
**सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत्।।**

आग्नेयी। अनुष्टुप्। इन्द्रस्यार्षम्। दधि क्रामतीति दधिक्रावा 'अन्येभ्योऽपि-दृश्यते' (३.२.७५) इति क्वनिप्। अग्निर्वैश्वानर उच्यते। स हि सर्वं भक्षितं जरयति

जठरे स्थितो दध्यादिकम्। तस्य दधिक्राव्णोऽग्नेर्जाठरस्याहमकारिषं करोमि सन्तर्पणमर्थात्। कीदृशस्य। जिष्णोर्जयनशीलस्य, अश्वस्य अशनस्य व्यापिनो वा, वाजिनोऽन्नपतेः। नोऽस्माकं सुरभि सुगन्धि विद्याद्युद्गारभूषितमर्थान्मुखं दधि भक्ष्यमाणमाकरत् करोतु। लोडर्थे लेट्। नोऽस्माकमायूंषि प्रतारिषत् प्रतरतु दधातु। पूर्ववत् पंचमो लकारः। इरामग्न इतीयं व्याख्याता।। ५ ।।

**।। इत्यष्टाविंशी काण्डिका।। २८ ।।**



## ।। अथ एकोनत्रिंशी काण्डिका ।।

**तृष्णीमुपचरितं स्थालीपाकं श्रपयित्वा तस्याग्निमिष्ट्वा प्रजापतिं च शेषं प्राश्नीतः। अन्नमेव विवननमन्नं संवननं स्मृतम्। अन्नं पशूनां प्राणोऽन्नं ज्येष्ठं भिषक् स्मृतम्।। अन्नमयेन मणिना प्राणसूत्रेण पृश्निना। सिनोमि सत्यग्रन्थिना हृदयं च मनश्च ते।। सह वाचा मनो अस्तु सह चित्तं सह व्रतम्। चक्रमिवानडुहः पदं मामेवान्वेतु ते मनः।। मां चैव पश्य सूर्यं च मा चान्येषु मनः कृथाः। चाक्रवाकं संवननं मम चामुष्याश्च भूयादिति।। १ ।।**

तृष्णीमेव यत्रोपचारो निर्वापादिस्तं चरुं स्वरससिद्धत्वादुदकेन श्रपयित्वा तस्यांशेनाग्निं प्रजापतिं चेष्ट्वा नाम्नैव तूष्णींग्रहणात् हुतशेषं प्राश्नीतः वधूवरावेकत्र पात्रे सह। गृह्यान्तरेषु हि समशनमिति संज्ञा। सहाशनं च समशनमिति प्रसिद्धम्। संवनानमिति च मन्त्रलिङ्गम्। अन्ये त्वत्रापि चैकपात्रे न सह भोजनमिच्छन्ति। यथाहि यजमानपञ्चमा इरां प्राश्नन्ति सपत्नीका भुञ्जत इत्यतः पञ्चसंख्यासहश्रवणेऽपि इळाया गृहमेधीययोः पृथगेवाशनं, तद्वदिहापि भवितव्यम्। पाकयज्ञप्रतिषेधार्थं पुनस्तूष्णीमुपचरितग्रहणम्। उक्तं ह्येतत् 'तेष्वावृदुपचारस्तूष्णीम्' (१३.७) इति। भक्षणं तु अन्नमेव विवननमित्यादिभिश्चतसृभिरनुष्टुब्भिः, मन्त्रोच्चारणं चरुकर्मकम्।

'वन-षण-सम्भक्तौ' अन्नमेव विवननं विभजनम्, अन्नमेव संवननं स्मृतं सह भुज्यमानं संश्लेषणमित्यर्थः। अन्नं पशूनां प्राणः तेन हि जीवन्ति। अन्नमेव ज्येष्ठं प्रशस्ततमं भिषग्भेषजं स्मृतम्। तेन हि बुभुक्षादिकृता व्याधयो निवर्त्यन्ते।

वरो ब्रूते हे वधु तवाहं हृदयं च मनश्च सिनोमि 'षिञ्-बन्धने' बध्नामि। मननं मनो ज्ञानं मन्यतेऽनेन मनः बाह्येन्द्रियपञ्चकं, हृदयं चित्तम्। केन। सत्यग्रन्थिना सत्यं निर्व्याजचरितमेव ग्रन्थिस्तेन, पृश्निना शुक्लेन शुचिना धर्मरूपेणेत्यर्थः। अन्नं मणिरिव, प्राणः सूत्रमिव हाराद्यलंकाररूपमेतत्।

हे वधु तव च मम च वाचा सह मनोऽस्तु यादृशं वचनं तादृशं निर्व्याजं चित्तमस्तु, नतु दौर्जन्येनान्यच्चेतसि अन्यद्वाचि। एवमावयोश्चित्तं चैतन्यं समानमस्तु,

व्रतं च सफलं विहितं कर्म। तव मनो मामेवान्वेतु चक्रमिवानडुहः पदं, यथा शकटचक्रं शकटकर्षकस्य वृषभस्य पदमनुगच्छति।

मामेव सूर्यमेव च पश्य। अन्येषु पुरुषेषु मनो मा कृथाः। मम चामुष्याश्च वध्वाश्चाक्रवाकमिव संवननं भूयात्। यथा चक्रवाकपक्षिमिथुनं यथाप्राप्तमतिस्नेहात् वृष्ट्यादिकं संविभज्य भुंक्ते तद्वदावां, तद्वदतिप्रीतिरावयोरस्त्वित्यर्थः।। १ ।।

**इति श्रीजालन्धरीयभट्टोपेन्द्रसूनुहरिपालपुत्रदेवपालविरचिते समन्त्रचारायणीयगृह्यभाष्ये विवाहः परिपूर्णः।।**

**इत्येकोनत्रिंशी काण्डिका।। २९ ।।**



## ।। अथ त्रिंशी काण्डिका।।

अथ गर्भाधानम् -

**संवत्सरं ब्रह्मचर्यं चरतो द्वादश रात्रीः षट् तिस्र एकां वा।। १ ।।**

ब्रह्मचर्यममैथुनं चरित्वा गर्भाधानं कार्यमिति। तत्पूर्णिमायाममावस्यायां न मैथुनं कर्तव्यमिति च संकल्पः। एकैककर्तृकमत्र व्रतम्। संवत्सरं प्रथमः कल्पः। यौवनमदस्यातिशयात्त्वनुकल्पेनापत्कल्पो विकल्पः - द्वादश रात्रीः षट् तिस्र एकां वेति।

**तौ संविशतः ।। २ ।।**

तौ वधूवरावेकस्मिन् शयने भवतः। विवाहोत्तरकालप्रथमशयने आधाने च समानमेतद्विधानमनन्तरमन्त्रचतुष्टयजपसहितम्।। २ ।।

**अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम्। इह प्रजामिह रयिं रराणः प्रजायस्व प्रजया पुत्रकाम।। अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानाम्। उप मामुच्चा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रकामे।। प्रजापते तन्वं मे जुषस्व त्वष्टर्देवेभिः सहसा न इन्द्रः। विश्वैर्देवैर्यज्ञियैः संविदानः पुंसां बहूनां मातरः स्याम।। अहं गर्भमादधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः। अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अवरीषु पुत्रानिति स्त्र्यादिव्यत्यासं जपतः।। ३ ।।**

एतास्त्रिष्टुभः प्रथमसंवेशने गर्भाधाने च वधूवरौ जपतः स्त्र्यादिव्यत्यासं कृत्वा, प्रथमां स्त्री, द्वितीयां वरः, तृतीयां स्त्री, चतुर्थीं वरः। व्यत्यासो विपर्ययः। पुरुषो हि प्रधानम्। तस्य पूर्वं क्रियायोगोऽन्यत्र, इह तु विपर्ययः। स्त्री आदिर्यत्र व्यत्यासे, स स्त्र्यादिव्यत्यासः।

वधूर्वदति - हे पुत्रकाम त्वामहमपश्यं पश्यामि, चेकितानं देदीप्यमानं ब्रह्मवर्चसादिना अतिशयेन दीप्तिमन्तम्। केन पश्यामि। मनसा, नतु चक्षुषा। कीदृशम्। तपसो जातं तप इति प्रजापतेः सत्कर्मणश्च नाम, प्रजापतेर्ब्रह्मणः सकाशाज्जातं, तपसश्चाविर्भूतं वृद्धिं गतम्। इह प्रजां मयि पुत्ररूपां रयिं च धनं रराण आददत् प्रजया प्रजायस्व प्रजामुत्पादयेत्यर्थः।। १ ।।

वर आह - पश्यामि त्वां हे पुत्रकामे दीध्यानां दीप्तिमतीं मनसा। कीदृशीम्। नाधमानां 'नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु' प्रजां याचमानाम्। कुत्र। स्वायां तनू स्वस्यां तन्वाम्। किमर्थम्। ऋद्ध्यै समृद्ध्यौ लोकद्वयाभ्युदयाय। मामुप मम समीपे वर्तमाना त्वमुच्चा महती पूज्यतमा सत्पुत्रादियोगात् युवतिस्तरुणी सती बभूयाः अतिशयेन भूयाः। प्रजया प्रजायस्व आत्मा वै पुत्रनामेति वचनात् प्रजारूपेण प्रजायस्व पुत्रवती भव।। २ ।।

वधूराह भर्तरि प्रजापतित्वमध्यारोप्य - हे प्रजापते मम तन्वं तनूं शरीरं जुषस्व। हे त्वष्टः हे प्रजापते त्वं इन्द्रः सन् सहसा बलेन देवैर्विश्वैश्च देवैरनुपतितः सन् नोऽस्माकं संविदानः सम्यक् जानानः। यज्ञियैर्यज्ञार्हैरिति देवविशेषणम्। वयं च बहूनां पुंसां पुत्राणां मातरो निर्मात्र्यः स्याम।। ३ ।।

वर आह - ओषधीषु फलपाकान्तासु अहमेव गर्भं फलजननसामर्थ्यमादधामादधे। जीवात्मनां परमात्मनो भेदाभावादेवमभिधानम्। अत एवाह विश्वेषु सर्वेषु भूतेषु अहमेवान्तस्तिष्ठामि अन्तर्यामितया, पृथिव्यामहमेव प्रजामनवद्यामजनयं जनयिष्यामि च। अहमेव जनिभ्यो जननीनां स्त्रीणामवरीषु जठराभ्यन्तरवर्तिनीषु गर्भग्रहणीषु पुत्रान् जनयामि बीजमादधामि।। ४ ।।

**एवमेवर्तौ प्रजाकामौ संविशतः।। ४ ।।**

गतार्थम्।। ४ ।।

**करदिति भसदमभिमृशति।। ५ ।।**

करदिति यजुषा भसदं स्त्रीचिह्नं वरोऽभिमृशति। करत् कुर्वाणं प्रजां, भवेत्यर्थः।। ५।।

**भसदित्युपरि जननम्।। ६ ।।**

पुंचिह्नं भसदिति यजुषा अभिमृशति स्त्री। हे पुंजनन त्वं भसद्दीप्यमानं सत्कार्यजननसमर्थं भवेत्यर्थः।। ६ ।।

**बृहदिति जातम्।। ७ ।।**

बृहदित्यनेन जातं वीर्यं प्रक्षिपति। बृहद्विस्तीर्णं पुत्रजननसमर्थं भवेत्यर्थः।।

**।। इति त्रिंशी काण्डिका।। ३० ।।**

## ।। अथ एकत्रिंशी काण्डिका।।

अथ सीमन्तः -

**तृतीये गर्भमासे सीमन्तं कारयते शुक्लपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा पश्चादग्नेर्दर्भेषु प्राङ्गासीनायाः सर्वान्केशान्संप्रमुच्य प्रसाधयते।। १ ।।**

गर्भग्रहणादारभ्य यस्तृतीयो मासस्तत्र शुक्लपक्षस्य पर्वणि मुख्ये दिने सीमन्तोन्नयनसंज्ञया यौगिक्या प्रसिद्धं यत्संस्कारकर्म, तत्कारयते, नतु विद्वानपि स्वयं कुर्यादिति णिचः प्रयोगात् दर्शितम्। एतच्च पात्रस्यैव केचित्संस्कारमिच्छन्ति आधारसंस्कारादेव गर्भस्योपकारो भविष्यति गोलकसंस्कारेणेव चक्षुष इति वदन्तः। तथाच स्मृतिः।

'सकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत्।।' इति।

अन्ये तु गर्भस्यैव संस्कारं मन्यन्ते तत्रैव तृतीये गर्भमास इत्यस्योपपत्तेः। पात्रमात्रसंस्कारत्वे हि किं गर्भमासव्यपेक्षया, यदा कदाचित्सीमन्तो विधीयते, कार्यः सीमन्त इति। स्मृतेरपि -

'गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानां प्रतिहन्यते।।' (मनु० २.२७) इति।

अपरे तूभयसंस्कारमाहुः। तत्र क्षेत्रसंस्कार एवानुमततमप्रायो वेदार्थविदां सकृदनुष्ठानस्य प्रसिद्धत्वाद्बाहुल्येन। यथोक्तमुपसमाधानं कृत्वा जयप्रभृतिभिराज्यभागान्तं हुत्वा, प्रकृतस्य आवसथ्यस्य अग्नेः पश्चाद्भागे अग्नेर्दर्भेषु प्राङ्मुख्या उपविष्टायाः सर्वान् केशान् सम्यक् प्रकर्षेण मुक्तान् कृत्वा, कङ्कतेन दारुमयोभयदिक्कभूरितरदन्तयोगिना वालस्पष्टीकरणेन प्रसाधयते स्पष्टीकरोति वक्ष्यमाणाभिस्तिसृभिरृग्भिः।। १ ।।

**यं सीमन्तं कङ्कतस्ते चकार यद्वा क्षुरः परीववर्ज वपंस्ते। स्त्रीषु रूपमश्विनौ तन्निधत्तं पौंस्येनेमं संसृजतं वीर्येण।। इन्द्राणी चक्रे कङ्कतं स सीमन्तं विसर्पतु। पुनः पतिभ्यो जायां दा अग्ने प्रजया सह।। पुनः पत्नी-मग्निरदादायुषा सह वर्चसा। दीर्घायुरस्या यः पतिर्जीवाति शरदः शतमिति।।२**

इतिशब्दः करणप्रधानः। अनेन मन्त्रत्रयेण केशान् प्रसाधयते इति पूर्वेण संबन्धः। यं सीमन्तं ते तव कङ्कतश्चकार कृतवान्, क्षुरो वा यं चकार सीमन्तं, क्षुर इव तीक्ष्णत्वात्कङ्कत इति व्याचक्षते विवाहादूर्ध्वं क्षुरसंसर्गस्य स्त्रीष्वमाङ्ग-लिकत्वात्। दृष्टश्चोपमायां वाशब्दः समुद्रो वा महासत्त्वः इत्यादौ निपातानामने-कार्थत्वात्। यत् वपन् केशान्स्पष्टीकुर्वन् कङ्कतस्ते तव परीववर्ज वर्जितवान् वालानां शिरोविदारणभयात्, तद्रूपं सीमन्ताख्यसंस्कारयुक्तत्वात्स्त्रीषु हे अश्विनौ निधत्तं कुरुतं, तथैव तद्रूपं पौंस्नेन वीर्येण संसृजतमश्विनौ।। १ ।।

अमुं कङ्कतमिन्द्राणी शची चक्रे कृतवती। अतोऽयमुत्कृष्टत्वात्कङ्कतः सीमन्तं विसर्पतु चिनोतु संपादयत्वित्यर्थः। हे अग्ने इयं पत्नी त्वया विवाहसमये दत्ता, इदानीं पुनः प्रजया सह पतिभ्यः एतां जायां दाः देहि पुत्रवतीं सम्पादयेत्यर्थः।

अग्निरिमां पत्नीं पुनरदात् ददौ आयुषा वर्चसा च सह। अस्या यः पतिर्भर्ता स दीर्घायुरस्तु। जीवाति शरदः शतं, जीवातीति लोडर्थे लट्, (लेट्) शरदां शतं जीवतु वर्षशतं जीवतादित्यर्थः।। २ ।।

**त्रिः श्वेतया शलल्या शमीशाखया सपलाशया वा सीमन्तं विचिनोति यास्ते राक इति।। ३।।**

त्रीन्वारान् त्रिः, श्वेतया शुक्लया, शलल्या शललिः श्वावित्सेधा, तस्याः शलाका शललिरुपचारात् तया, शमीशाखया सपलाशया सपत्रया सीमन्तं विचिनोति 'यास्ते राके' इति त्रिष्टुभा। शलल्या ताम्रशलाकया श्वेतयालोहितयेति यद्व्याचक्षते, तन्न दृष्टानुरूपम्।।

**यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि।**
**ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा।।**

ब्रह्मण आर्षम्। हे राके देवपुत्रि यास्तव शोभना मतयः, सुपेशसः सुरूपा अभिमतफलदानोन्मुखत्वं मतीनां सुरूपत्वं, याभिः सुमतिभिर्दाशुषे दात्रे यजमानाय वसूनि धनानि ददासि, ताभिरुपलक्षिता सत्यद्यास्मिन्नहनि नोऽस्मानुपागहि उपागच्छ, सुमनाः प्रसन्नचित्ता सती, हे सुभगे सुन्दरि राके सहस्रपोषं सहस्रसंख्यं धनं रराणा ददती।। ३ ।।

**अथास्याः पृथक्केशपक्षौ सन्नह्यति नीललोहितेन सूत्रेण नीललोहितं भवति कृत्या शक्तिर्व्यज्यते। एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यत इति।।४**

अनन्तरमस्या गर्भिण्याः कङ्कतसमीकृतानां शलल्या विभज्यमानाभिः रेखाभिः परिच्छेदेन कृतसीमन्तभागानां केशानां कृतौ पृथग्द्वौ पक्षौ पार्श्वद्वयगतौ सन्नह्यति बध्नाति नीललोहितेन सूत्रेण नीललोहितमित्यादिकयानुष्टुभा। नीललोहितमिदं सूत्रं भवति। कृतिः क्रिया, तया शक्तिर्व्यज्यते गर्भस्य पुंस्त्वं व्यज्यत इत्यर्थः, अस्या गर्भिण्या ज्ञातय एधन्ते वर्धन्ते लोडर्थे लट् व्यज्यतां शक्तिर्वर्धन्तां ज्ञायत इत्यर्थः, पतिश्च स्नेहादिबन्धेषु सत्सु बद्ध्यताम्।। ४ ।।

**यो गुरुस्तमर्हयेत्।। ५ ।।**

यो गुरुः सीमन्तोन्नयनस्य कर्ता ब्राह्मणस्तमर्हयेद्यथाशक्ति मधुपर्कदानादिना पूजयेत्।। ५ ।।

**एतदेव कुमारीणां सटोद्धरणमत्रैवानुलेपनम्।। ६ ।।**

अत्रैव काले वाग्दत्तानां कुमारीणां सटोद्धरणं कर्म कर्तव्यं केशरचनाविशेषात्मकम्। अनुलेपनं सर्वौषधिकुङ्कुमप्रभृतिभिरनुलेपनं शोभाविशेषाधायि सीमन्तस्य। अत्राग्नेय्या ये के च ज्मेत्यादिकया चतुर्गृहीतेन प्रधानयागः।। ६।।

**।। इत्येकत्रिंशी काण्डिका।। ३१ ।।**



## ।। अथ द्वात्रिंशी काण्डिका ।।

**अथ पुंसवनम्।। १ ।।**

अथेत्यानन्तर्ये सीमन्तोन्नयनानन्तरं पुंसवनसंज्ञकं गर्भसंस्कारकर्म कर्तव्यमिति।। १ ।।

**भूयिष्ठगतेषु गर्भमासेषु त्रीन्स्थालीपाकाञ्छ्रपयेदाग्नेयमैन्द्रं वैष्णवं च तेषां यथादैवतं जुहोति 'अग्निस्तुविश्रवस्तमम्', 'इन्द्र क्षत्रं', 'प्र तद्विष्णुः पुमान्' इत्यभिजुहोति।। २ ।।**

'दशमे मासि सूतवे' इति श्रुतेः, दर्शनाच्च दश गर्भमासाः। तत्र पञ्च अर्धभागः, षट् भूयांसः, सप्त भूयिष्ठाः। भूयिष्ठः सप्तमो गतो येषु, तेषु गर्भमासेषु सत्सु, अष्टमे मासि शिष्टाचारात्। त्रीन् स्थालीपाकान् श्रपयेत् आग्नेयमैन्द्रं वैष्णवं च। तेषां मध्यादन्यतममन्यतमं गृहीत्वा यथादैवतं जुहोति। यत्रैकः स्थालीपाकस्तत्र देवता-भेदेऽपि एकं कर्म द्रव्यदेवतासंयोगस्यैक्यात्। इह तूभयभेदात् संयोगभेदेन कर्मबहुलत्वम्। अग्निस्तुवीत्यादिना अग्निं जुहोति, इन्द्र क्षत्रमित्यादिना इन्द्रम्, प्र तद्विष्णुरित्यादिना विष्णुम्, पुमानित्यादिनैकैकस्माद्भागमुद्धृत्य स्विष्टकृतं जुहोति।।

**अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम्। अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे।। १ ।।**

अग्निर्दाशुषे हविर्दत्तवते यजमानाय पुत्रं ददाति। कीदृशम्। तुविश्रवस्तमं तुविशब्दो भूरिनामसु पठितः, श्रवःशब्दोऽन्नवचनो यशोवचनो वा, बह्वन्नतमं बहुयशस्कतमं वा, तुविब्रह्माणं ब्रह्मशब्दो वेदवचनोऽत्र बहुवेदविदमित्यर्थः, तथोत्कृष्टं सर्वातिशायिनं, अतूर्तं त्वरारहितं अतरलं स्फीतमिति यावत्, श्रावयतां पतिं ऋत्विजां पतिं यज्वानमित्यर्थः।। १ ।।

**इन्द्र क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनाम्।**
**अपानुदो जनममित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकम्।। २ ।।**

हे इन्द्र त्वं क्षत्त्रमभि क्षतत्राणं प्रत्यजायथाः जातः। ओज इति अस्य

विशेषणम्। क्षात्रमोजो बलं च लक्षणीकृत्य त्वं जात इत्यर्थः। वामं वननीयं संविभागार्हम्। हे वृषभ वर्षक। केषाम्। चर्षणीनां मनुष्याणां देवा अपीह मनुष्याः। अमित्रयन्तममित्रमिवाचरन्तं जनमसुरलोकं त्वमपानुदः अपसारितवानसि। कीदृशं जनम्। उरुं विस्तीर्णम्। अपानुद्य च तं देवेभ्यो देवार्थं देवानां वा, सुब्व्यत्ययेन, लोकं कृतवानसि।। २ ।।

प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षयन्ति भुवनानि विश्वा।। ३ ।।

**व्याख्यास्तये।। ३ ।।**

पुमानग्निः पुमानिन्द्रः पुमान्विष्णुरजायत। पुमांसं जनयेत्पुत्रं दशमे मासि सूतवे।। येन जातेन विभुना जीवेम शरदः शतं पश्येम शरदः शतमिति तं नो मंहस्व शतिनं सहस्रिणं गोसनिमश्वसनिं वीरम्।।

आभ्यामृग्यजुषाभ्यां स्विष्टकृत्क्रियते। अग्न्यादयः पुमांसं पौरुषातिशययुक्तं पुत्रं जनयेयुर्यतस्त एव त्रिलोक्यां पुमांसः पौरुषातिशययुक्ता अजायन्त जाताः। दशमे मासि सूतवे सोतुं, तुमर्थे तवेङ्प्रत्ययः। येन जातेन सता विभुना प्रभुणा वयं शरदः शतं जीवेम पश्येम च, तं पुत्रं नोऽस्माकं मंहस्व वर्धयस्व, शतिनं सहस्रिणं शत-सहस्रादिधनयुक्तं, गोसनिं गवां संविभक्तारमेवमश्वसनिं वीरं पुत्रं विक्रान्तं वा विक्रमयुक्तम्।। २ ।।

**।। इति द्वात्रिंशी काण्डिका।। ३२ ।।**



## ।। अथ त्रयस्त्रिंशी काण्डिका।।

**अथ सोष्यन्तीसवनम्।। १ ।।**

अनन्तरं सोष्यन्तीसवनं नाम दृष्टार्थं कर्मोच्यते। यौगिकीयं संज्ञा। सूयतेऽनेनेति सवनं सुखप्रसवं कर्म। सोष्यमाणाया आसन्नप्रसवायाः सवनं सोष्यन्तीसवनम्।। १ ।।

**विजनिष्यमाणाया अद्भिः पाणिं स्रवन्तं शिरस्याधाया हृदयादभिमृशेत्।। २ ।।**

विजनिष्यमाणाया आसन्नप्रसवायाः अद्भिः स्रवन्तं पाणिं शिरस्याधाय हृदयं यावदभिमृशेत्। भर्ता अत्र कर्ता, तदसन्निधावाप्तः कश्चिद्देवरादिः।। २ ।।

मन्त्रमाह -

**यथायं वातः पवते यथा समुद्र एजति। एवं ते गर्भ एजतु सह जरायुणावपद्यतामिति। क्षिप्रमेव प्रजायते।। ३ ।।**

अनेन मन्त्रेणाभिमृशेत्। तथा सति क्षिप्रमेव सुखेन प्रसूयते इति दृष्टार्थतामस्य कर्मण आह।। यथा प्रत्यक्षो वायुरयं वेगवाही पवते धावति, यथावा समुद्र एजति कम्पते, एवं ते तव गर्भ एजतु तूर्णं प्रजायतां, जरायुणा गर्भाशयेन सह अवपद्यतां निर्गच्छतु।। ३ ।।

**।। इति त्रयस्त्रिंशी काण्डिका।। ३३ ।।**



## ।। अथ चतुस्त्रिंशी काण्डिका।।

अथ (जातकर्म, तदङ्गत्वेन)[1] नामकर्म -

**पुत्रे जाते नाम धीयते।। १।।**

पुत्रे जाते जातकर्म कृत्वा नाभिवर्धनादनन्तरं नाम धीयते संकल्प्यते - इदं नाम करिष्यते इति केचिद्व्याकुर्वते, नामकरणं हि एकादश्यां नाम कुर्वीत पुण्ये वाहनि इत्यशौचशुद्धौ स्मृतम्। अन्ये त्वाहुः - जाते सति एकादशं तदनन्तरं वा सुलग्नं नामकर्मणि नातिक्रामेदित्ये वं परमेतदिति। वयं तु तत्त्वमदूरे वक्ष्यामः।। १

**घोषवदाद्यन्तरन्तस्थं चतुरक्षरम्।। २ ।।**

नाम्न आदौ घोषवदक्षरं कर्तव्यम्, मध्ये चान्तस्थसंज्ञकम्, चत्वार्यक्षराणि यत्र तत्। अक्षराणि अचोऽत्र हलामनवधारणात्।। २ ।।

**यथोपपत्ति वा।। ३ ।।**

यथावा देवताप्रसादलब्धत्वाद्यनुसारेण तदुपपद्यते, तथा कर्तव्यम्।। ३ ।।

**अग्निमत्रानीय तस्मिन्नाज्यभागान्तं हुत्वा सहिरण्ये कांस्ये संपातानवनयेत् 'हिरण्यगर्भः', 'संवत्सरस्य प्रतिमां', 'कायस्वाहा, कस्मै स्वाहा, कतमस्मै स्वाहा, प्रजापतये स्वाहा', 'प्रजापते नहि त्वत्' इति च द्वाभ्याम्।। ४ ।।**

यत्र गृहे प्रसवस्तत्र लौकिकमग्निमाहृत्य तत्रैवाज्यभागान्तान् होमान् कृत्वा हिरण्ययुक्ते कांस्यपात्रे संपातान् हुतशेषबिन्दूनवनयेत् स्रावयेत् हिरण्यगर्भ इत्यष्टाभिराहुतिभिः। हिरण्यगर्भ इत्येकाहुतिः। संवत्सरस्य प्रतिमामिति द्वितीया। काय स्वाहा, कस्मै स्वाहा, कतमस्मै स्वाहा, प्रजापतये स्वाहेति चतस्रः। प्रजापते नहि त्वदिति द्वाभ्यां द्वे। एवमष्टौ भवन्ति। केचित् प्रधानकर्मत्वाच्चतुर्गृहीतेनैव होम इत्याहुः।।

**हिरण्यगर्भः समवर्ततताग्रे भूतस्य जातः पतिरेक आसीत्।**
**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम।।**

---

१. जातकर्म प्रक्रियायामपि बालस्य नामकरणसंस्कारः प्रथमवारं क्रियते। मुख्यं व्यावहारिकं च (द्वितीयं) नामकरणं षट्त्रिंशकाण्डिकायां विव्रियते। विवरणं च तत्रैव दीयते भाष्यकारैः।

एषा विवाहकाण्डे विवृता।।

**संवत्सरस्य प्रतिमां ये त्वा रात्र्युपासते।**
**तेषामायुष्मतीं प्रजां रायस्पोषेण संसृज।।**

हे रात्रि त्वं संवत्सरस्य प्रतिमा निर्मात्री, त्वां ये जनाः उपासते, तेषां प्रजामायुष्मतीं कुरु रायस्पोषेण धनपुष्ट्या संसृज संयोजय।

**काय स्वाहा।।**

काय प्रजापतये सुहुतमस्तु।

**कस्मै स्वाहा। कतमस्मै स्वाहा। प्रजापतये स्वाहा।।**

कप्रभृतीनि चत्वारि प्रजापतिनामानि।

**प्रजापते नहि त्वदन्य एता विश्वा जातानि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु स्वाहा।।**

विराट्। हे प्रजापते त्वदन्यो नास्ति य एतानि विश्वानि सर्वाणि जातानि जन्मवन्ति भूतानि परिबभूव परिभूतवान् वशीकरोति व्याप्नोतीति यावत्। एता एतानि, विश्वा विश्वानि 'शेश्छन्दसि बहुलम्' (६.१.७०) इति शेर्लुक्। परितेत्यत्र त इति वर्णागमः। यत्फलं कामयमाना जुहुमस्तन्नोऽस्तु।

**असा अमुष्य पुत्रोऽमुष्यासौ पुत्रः। वयं स्याम पतयो रयीणां स्वाहा।।**

असा अमुष्य चेति नामविशेषनिर्देशः। असौ विष्णुमित्रोऽमुष्य यज्ञमित्रस्य पुत्र इति पितापुत्रयोर्द्विर्नामोच्चारणं षष्ठ्यन्तस्य पितृनाम्नो मध्ये, पुत्रनाम्न आद्यन्तयोः। वयं रयीणां धनानां पतयः स्वामिनः स्याम सम्पद्येमहि।

**अग्नेरायुरसीति हिरण्येन मुखं मेध्यं कृत्वा पाणिना मुखमद्भिः संस्पृश्य प्रक्षाल्य स्तनाननुमन्त्रयते मधु वात ऋतायत इति तिसृभिः प्रत्यृचमुभावुत्तमया।। ५ ।।**

अग्नेरायुरसीत्यादिना मन्त्रेण हिरण्येन मुखं मेध्यं पवित्रं कृत्वा जलाविलेन हस्तेन मुखं स्पृष्ट्वा बालकस्य मातुः स्तनाननुमन्त्रयते प्रक्षाल्य बालकस्य पिता, तदसन्निधौ पुरोहित एकैकया ऋचा एकैकम्, उत्तमयान्यया तूभौ। तदपेक्षमेव

बहुवचनं स्तनानिति। मधु वात इति दक्षिणम्, मधु नक्तमिति वामम्, मधुमान्न इति द्वौ। मधुशब्दो जगत्प्रजननस्यामृतस्य नित्यानन्दमयस्य मधुविद्याप्रसिद्धस्य नाम मन्त्रत्रये ज्ञेयः।

**मधु वात ऋतायते मधु क्षरन्ति सिन्धवः।**
**माध्वीर्नः सन्त्वोषधीः।।**
**मधु नक्तमुतोषसा मधुमत्पार्थिवं रजः।**
**मधु द्यौरस्तु नः पिता।।**
**मधुमान्नो वनस्पतिर्मधुमां अस्तु सूर्यः।**
**माध्वीर्गावो भवन्तु नः।।**

ऋतो यज्ञः। यज्ञमिच्छति यः स ऋतायच्छब्देन क्यजन्तेन शत्रन्तेन चोच्यते, ऋतायते यज्ञमिच्छते यजमानाय वातो मधु अस्तु अमृतत्वकारी भवतु। सिन्धवो नद्यो मधु जलं क्षरन्ति क्षरन्तु। ओषधीः ओषध्यः फलपाकान्ताः माध्वीर्मधुररस-संयुक्ता भवन्तु। मधुनक्तम्, उतशब्दोऽप्यर्थे, नक्तं सन्ध्या, सापि उषसा रात्र्या सह मध्वस्तु नः। पार्थिवं रजः पार्थिवलोकः मधुमानस्तु। द्यौरन्तरिक्षं मध्वस्तु नः पिता। वनस्पतयो मधुमन्तः सन्तु, सूर्यश्चास्माकं मधुमानस्तु, गावश्चास्माकं माध्वीर्माध्व्यो मधुमत्यः सन्तु।। ५ ।।

**हिरण्येन सम्पातान्सन्निघृष्य मधु चेत्येके तन्मुखे कृत्वा प्रपाययत्यायुर्धय जरां धय सत्यं धय श्रियं धयोर्जं धय रायस्पोषं धय ब्रह्मवर्चसं धय।। ६ ।।**

सुवर्णेन सम्पातान् सन्निघृष्य बालस्य मुखे कृत्वा पाययति। एके पुनर्मन्यन्ते मधु च, मधुयुक्तान् संपातान् सन्निघृष्य पाययेदित्यर्थः। उत्सर्गेण पितृकर्मकत्वात् जातकर्मप्रभृतीनां, पिता ब्रूते - हे बालक आयुर्धय पिब, एवं जरां पिब, पीयमानं सम्पातघृतं समधु वा स्तनक्षीरं च तवायुरादेः कारकमस्त्वित्यर्थः। ऊर्जमन्नं बलं च। रायस्पोषो धनपुष्टिः। वेदादिविद्यासमृद्धिर्ब्रह्मवर्चसम्।। ६ ।।

**जीव शरदः शतं, पश्य शरदः शतमिति मूर्धनि निघ्राप्य स्वस्त्ययनं वाचयति।। ७ ।।**

बोधश्चमेत्यनुवाकम्। स्वार्थे णिच् वाचयतीति। शिष्टं स्पष्टम्।।

**बोधश्च मा प्रतीबोधश्च पुरस्ताद्गोपायतामस्वप्नश्च मानवद्राणश्च दक्षिणतो गोपायतां गोपायमानश्च मा रक्षमाणश्च पश्चाद्गोपायतां जागृविश्च मारुन्धती चोत्तराद्-गोपायताम्।।**

**अनमित्रं नो अधरागनमित्रमुदक्कृधि। इन्द्रानमित्रं नः पश्चादनमित्रं पुरस्कृधि।।**

**अनमित्रैरहोभिः सचेमहि विश्वे देवा अनमित्रा न उषसः सन्तु निम्रुचः।। याः षड्वीः पञ्च प्रदिशस्ता नः पान्तु मित्रधा नो मित्रे दधाता अभयं नो अस्तु।।**

**ये रात्रीमनुतिष्ठथ ये च भूतेषु जागृथ।**
**पशून्ये सर्वान्नक्षथ ते न आत्मसु जागृत।।**

**बोध प्रतीबोधास्वप्नानवद्राण गोपायमान रक्षमाण जागृवेऽरुन्धति ये देवास्तनूपाः स्थ ते म इह तन्वं पात बोधप्रतीबोधेत्यसौ वा आदित्यो बोधोऽग्निः प्रतीबोधोऽस्वप्नान-वद्राणेति चन्द्रमा वा अस्वप्नोऽयं यः पवते सोऽनवद्राणो गोपायमान रक्षमाणेत्यहर्वै गोपायमानो रात्री रक्षमाणो जागृहेऽरुन्धतीति यज्ञो वै जागृविर्दक्षिणारुन्धत्येते वै देवा राष्ट्रभृतस्तानेवेट्ट आत्मनो गोपीथाय।।**

एतत्स्वस्त्ययनं, स्वस्तिरविनाशस्तस्यायनं प्रापणम् अविनाशलाभकारणम्। राष्ट्रभृतामार्षम्। राष्ट्रं जगद्विभ्रति धारयन्ति पुष्णन्ति च ये ते राष्ट्रभृत आदित्यादय ऋतवोऽपीत्येके। बोधादयोऽत्रैवानुवाके पुरस्ताद्व्याख्याताः। आदित्यो बोधः, अग्निः प्रतीबोधः प्रकाशकत्वात्। चन्द्रमामनोरूपेणास्वप्नः सततजागरणात्, प्राणरूपो वायु-रनवद्राणः अकुत्सितगतित्वात्। दिवसो गोपायमानो जीवननिमित्तक्रियानुष्ठापन-द्वारेण, रक्षमाणो रात्रिः। जागृविः यज्ञः प्रजापतिरूपः, 'यज्ञो वै प्रजापतिः' इति श्रुतेः सर्वान्तर्यामिरूपेण सर्वप्राणिषु जागरणाज्जागृविः, अरुन्धती दक्षिणा। साहि अरीन्नि-वारयन्ती सती यजमानाय फलं ददाति।।

बोध आदित्यो मां पुरस्तात् पूर्वस्यां दिशि गोपायतां रक्षतु, प्रतीबोधश्चाग्निः, अस्वप्नश्चन्दो मां दक्षिणस्यां दिशि गोपायतां, अनवद्राणश्च वायुः। प्राणः गोपायमानो दिवसो मां पश्चिमदिग्भागे गोपायतां, रक्षमाणश्च रात्रिकालः जागृविर्यज्ञः प्रजापति-रुत्तरदिग्भागे मां गोपायताम्, अरुन्धती च दक्षिणा।।

अनमित्रं नोऽधरागित्यैन्द्री, अनुष्टुप्। न मित्रममित्रं नामित्रमनमित्रं मित्रमित्यर्थः

नञ्द्वयेन प्रकृतार्थाभिद्योतनात्। हे इन्द्र नोऽस्माकं अधरागधस्तनदिग्भागे उदक्चोत्तर-दिग्भागेऽनमित्रं कृधि कुरु, यस्तत्रास्मान्हिंसितुमिच्छति, तमनुकूलं सम्पादयेत्यर्थः। एवमुत्तरत्र। पश्चात्पश्चिमदिशि। पुरः पूर्वस्यां दिशि।

अनमित्रैरहोभिरिति द्वे शक्वर्युष्णिहौ। अभिधेया सर्वत्र देवता। हे विश्वे देवाः सर्वे देवा वयं मित्रीभूतैरहोभिः सचेमहि, उषसः प्रभातकालाः, निम्रुचश्च रात्रयोऽस्माकं मित्राणि सन्तु। 'म्रुचु म्लुचु गतौ', नितान्तं गच्छत्याभ्य आदित्य इति निम्रुचः।। याः षड्देवता उर्वी उर्व्यः महत्यः। कास्ताः।। द्यौः, पृथिवी, अहः, रात्रिः उषः ओषधयः तथा पञ्च प्रदिशश्चतस्रः याद्या ऊर्ध्वा पञ्चमी। ता नोऽस्मान् पान्तु रक्षन्तु। हे अनन्तरोक्ता यतो यूयं मित्रधा हि कार्यस्य विधात्र्यस्ततो नोऽस्मान् मित्रे शुभकर्मणि दधात धारयत, अभयं चास्माकमस्तु युष्मत्प्रसादात्।। हे प्रदर्शितदेवा ये यूयं रात्रीमनुतिष्ठथ रात्रीं लक्षणीकृत्य तिष्ठथ, ये च भूतेषु जागृथ, सर्वांश्च पशून् रक्षथ, ते नोऽस्माकं सम्बन्धिषु आत्मसु शरीरेषु जागृत।

बोध प्रतीबोधेत्यादिनाष्टानां संबोधनम्। हे बोधादयः अरुन्धतीपर्यन्ताः ये यूयं देवास्तनूपाः स्थ तनूनां शरीराणां रक्षका भवथ, ते मे मम इह गहने भवे तन्वं तनूं पात रक्षत। बोधादीन् प्रतीकैरवच्छिद्य व्याचष्टे बोधप्रतीबोधेत्यादिना, गतार्थ-मेतत्। एते वै देवाः, वैशब्दोऽवधारणे, एत एव बोधादयो राष्ट्रस्य जगतो भर्तार ऋतवश्च, अतोऽहं तानेवेट्टे स्तौमि। किमर्थम्। आत्मनो गोपीथाय रक्षणाय। अन्यान्यप्यत्र स्वस्त्ययनानि पठनीयानि। वचिश्चुरादौ पठ्यते, ततः स्वार्थे णिच् स्वस्त्ययनं वाचयतीति। तेन युक्तं स्वकर्तृकं वचनं पितुः। स्वकर्तृकाणि ह्येतान्युत्सर्गेण प्राक् चूडाकरणात्।

**।। इति चतुस्त्रिंशी काण्डिका।। ३४ ।।**



## ।। अथ पञ्चत्रिंशी काण्डिका।।

**सर्षपान्फलीकरणमिश्रान्दर्व्या जुहोति, 'शण्डो मर्कोपवीतः' 'आलिखन्' 'हर्यक्ष्णः' 'केशिनी' इति।। १ ।।**

बालकसूतिकयोः रक्षार्था अशौचकालेऽमी होमाः, अतश्च दृष्टार्था एव। फलीकरणं कम्बुकाः, तैर्मिश्रितान्सर्षपान्दर्व्या दशाहं यावत् सायंप्रातर्जुहुयात् शण्ड इत्यादिचतुर्भिर्मन्त्रैः।। १।।

**शण्डो मर्कोपवीतस्तौण्डुलेय उलूखलश्चपलो नश्यतामितः स्वाहा।। १ ।।**

इह सूतिकास्थानाच्छण्डादयो नश्यन्तु पलायन्तामिति समुदायार्थः। शण्डादयः पिशाचानां संज्ञाः। एकैको मन्त्रसंबन्धः। शण्ड इतः स्थानान्नश्यतु, एवं मर्कः, उपवीतः, तौण्डुलेयः, उलूखलश्चपलो नश्यतामितः। स्वाहा सुहुतमस्तु।। १ ।।

**आलिखन्नवलिखन्किंवदन्त उलूखलश्चपलो नश्यतामितः स्वाहा।। २ ।।**

**समानं पूर्वेणैतत्।। २ ।।**

**हर्यक्ष्णः कुम्भिः शक्तिर्हन्ता चुपणीमुखश्चपलो नश्यतामितः स्वाहा।। ३ ।। केशिनी श्वलोमिनी कचा कौचापकाशिन्यपेतो नश्यतामितः स्वाहा।। ४ ।।**

हर्यक्ष्ण इत्यादयः संज्ञाः। केशिनी नाम राक्षसी। तथा श्वलोमिनी, कचा, कौचा, अपकाशिनीत्येतान्यपि राक्षसीविशेषनामानि।। ४ ।।

**एवं सायंप्रातर्दशाहं जुहुयात्।। २ ।।**

अनेन प्रकारचतुष्टयेन दशाहं जुहुयात् अशौचकालं यावज्जुहुयादित्यर्थः।। २

**।। इति पञ्चत्रिंशी काण्डिका।। ३५ ।।**



## ।। अथ षट्त्रिंशी काण्डिका।।

अथ नामकरणम् -

**दशम्यां तस्मिन्नेवाग्नौ पयसि स्थालीपाकं श्रपयित्वा सर्वगन्धैः फलोत्तरैः सशिरस्कं स्नापयित्वाहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोति, 'कया नश्चित्र' इति द्वाभ्यां कया तच्छृण्वे प्रजापतये स्वाहा प्रजापते नहि त्वदिति च द्वाभ्याम्।। १।।**

दशम्यां व्यतीतायामशौचशुद्धावेकादशेऽहनि, द्वादशेऽहनि वा तत्र नक्षत्रादि-वैगुण्ये दिनान्तरे नामधेयं दशम्यां द्वादश्यां वापि कारयेत् - 'पुण्येऽहनि मुहूर्ते वा नक्षत्रे वा गुणान्विते।' इति स्मरणात्। औदयिक्या च व्यवस्थया त्रयोदशी तिथिर्गृह्यते, नत्वन्याय्यादुत्थानादन्यायाच्च संवेशनादनद्यतनकाल इत्यादिकया, 'रात्रिशेषे द्वाभ्यां प्रभाते तिसृभिः' इति विभातायामपि रजन्यामुदयात् प्रागशौचानुवृत्तिदर्शनात्। तस्मिन्नेव सूतिकागारस्थे सूतकाग्नौ पयसि स्थालीपाकं श्रपयित्वा सर्वौषधिप्रभृतिभिः सुगन्धिद्रव्यविशेषैरुपरिविनिहितमङ्गलार्थजातीपूगफलविशेषैः सशिरस्कं स्नापयित्वा, पुंलिङ्गनिर्देशात् स्त्रियं वर्जयति, अनुपभुक्तेन वस्त्रेण संच्छाद्य तस्य स्थालीपाकस्य सम्बन्धिभिरवदानैर्व्यत्ययेन स्थालीपाकेन जुहोति, 'कया नश्चित्रे'ति पञ्चाहुतीः।।१।।

**अग्नेरायुरसीति तुल्यया ललाटाभिमर्शनात्।। २।।**

अग्नेरायुरसीत्यादिकमायुषेष्ट्या तुल्यमित्यतिदेशः। अवधिमाह आ ललाटा-भिमर्शनात्। तस्य ललाटमभिमृश्याश्विनोः प्राण इति जपति (१०) इति वक्ष्यति। तदनन्तरमायुषेष्ट्या समानमित्यर्थः।। २।।

**तदेव नाम धीयते।। ३।।**

अत्रानुवाके असावित्यस्य स्थाने तदेव नाम धीयते यत्तु जातकर्मणि कृतं, नान्यत्।। ३।।

**अन्यदित्येके।। ४ ।।**

एके पुनराहुरन्यद्विधीयते। द्वे हि नाम्नी ब्राह्मणस्य कर्तव्ये। तत्र यद्रहस्यं जातकर्मण्युक्तं 'पुत्रे जाते नाम धीयते' (३४.१) इति, तस्य प्रयोजनं परैरभिचारे क्रियमाणेऽनुच्चारणादि, प्रकटं त्वेकादशाहादौ व्यावहारिकम्। तथाच श्रुतिः 'तस्माद्-ब्रह्मणो द्विनामा' इति।। ४ ।।

**प्राक् स्विष्टकृतः कंसे पूतमाज्यमासिच्य हिरण्यं चाबन्धनीयमग्नेरायुरि-त्यवधाय तस्य जुहोतीन्द्रस्य प्राण इति पञ्चभिः।। ५ ।।**

स्विष्टकृतः पूर्वं पूतमाज्यं कांस्यपात्रे आसिच्य प्रक्षिप्य, तत्र च हिरण्यं प्रक्षिप्य अग्नेरायुरसीत्यादिना मन्त्रेण। कीदृशं सुवर्णम्। आबन्धनीयं बालकस्य कण्ठादौ बन्धनार्हम्। तस्याज्यस्य जुहोति इन्द्रस्य प्राण इत्यादिभिः पञ्चभिर्मन्त्रैः।। ५

**प्राक्संस्थितयजुषो ब्रह्मा घृते हिरण्यमवपद्यते सर्वे चर्त्विजो यदसर्प इति।। ६ ।।**

संस्थितयजुर्होमात्पूर्वं ब्रह्मा घृते हिरण्यमवपद्यते अवष्टभ्नाति यत्तद्बाल-गलादिबन्धनार्थं घृते निहितं सर्वे च ऋत्विजस्तदवष्टभ्नन्ति यदसर्प इत्यादिमन्त्रैः।।६

**पावमानेनेत्युद्धृत्य देवा आयुष्मन्त इति यजमानाय प्रयच्छति।। ७।।**

आज्यात्सुवर्णं पावमानेनेत्युद्धृत्य यजमानाय प्रयच्छति देवा आयुष्मन्त इत्यादिमन्त्रैः।।

**तत्पिबति निरवधयेत्।। ८ ।।**

तत् सुवर्णनिःस्रावमाज्यं बालकः पिबति। तच्च निःशेषेणावधयेत् पिबेत्।।

**हिरण्याद्घृतं प्रक्षाल्येममग्र इति हिरण्यमाबध्नाति।। ९ ।।**

हिरण्यलग्नं घृतं प्रक्षाल्य तद्धिरण्यं बध्नाति बालकस्य गलादौ इममग्र इत्या-दिना।। ९ ।।

**तस्य ललाटमभिमृश्याश्विनोः प्राण इति जपति।। १० ।।**

ललाटतटं हस्तेन स्पृष्ट्वा जपति अश्विनोः प्राण इत्यादिकम्।। १० ।।

**अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे। आत्मा वै पुत्रनामासि, जीव शरदः शतं पश्य शरदः शतमिति मूर्धनि निघ्राय स्वस्त्ययनं वाचयति।। ११।।**

अङ्गादङ्गादित्यादिना बालस्य मूर्धनि शिङ्घनं कृत्वा स्वस्त्ययनं वक्ति। क्वचिन्निघ्राप्येति पाठः, तत्र स्वार्थे णिच्। पित्रसन्निधौ वा मातरं प्रयुज्येति केचित्। ऋत्विग्वा पितुः प्रयोजको विवक्षितः।। ११ ।।

**एवमत ऊर्ध्वं विप्रोष्य।। १२ ।।**

अतो नामकरणादूर्ध्वं यदा प्रवासादायाति पिता, तदानेनैव प्रकारेण मूर्धन्य-भिघ्राणं कुर्यात्।। १२।।

**एवं मासि मासि स्थालीपाकस्येष्ट्वा जातकर्मणा वाज्यस्य।। १३ ।।**

एवमेव प्रतिमासं जन्मदिने स्थालीपाकेन जातकर्मविधिवदाज्येनेष्ट्वा निघ्राणं मूर्धनिकुर्यात्।। १३ ।।

**एवं संवत्सरम्।। १४ ।।**

प्रतिमासमिमां कर्तव्यतां संवत्सरं यावत्कुर्यात्।। १४ ।।

**मांसं तु नाश्नीतः।। १५ ।।**

मांसं तु बालकस्य माता पिता च संवत्सरं यावन्नाश्नीयात्।। १५ ।।

**समाप्ते संवत्सरेऽजाविभ्यां वाग्निधान्वन्तरी इष्ट्वा सर्पिष्मदन्नं ब्राह्मणान् भोजयेत्।। १६ ।।**

प्रथमे संवत्सरे समाप्ते अजेनाग्निमविना धन्वन्तरिमिष्ट्वा वाशब्दादाज्येन स्थालीपाकेन वा सर्पिषा प्रचुरेण युक्तमन्येन च पवित्रेण दधिप्रभृतिना अन्नं ब्राह्मणान् भोजयेत्। तैः सुप्रीतैः स्वस्त्ययनाशीः प्रभृतिभिरभिनन्देदेनम्।। १६ ।।

**कया नश्चित्र आभुवदूती सदावृधः सखा। कया शचिष्ठया वृता।। १ ।।**

**कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः। दृढा चिदारुजे वसु।। २ ।।**

प्रतस्यार्षम्। इन्द्रः प्रजापतिर्वा देवता। चित्रश्चित्रचरितः प्रजापतिरिन्द्रो वा नोऽस्मान्कया ऊत्या आभुवदाभावयति जनयति। अवनमूतिः 'सुपां सुलुक्पूर्वसवर्णा...' (७.१.३९) इति तृतीयैकवचनस्य पूर्वसवर्णैकादेशः ऊतीशब्दाल्लुक् च। कीदृशः प्रजापतिः। सखा समानख्यानः अन्तर्यामी। कीदृशानस्मान्। सदावृधः सर्वकालं वृद्धियुक्तान्। कया वृता वर्तनेनाभावयति। कया शचिष्ठया शक्त्यतिशयेन चैतन्या-

तिशयेन वा अतिशयेन शकिता शचिष्ठा 'तुरिष्ठेमेयःसु' (६.४.१५४) इति तृचो लोपः, छान्दसो वर्णव्यत्ययश्चकारः, केन शक्त्यतिशयेन वर्तयेदित्यर्थः। स्रष्टृत्वादि-शक्त्यतिशययुक्तः प्रजापतिर्वृद्धिविषये क्रतावस्माभिरिज्यते, स इष्ट्या प्रीतः सन् बालं वृद्ध्यादिसंयुक्तं संपादयत्विति तात्पर्यार्थः।

हे प्रजापते को यजमानः त्वा मत्सत् मादयति, अन्धसोऽन्धसा हविषा, दृढा दृढानि, वसु वसूनि धनानि, आरुजे आरुजति वितरति दक्षिणादिद्वारेण। कीदृशो यजमानः। सत्यः उत्तमसत्त्वः, तथा मदानां मंहिष्ठः हृष्टान्ममानन्दयोगिनां मध्ये वृद्धतमः परमानन्दयुक्तो ब्रह्मस्व भाव इत्यर्थः। 'बहि-महि-वृद्धौ' इति धातोः प्रकृतित्वं मंहिष्ठशब्दे इष्ठन्नन्ते।

**कया तच्छृण्वे शच्या शचिष्ठो यया कृणोति मुहु काचिदृष्वः। पुरु दाशुषे विचयिष्ठो अंहोऽथा दधाति द्रविणं जरित्रे।।**

अत्रापिप्रजापतिर्देवता। अहं शृण्वे शृणोमि वेदात्। किं तत्। काचिदेवास्य प्रजापतेः शक्तिर्लोकोत्तरास्ति प्रज्ञा वा। का। यया शच्या शक्त्या प्रज्ञया वा स ऋष्वो महत्तमः पुरु अंहः पापं मुहुर्मुहुः पुनःपुनः कृणोति कृन्तति नाशयति। कस्मै। दाशुषे यजमानाय। पापं च नाशयित्वा, अनन्तरं जरित्रे स्तोत्रे दाशुषे पुरु सुबहु द्रविणं धनं दधाति ददाति करोति वा। कीदृशः प्रजापतिः। शचिष्ठः शक्ततमः प्राज्ञतमो वा, विचयिष्ठः विविधशक्तिनिचयवत्तमः। कयेति व्यत्ययेन तृतीया प्रथमास्थाने।

**प्रजापतये स्वाहा।।**

प्रजापतये सुहुतमस्तु। प्रजापते नहि त्वदिति, असा अमुष्येति द्वयं व्याख्यातम्।

**अग्नेरायुरसि तस्य ते मनुष्या आयुष्कृतस्तेनास्मा अमुष्मा आयुर्देहि।**

ब्रह्मण आर्षम्। अनेन हिरण्यं घृतेऽवदधाति। हे सुवर्ण असि त्वमग्नेरायुः, आयातीत्यायुः, अग्नेरागतं त्वमुत्पन्नमित्यर्थः। तथाच श्रुतिः - 'अग्नेर्यद्रेतः सिच्यते तद्धिरण्यमभवत्' इति। तस्यैवंभूतजननस्य ते तव मनुष्या आयुष्कृत इन्धनाध्मा-ननिर्मन्थनजागरणादिना मनुष्या अग्नेरायुः कुर्वन्ति, तद्द्वारेण सुवर्णस्य। तेन मनुष्या-णामुपकारकत्वादस्मै यजमानाय, अमुष्मै च बालकायायुर्देहि कुरु वा।

**इन्द्रस्य प्राणः स ते प्राणं ददातु यस्य प्राणस्तस्मै ते स्वाहा।।**

इन्द्रोऽत्र देवता। इन्द्रस्य प्राणः, इन्द्रः प्राणस्य स्वामी, अतः स इन्द्रस्तुभ्यं प्राणं ददातु। यस्य प्राणस्तस्मै इन्द्राय ते तुभ्यं स्वाहा।

**पितॄणां प्राणस्ते ते प्राणं ददतु येषां प्राणस्तेभ्यो वः स्वाहा।।**

पितृदेवताको यतः पितृस्वामिकः प्राणोऽतस्ते पितरस्ते तुभ्यं प्राणं ददतु। येषां प्राणस्तेभ्यः पितृभ्यो वो युष्माकं सुहुतमस्तु।

**मरुतां प्राणस्ते० विश्वेषां देवानां प्राणस्ते०।**

**प्रजापतेः प्राणः स ते प्राणं ददातु परमेष्ठिनः प्राणः स ते प्राणं ददातु ययोः प्राणस्ताभ्यां वां स्वाहा।।**

प्रजापतिः प्राणस्य स्वामी। स तुभ्यं प्राणं ददातु। परमेष्ठी प्राणस्य प्रभुः। स तुभ्यं प्राणं ददातु। उभयोः प्रजापतिपरमेष्ठिनोर्ययोः प्राणस्ताभ्यां वां युवाभ्यां स्वाहा।

**यदसर्पस्तत्सर्पिरभवो यन्नवमैस्तन्नवनीतमभवो यदध्रियथास्तद्धृतमभवः।।**

घृतं निरुच्यते हे घृत यत् यस्मात्त्वमसर्पः सृप्तं, ततः सर्पिर्भूतमसि। यस्माच्च नवं प्रत्यग्रं सत् ऐः आगतमसि, ततो नवनीतमुच्यसे। यस्मादध्रियथास्तद्धृतं भूतमसि धृ धारणे इत्यस्य वर्णव्यत्यये घृतशब्दः।

**घृतस्य धाराममृतस्य पन्थामिन्द्रेण दत्तं प्रयतं मरुद्भिः।**
**तत्त्वा विष्णुरन्वपश्यत्तत्त्वेळा गव्यैरयत्।।**

विष्णोरार्षम्। धारां पन्थामिति प्रथमायाः स्थाने द्वितीया। येयं घृतस्य धारा, सा अमृतस्य, अमरणधर्मस्य पन्था उपायः। इदं हि घृतमिन्द्रेण यजमानेभ्यो दत्तं वृष्ट्यादिद्वारेण, प्रयतं च मरुद्भिः प्रकर्षेण यतं नियम्य स्थापितं वचनादिद्वारेण। तत् दीयमानं नियम्यमानं च त्वां विष्णुरपश्यत्। तत्त्वामिळा देवताविशेषः गवि ऐरयन्निक्षिप्तवती।

**पावमानेन त्वा स्तोमेन गायत्र्या वर्तन्योपांशोर्वीर्येणोद्धराम्यसौ।।**

पावमानेन स्तोमेन बर्हिष्पवमानादिना, गायत्र्या वर्चा, वर्तन्या सामावयवेन, उपांशोर्ग्रहस्य वीर्येण सामर्थ्येन उद्धरामि त्वाम्। असाविति नाम प्रतीयात्।

**बृहता त्वा रथन्तरेण त्रिष्टुभा वर्तन्या शुक्रस्य वीर्येणोत्सृजाम्यसौ।।**

गतार्थम्।

**अग्रेस्त्वा मात्रया जगत्या वर्तन्या देवस्त्वा सवितोन्नयतु जीवातवे जीवनस्य या असौ।।**

अग्रेरुन्नयामीति विपरिणतस्यानुषङ्गः, न तूद्धरामीत्यस्यानुषङ्गः 'व्यवयान्नानुषज्येत' (पू.मी.२.४९) इति न्यायात्। पावमानेनेत्यादि समुच्चितं मन्त्रत्रयमाहुः सुवर्णोद्धरणे भिन्नाख्याततत्वेन भिन्नमन्त्रत्वात्। अन्ये तु एकमन्त्रतां मन्यन्ते।

**देवा इत्यादयः षट्।।**

**देवा आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेषामयमायुषायुष्मानस्त्वसौ।। १ ।।**

तेषामायुषा देवानामायुषा तत्परिमाणेन जीवनेन अयं यजमानो बालश्चायुष्मानस्तु। असाविति पूर्ववत्।

**ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तस्यायमायुषायुष्मानस्त्वसौ।। २ ।।**

ब्रह्म वेदः। तच्चायुष्मदविनाशि। तद्धि ब्राह्मणैर्ब्रह्मसम्बन्धिभिरध्ययनधारणादिभिरनुच्छित्तिकर्मकम्। तस्यायमित्यादि पूर्ववत्।

**अग्निरायुष्मान्स वनस्पतिभिरायुष्मांस्तस्यायमायुषायुष्मानस्त्वसौ।। ३ ।।**

वनस्पतय इन्धनानि अरण्यं च। समानमन्यत्।

**यज्ञ आयुष्मान्स दक्षिणाभिरायुष्मांस्तस्यायमायुषायुष्मानस्त्वसौ।। ४ ।।**

दक्षिणालोभेन ऋत्विजः अभ्यस्यन्ति यज्ञविद्यां, सम्यगनुतिष्ठन्ति च कर्माणि। तेन दक्षिणया आयुष्मत्त्वं यज्ञस्य।

**सोम आयुष्मान्स ओषधीभिरायुष्मांस्तस्यायमायुषायुष्मानस्त्वसौ।। ५ ।।**

ओषधयो व्रीह्याद्याः, ताभिः। चरुपुरोडाशादिना इष्टमन्नादि चन्द्रमसमाप्याययतीति कृत्वा भवत्योषधीभिरायुष्मान् सोमः।

**ओषधय आयुष्मतीस्ता अद्भिरायुष्मतीस्तासामयमायुषायुष्मानस्त्वसौ।। ६ ।।**

वृष्ट्या वर्धन्ते ध्रियन्ते चौषधयः।

**इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि।**
**मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासत्।।**

हे अग्ने इमं बालकं यजमानं च आयुषे वर्चसे च कृधि कुरु, विद्यासंपत्तिर्वर्चः, यथा एतस्यायुर्वर्चश्च भवति तथा कुर्वित्यर्थः। हे वरुण त्वमपि तिग्ममुत्कटमोजो बलं संशिशाधि सम्यक् संपादय। हे अदिते देवमातस्त्वमस्मै शर्म सुखं यच्छ देहि मातेव जननी यथा। हे विश्वे देवा यूयं यथा जरदष्टिरसत् भवति, तथा कुरुत, जरामश्नोति व्याप्नोति जरदष्टिः जराजर्जरितशरीरमेनं कुरुतेत्यर्थः।

**अश्विनोः प्राणस्तौ ते प्राणं दत्तां तेन जीव।।**
**मित्रावरुणयोः प्राणस्तौ ते प्राणं दत्तां तेन जीव।।**
**बृहस्पतेः प्राणः स ते प्राणं ददातु तेन जीव।।**

अश्विनावत्र देवता। अश्विप्रभृतिभिर्दत्तेन प्राणेन जीवेति गतार्थम्।

**अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे। आत्मा वै पुत्रनामासि जीव शरदः शतं पश्य शरदः शतम्।।**

सर्वाङ्गपरिस्नुतरससारवीर्यसम्भूतत्वादङ्गादङ्गात्सम्यग्भवसि, हृदयसङ्कल्पितमनोरथसंभूतत्वाच्च हृदयादाधिक्येन जायसे। वैशब्दोऽवधारणे। किं बहु ब्रूमहे, आत्मा वै पुत्रनामासि, त्वं मच्छरीरेण संभूतत्वान्मदीयमेव मूर्त्यन्तरमसि पुत्रनामाङ्कितमुपकारितरमित्यर्थः। एवंभूतस्त्वं शरदां शतं प्राणान्धारय पश्य च पट्विन्द्रियो भव वर्षशतम्। एवं हि गर्भाधानादि नामकरणान्तं व्याख्यातम्। अनन्तरं चूडाकर्म सूत्रकारेणोक्तम्। स्मृतिषु हि निष्क्रमणान्नप्राशने नामकरणानन्तरमुक्ते 'तृतीये मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात्।' 'षष्ठे मास्यन्नप्राशनं कर्तव्यम्' इत्यादिना, तेन तेऽपि अवश्यकर्तव्ये। चन्द्रदर्शनं चातो गृह्यान्तरानुसारेणेहापि दर्शयति।। १६ ।।

**।। इति षट्त्रिंशी काण्डिका।। ३६ ।।**



## ।। अथ सप्तत्रिंशी काण्डिका ।।

**तृतीयेऽर्धमासे दर्शनमादित्यस्य पुण्याहे पर्वणि वोदिते त्वादित्ये रथचक्रमात्रं स्थण्डिलमुपलिप्य तस्मिन्यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा, 'तरणिः' 'दिवो रुक्म०' 'उदु त्यं०' 'चित्रं देवानाम्' इत्याज्यस्य जुहोति ।।१।।**

जन्मनः प्रभृति मासद्वये व्यतीते तृतीयस्य मासस्य प्रथमार्धेऽतीते आदित्यस्य दर्शनं बालः कारयितव्यः। तत्रेयमितिकर्तव्यता। पुण्यदिने ज्योतिःशास्त्रशुद्धे, पर्वणि वा सुनक्षत्रादियोगिनि दर्शनं कारयितव्य इत्येकस्यैव पर्वण इतरतिथिसमुदायेन सह विकल्पदर्शनादुत्कर्षातिशयः प्रतीयते। उदिते एवादित्ये रथचक्रपरिमाणं स्थण्डिलमुपलिप्य, गेहाङ्गणे आदित्यरश्म्यलङ्कृते तत्रोपलिप्ते प्रतिष्ठाप्य लौकिकमग्निं यथोक्तमुपसमाधाय उपसमाधानमुद्धतावोक्षणपरिसमूहनपर्युक्षणपरिस्तरणपवित्रकरणाज्यविलयनाज्यवीक्षणाग्र्युपस्थानरूपं कृत्वा, ततो जयप्रभृतिभिर्जयाकारैराघारादाज्यभागान्तैर्हुत्वा, तरणिर्विश्वदर्शत इति, दिवो रुक्म इति, उदु त्यमिति, चित्रं देवानामिति, चतसृभिराज्यस्य जुहोति।। १ ।।

**'मित्रो जनान्' 'प्र स मित्र' इति स्थालीपाकस्य।। २ ।।**

जुहोतीत्यनुषज्यते। 'मित्रो जनानि'ति 'प्र स मित्रे'ति च द्वाभ्यां स्थालीपाकस्य जुहोति।। २।।

**अभ्यावर्तस्वेति कुमारमभ्युदानयति।। ३ ।।**

अभ्यावर्तस्वेत्यादिना मन्त्रेण कुमारमभिमुखं कृत्वा उन्नमय्यानयति पिता गुरुर्वा।। ३।।

**द्रष्ट्रे नम इत्युपस्थानमादित्यस्यादृश्रन्नस्येति च।। ४ ।।**

द्रष्ट्रे नम उपद्रष्ट्रे नम इत्यादिना बालस्य पिता आदित्योपस्थां करोति बालं सम्मुखं कृत्वोत्सङ्गे।। ४।।

**सर्पिष्मदन्नं ब्राह्मणान्भोजयेत्।। ५ ।।**

बहुघृतदध्यादियुक्तं हविष्मदन्नं ब्राह्मणान्भोजयेत्।

**तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य।**
**विश्वमाभासि रोचनम्।।**

प्रजापतेरार्षमुत्तरत्रापि। गायत्री। सूर्यो देवता। हे सूर्य असि त्वं तरणिस्तारयति संसारसागरादिति तरणिः, तथा दर्शतो द्रष्टुर्विश्वस्य सर्वस्य ज्योतिष्कृत् प्रकाशकारी अन्धतमसस्यापसारकः, विश्वमाभासि रोचनं यत्किंचिद्रोचनं प्रकाशमानं तद्विश्वं समस्तं त्वमेवाभासि प्रजापतिरूपः।

**दिवो रुक्म उरुचक्षा उदेति दूरे अर्थस्तरणिर्भ्राजमानः।**
**नूनं जनाः सूर्येण प्रसूता अयन्नर्थानि कृणवन्नपांसि।।**

अयमादित्यो दूरे उदेति दूरं गच्छति चेष्टते। कुतः। दिवः अन्तरिक्षात्। रुक्मः, 'रुच-दीप्तौ' दीप्तः, सुवर्णवर्णो वा। उरुचक्षा बृहद्दर्शनः। अर्थः अर्यते प्राप्यते अर्थ्यते वा मोक्षार्थिभिरित्यर्थो ब्रह्मा। तरणिर्व्याख्यातः। भ्राजमानो दीप्यमानः। जायन्त इति जनास्त्रयो लोका नूनं निश्चितं कृत्वा सूर्येण प्रसूता जनिता जगतां प्रजापतिविवर्तत्वात् ब्रह्मपरिणामत्वाद्वा सूर्यस्य च ब्रह्मात्मकत्वात्। अयं हि सूर्यः अपांस्यन्नानि आविष्कुर्वन् वृष्टिद्वारेण अर्थांश्च यागदानादीन् वेगेनार्यमाणानयन्प्रवर्तयन् दिवसकरणद्वारेण दृश्यते। 'उदु त्यं' 'चित्रं देवानां' 'मित्रो जनानि'ति व्याख्याताः।

**प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षते व्रतेन। न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात्।।**

हे मित्र आदित्य यो मर्तो मर्त्यस्तव व्रतेन व्रतं कर्म शिक्षते, स प्रयस्वान् अन्नवान् प्रास्तु प्रकर्षेण भवतु। यः त्वोतः त्वया रक्षितः, स न केनचिद्धन्यते, न जीयते पराभूयते। नाप्येनमंहः पापमश्नोति व्याप्नोति अन्तितः अन्तिकात्, नापि दूरात्।

**अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह।**
**वपां ते अग्निरिषितो अरोहत्।।**

हे पृथिवि यज्ञेन पयसा च सह अभ्यावर्तस्व मम साम्मुख्येन आगच्छ, प्रसन्ना भूत्वा मां पयस्वन्तं याज्ञिकं च सम्पादय। अग्निरिषितः प्रेषितः सन् ते तव वपां सारं वेदिमरोहत् आरोहतु।

**द्रष्ट्रे नम उपद्रष्ट्रे नमोऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे नमोऽनुख्यात्रे नमः शृण्वते नम उपशृण्वते नमः सते नमोऽसते नमो जाताय नमो जनिष्यमाणाय नमो भूताय नमो भविष्यते नमश्चक्षुषे नमः श्रोत्राय नमो मनसे नमो वाचे नमो ब्रह्मणे नमः श्रान्ताय नमस्तपसे नमः।।**

घोराणामार्षम्। आदित्यः स्तूयते परब्रह्मरूपत्वात्सर्वमयत्वेन। द्रष्टा जीवात्मा, उपद्रष्टा अन्तर्यामी। तस्मै उभयात्मने नमः। वेदादिप्रमाणेन दृष्टं धर्मादिकमनु पश्चाद्योगाभ्यासेन स्फुटं पश्यतीत्यनुद्रष्टा योग्यात्मा, तस्मै नमः। ख्यातीति ख्याता प्रकाशमानः सर्वो लोको धर्मिरूपः, उपख्याता धर्मो रूपादिः, अनुख्याता धर्माधर्मरूपादिगतः। शिष्टं स्पष्टम्।

**अदृश्रन्नस्य केतवो विरश्मयो जनाँ अनु। भ्राजन्तो अग्नयो यथा।।**

अस्य आदित्यस्य केतवः अश्वा रश्मयो वा अदृश्रन् दृश्यन्ते जनाननु जायमानाँल्लक्षणीकृत्य। विरश्मयो विगतरज्जवो बन्धनशून्या इत्यर्थः। भ्राजन्तो देदीप्यमाना अग्निप्रख्याः।

**।। इति चारायणीयसमन्त्रगृह्यभाष्ये आदित्यदर्शनम्।।**

**।। इति सप्तत्रिंशी कौण्डिका।। ३७ ।।**



## ।। अथ अष्टात्रिंशी काण्डिका।।

**एवं चन्द्रदर्शनम्।। १ ।।**

एवंशब्देन रथचक्रपरिमाणस्थण्डिलोपलेपनान्तस्यातिदेशः।। १ ।।

विशेषमाह -

**'मक्षूधाता मातरिश्वा', 'भूयो जात' इति च द्वाभ्यामाज्येन चतुर्गृहीतेनाज्यभागान्ते जुहोति।। २ ।।**

**आप्यायस्वेति सं ते पयांसीति च द्वाभ्यां स्थालीपाकस्य।। ३ ।।**

**नवो नव इत्युपस्थानं चन्द्रमसः प्रकाशो दक्षिणा।। ४ ।।**

नवो नव इत्यनेन मन्त्रेण चन्द्रमसः उपस्थानं कर्तव्यम्। प्रकाश आदर्शो दक्षिणा दातव्या।

**मक्षूधाता मातरिश्वा वचोभिश्चन्द्रो अमृताद्वर्धते जायमानः।**
**आयुः प्रजाममृतं सौभगत्वं प्र चन्द्रमास्तिरते दीर्घमायुः।।**

चन्द्रमा दीर्घमायुः प्रतिरते प्रतिरतु ददातु, तथा प्रजां पुत्रादिकाममृतममरणधर्मकत्वं सौभगत्वं सौभाग्यं लोकप्रियत्वम्। द्विरायुर्ग्रहणमतिशयार्थम्। स हि प्रतिपदादावमृतात् परब्रह्मणो जायमानो वर्धते प्रतिदिनम्। औणादिकोऽसिःप्रत्ययः। पूजितस्य चतुर्थपुरुषार्थस्य धाता विधाता भवति।

**भूयो जातो हविषश्चन्द्रमा अस्मात्पूर्णः पुरस्तात्पयसो हविर्भिः। पयो गर्भो देवता पिन्वमानश्चन्द्रोऽमृतत्वमभयं कृणोतु।।**

पयोभिश्च भूयः पुनःपुनर्बहुकृत्वो वा पयः क्षीरं, गर्भः, गर्भान् देवता यज्ञोद्देश्याः पिन्वमान ओषध्याद्याप्यायनमुखेन पोषयंश्चन्द्रो दुःखभयरहितममृतत्वं मे करोतु।

**आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य सङ्गथे।।**

हे सोम आप्यायस्व वर्धयास्मान्। वृष्ण्यं सेक्तृत्वमाप्यायकत्वं ते तव

विश्वतः सर्वतः समेतु समागच्छतु। किंच वाजस्यान्नस्य सङ्गथे सम्बन्धनिमित्तं भव।।

**सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः।**
**आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि दिष्व।।**

हे सोम ते तव पयांसि संयन्तु त्वया संगच्छन्ताम्। वाजा वाजानि अन्नानि च संगच्छन्ताम्। वृष्ण्यानि च आप्यायकत्वानि त्वया संगच्छन्ताम्। कीदृशस्य तव। अभिमातिषाहः सङ्ग्रामाणां प्रसोढुरभिभवितुः। हे सोम अस्माभिराप्यायमानो हविषा अमृतत्वाय भव स्वर्गायेत्यर्थः। श्रवांसि चान्नान्युत्तमानि देहि यज्ञोपयोगीनि।

**नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम्।**
**भागं देवेभ्यो विदधात्यायन्प्र चन्द्रमास्तिरते दीर्घमायुः।।**

अयं चन्द्रमाः प्रतिपदादौ वर्धमानो नवो नवो भवति। अह्नां दिनानामुषसां च रजन्यन्तानामग्रमेत्यागच्छति केतुश्चिह्नभूतः प्रतिपदादिकालस्य सूचकत्वात्। किंच भागं देवेभ्यो ददात्यमृतमयत्वादमृतस्य च दीर्घमायुः प्रतिरते। इति चन्द्रदर्शनम्।

**।। इति अष्टात्रिंशी काण्डिका।। ३८ ।।**



## ।। अथ एकोनचत्वारिंशी काण्डिका।।

**षष्ठे मास्यन्नप्राशनम्।। १ ।।**

प्रसवादारभ्य षष्ठे मासे बालकस्यान्नप्राशनं कर्तव्यम्।। १ ।।

**सर्वाण्यन्नानि संयूय, 'आयुर्दा देव' 'घृतप्रतीक' इति हुत्वा 'अन्नपते अन्नस्येति' कुमारमन्नं प्राशयेत्।। २ ।।**

सर्वाणि हविष्यान्नानि मिश्रीकृत्य, आयुर्दा देव इति, घृतप्रतीक इति च द्वाभ्यां हुत्वा अन्नपते अन्नस्येति मन्त्रेण कुमारमन्नं प्राशयेत्।।

**आयुर्दा देव जरसं वृणानो घृतं वसानो घृतपृष्ठो अग्ने।**
**घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसं नयेमम्।।**

हे अग्ने गव्यं गोप्रभवममृतममृतत्वकारि, चारु उत्कृष्टं, घृतं पिबन् इमं बालं जरसं नय वृद्धत्वं प्रापय। क इव कम्। पितेव पुत्रम्। हे देव द्योतमान आयुर्दा आयुषो दाता त्वं, अतो जरसं जरां वृणानो वर्धयन् घृतं च वसान आच्छादयन् वितरन् घृतपृष्ठः सन् हूयमानेनोपरिवर्तिना घृतेन युक्तः सन् जरसं नयेमम्।

**घृतप्रतीको घृतपृष्ठो अग्निर्घृताहवनो घृतमस्य धाम।**
**घृतप्रुषो हरितस्त्वा वहन्तु घृतं पिबन्यजताद्देव देवान्।।**

त्रिष्टुप। आग्नेयी। घृतं प्रतिकायति आह्वयति यः, स घृतपृष्ठो व्याख्यातः। घृतस्य आ समन्तात् हवनं होमो यत्र, स घृताहवनः। तथा घृतमस्याग्नेर्धाम गृहम्। यतस्त्वमेवंभूतोऽग्निरतो हे भगवन् देव अग्ने घृतप्रुषो घृतकणाः हरितोऽश्वा इव त्वां वहन्तु प्राप्नुवन्तु आप्यायन्त्वित्यर्थः। त्वं च घृतं पिबन् हे देव देवान् यज पूजय प्रीणीहि। अग्निद्वारेण हि देवानां तृप्तिर्भवति।

**अन्नपते अन्नस्य नो देह्यनमीवस्य शुष्मिणः।**
**प्र प्रदातारं तारिष ऊर्जं नो देहि द्विपदे चतुष्पदे।।**

हे अन्नपते सोमराज 'सोमो वा ओषधीनां राजा' इति श्रुतेः अन्नस्य नो देहि

अन्नमस्मभ्यं प्रयच्छ, अनमीवस्य शुष्मिणः, अमीवो रोगस्तद्रहितं, शुष्मं सुखं सुखकारि। प्रदातारं प्रतारिषः प्रकर्षेण तारय संसारसागरक्लेशमपसारयास्य। ऊर्जमन्नं बलं च नोऽस्माकं देहि द्विपदे चतुष्पदे च गवाऽश्वादिके।

**।। इत्यन्नप्राशनम्।।**

**।। इत्येकोनचत्वारिंशी काण्डिका।। ३९ ।।**



## ।। अथ चत्वारिंशी काण्डिका।।

**तृतीयस्य वर्षस्य भूयिष्ठे गते चूडाः कारयते।। १ ।।**

जन्मनः प्रभृति यस्तृतीयो वर्षस्तस्य भूयिष्ठे भागे गते सति चूडाकर्म कर्तव्यम्। अर्धमवधिं कृत्वा सप्तमो मासो भूयान्, अष्टमस्तु भूयिष्ठस्तस्मिन् गते नवमे मासि कर्तव्यम्। विदुषापि न स्वयं पित्रा कर्तव्यमिति णिचोक्तम्।। १ ।।

**दक्षिणतः कपूजा वसिष्ठानाम्।। २ ।।**

कपूजा चूडा। सा वसिष्ठगोत्रसंभूतानां दक्षिणे शिरसो भागे कर्तव्या। दक्षिणे दक्षिणत आद्यादिभ्यस्तसिः।। २ ।।

**उभयतोऽत्रिकश्यपानाम्।। ३ ।।**

उभयोः शिरसो दक्षिणोत्तरभागयोरत्रिगोत्रे कश्यपगोत्रे च जातानां शिखा कर्तव्या।। ३।।

**मुण्डा भृगवः।। ४ ।।**

भृगुगोत्रजा मुण्डा निःशिखाः कर्तव्याः।। ४ ।।

**पञ्चचूडा अङ्गिरसः।। ५ ।।**

आङ्गिरसगोत्रे ये जातास्ते पञ्चचूडाः कर्तव्याः।। ५ ।।

**वाजिमेके।। ६ ।।**

एके वाजिमिच्छन्ति आङ्गिरसानाम्। वाजिः केशपङ्क्तिः।। ६ ।।

**मङ्गलार्थं शिखिनोऽन्ये।। ७ ।।**

ये कथितेभ्योऽन्येऽगस्त्यविश्वामित्रादिगोत्रजास्ते शिखिनो भवन्ति। किमर्थम्। मङ्गलार्थम्। निःशिखत्वं त्वमङ्गलधर्मः अरिष्टहेतुः। तथाच पठन्ति - 'अमेध्यमेतच्छिरो यदशिखम्।' इति। 'यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव।' इति च निन्दावादो यन्मूलं शिखाकर्मस्मरणम्।। ७ ।।

**यथाकुलधर्मं वा।। ८ ।।**

कुलधर्मानतिक्रमेण वा एकशिखत्वादि कर्तव्यं कुलाचाराणामपि धर्मत्वेन स्मरणात् -

'येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यति।।' (मनु. ४.१७८)

**शुद्धपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वायमगात्सविता क्षुरेणोष्णेन वाय उदकेन एहि। आदित्या रुद्रा वसवः सचेतसः सोमस्य राज्ञो वपत प्रचेतस इत्युष्णा अपोऽभिमन्त्रयते।। ९ ।।**

पुण्याह इत्यादि हुत्वेत्यन्तं व्याख्यातम्। आयमगादित्यादिना उष्णा अपोऽभिमन्त्रयते मन्त्रेण। जगती च्छन्दः। विश्वेदेवा देवता। ब्रह्मण आर्षमुपनयनसमाप्तिं यावत्। सविता क्षुरेणोष्णेन चोदकेन सहागात् आगतः। अतो हे वायो त्वमप्याभ्यां सह एहि आगच्छ। हे आदित्याः रुद्राः वसवः सचेतस एकचित्ताः सन्तो यूयमप्यस्य सोमस्येव राज्ञो माणवकस्य वपत मुण्डयतैनमित्यर्थः। 'सोमो वा ओषधीनां राजा' इति श्रुतेः राजानमिवैनं गौरवभाजनं मन्यमाना मुण्डयतेति यावत्।। ९ ।।

**'उष्णाश्च शीताश्च समेत्य सर्वा बृहस्पतिः सविता सत्यधर्मा। तदनुमन्यताम्।।' आर्द्रदानवः स्थ जीवदानवः स्थोन्दतीरिहैनमवताप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस इत्यभ्युन्देत।। १० ।।**

उष्णाश्चेत्यादिना वर्चसे इत्यन्तेनाभ्युन्देत्। 'उन्दी-क्लेदने' माणवकस्य शिरः अभिमन्त्रिताभिरद्भिः प्रक्षालयेदित्यर्थः।।

हे आपः इहैव स्थाने एनं माणवकमवत रक्षत उष्णाश्च शीताश्च सर्वाः समेत्य संभूय। तच्चावनं बृहस्पतिः सविता चानुमन्यतामभ्युपगच्छतु। कीदृशः। सत्यधर्मा सत्यमेव ह्यस्य धर्मः, सत्यसंकल्पो ह्यत एवायम्। हे आपः आर्द्रदानवः आर्द्रभावस्य दात्र्यः स्थ भवथ। ददाति इति दानुः, औणादिको दानुशब्दः। एवं जीवदानवो जीवदात्र्यः स्थ भवथ। उन्दतीः क्लेदयन्त्यः। आप उन्दन्तु जीवसे जीवनाय दीर्घायुत्वाय च आयुषे त्वपत्योरिति सलोपः। वर्चसे ब्रह्मवर्चसाय रूपविशेषाय।। १० ।।

**दक्षिणे केशान्त ओषधे त्रायस्वेति दर्भमन्तर्धाय स्वधित इति क्षुरेणाभिनिधाय, येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्। तेन ब्रह्मणो वपतेदमद्यायुष्माञ्जरदष्टिर्यथासदयमसौ।। येन धाता बृहस्पतेरग्रेरिन्द्रस्य चायुषेऽवपत्। तेनास्यायुषे वप सौश्लोक्याय स्वस्तये।। येन पूषा प्रजापतेरग्नेः सूर्यस्य चायुषेऽवपत्। तेनास्यायुषे वप सौश्लोक्याय स्वस्तये।। येन भूयश्च रात्री ज्योक्पश्या च सूर्यम्। तेनास्यायुषे वप सौश्लोक्याय स्वस्तय इति प्रदक्षिणं प्रतिदिशं प्रतिमन्त्रं दर्भक्षुरकर्म।। ११।।**

शिरसो दक्षिणे भागे ओषधे त्रायस्वैनमिति मन्त्रेण दर्भमन्तर्धाय स्वधिते मैनं हिंसीरित्यनेन क्षुरेणाभिनिधायावष्टभ्य सदर्भान् केशान् येनावपदित्यादिभिश्चतसृभिरनुष्टुब्भिः दक्षिणभागादारभ्य प्रदक्षिणं यथा भवति, तथा प्रतिदिशं प्रतिमन्त्रं दर्भक्षुरकर्म कर्तव्यमृत्विजा आद्यया दक्षिणे भागे, द्वितीयया पश्चिमे भागे, तृतीययोत्तरस्मिन्, चतुर्थ्या त्वग्रे।

हे ओषधे एनं माणवकं त्रायस्व गोपाय। हे स्वधिते क्षुर एनं माणवकं मा हिंसीः। येनावपद्येन क्षुरेण सविता सोमस्य राज्ञो वरुणस्यावपदुप्तवान् शिरः, तेन हे ब्रह्मण अद्यास्मिन्नहनि वपत मुण्डयत इदं बालकस्यास्य शिरः। कीदृशः सविता। विद्वान् जानन्। तथा वपत यथायं बाल आयुष्मान् दीर्घायुर्जरामश्नुते व्याप्नोति जरदष्टिश्चासौ भवति। असाविति नामविशेषो लक्ष्यते। येन धाता, येन क्षुरेण प्रजापतिर्बृहस्पतेरग्नेरिन्द्रस्य च शिर उप्तवान् दीर्घायुत्वाय, तेनैवास्य क्षुरेण बालस्य शिरो वप दीर्घायुत्वाय च सुश्लोकत्वाय कीर्तये तथा स्वस्तयेऽविनाशाय। येन पूषेति अनन्तरव्याख्यया गतार्थः। येन भूयश्च रात्री ज्योक्पश्या च सूर्यं, येन क्षुरेण रात्रिः सूर्यमवपत् भूयः पुनःपुनः। ज्योक् चिरकालं, पश्यतीति पश्या ज्योक्पश्या बहुदर्शना रात्रिः। तेनेत्यादि समानम्।। ११ ।।

**यत्क्षुरेण वर्तयता सुपेशसा वप्तर्वपसि केशान्। शुन्धि शिरो मास्यायुः प्रमोषीरिति लोहायसं क्षुरं केशवापाय प्रयच्छति।। १२ ।।**

यत्क्षुरेणेत्यादियजुषा नापिताय क्षुरं ददाति लोहायसमिति शस्त्रान्तरजातिविशेषस्य संज्ञा नापितप्रसिद्धा। अन्ये तु क्षुरग्रहणेनैव लोहत्वस्य सिद्धत्वात् स्तुत्यर्थं

लोहग्रहणमित्याहुः। यत्क्षुरेण येन क्षुरेण अतितैक्ष्ण्यादिगुणभाजा प्रशस्ततमेनेत्यर्थः यदिति लुप्ततृतीयैकवचनान्तम्, हे वप्तः मुण्डयितः नापित येन क्षुरेण केशान्वपसि सुपेशसा सुरूपेण, तेन वर्तयता परिवर्तमानेन अस्य आयुर्मा प्रमोषीः मैनं वधीरि-त्यर्थः, किं तर्हि, शुन्धि शिरोऽस्य, शोधय शिरोऽस्य।। १२ ।।

**मा ते केशाननुगात्तेज एतत्तथा धाता ददातु ते। तुभ्यमिन्द्रो बृहस्पतिः सविता वर्च्च आदधुरिति प्रपततोऽनुमन्त्रयते।। १३ ।।**

अनया पुरस्ताद्बृहत्या केशान् पततोऽनुमन्त्रयते। तव एतत्प्रसिद्धं रूपादिकं तेजः केशाननु केशानां पश्चात् मा गात्। तथा धाता प्रजापतिस्ते तुभ्यं तेजो ददातु। तथा तुभ्यमिन्द्रो बृहस्पतिः सविता वर्चो रूपविशेषादिकम् आदधुः ददतु।। १३।।

**सुहृत्परिग्राह्यानुप्यमानान्हरितगोमये समवचिनोति।। १४ ।।**

सुहृदैव पतन्तः केशा ग्राह्या इति नियमः। तानुप्यमानान् मुण्ड्यमानांन् पततः हरितगोमये समवचिनोति सम्यगवचिनोति प्रतीच्छति हरितगोमये संमिश्रीकृत्य पिण्डीकरोतीति क्वचिदाचारः।। १४ ।।

**उप्त्वाय राज्ञो वरुणस्य केशान्सोमो धाता सविता विष्णुरग्निः। तेभ्यो निधानं बहुधान्वविन्दन्नन्तरा द्यावापृथिवी अवस्युरिति प्रागुदीचीं ह्रियमाणा-ननुमन्त्रयते।। १५ ।।**

अनया वैश्वदेव्या त्रिष्टुभा मित्रेण प्रागुदीचीं दिशं नीयमानान् केशाननुमन्त्रयते कर्ता। उप्त्वाय उप्त्वा मुण्डयित्वा वरुणस्य राज्ञः सम्बन्धिनः केशांस्तेभ्यस्तदर्थं यन्निधानं स्थानं, तद्बहुधा अन्वविन्दन् ज्ञातवन्तः। कुत्र। द्यावापृथिव्योरन्तराले मध्ये। के ते। सोमश्चन्द्रो, धाता प्रजापतिः, सविता आदित्यः, विष्णुरग्निः। अवस्युरिति प्रत्येकमभिसम्बध्यते। अवनमवः रक्षणम्। अवनमिच्छति, 'सुप आत्मनः क्यच्' 'क्याच्छन्दसि' इति उप्रत्ययः अवनकाम इत्यर्थः।। १५।।

**अरिक्ते पर्याश्लेषयत इति श्रुतिः।। १६ ।।**

अरिक्ते दूर्वालतावनस्पतिप्रभृतौ शीतप्रदेशे समाश्लेषयते केशान्मित्रमिति श्रुत्या प्रतिपादितं श्रुतिमूलमेतत्कर्मेति प्रदर्शितं 'यत्र बाणा निष्पतन्ति कुमारा विशिखा इव।' इत्यादिना।। १६ ।।

**कर्त्रे वरं ददाति।। १७ ।।**

ऋत्विजे वरं दक्षिणां यथाशक्ति ददाति यजमानः। चतुर्वर्षा गौर्दक्षिणात्रेत्याहुः।।

**पक्ष्मगुणं तिलपेशलं केशवापाय प्रयच्छति।। १८ ।।**

सूक्ष्मैरूर्णागुणैर्वेष्टितं तिलपात्रं नापिताय ददाति।। १८ ।।

**सर्पिष्मदन्नं ब्राह्मणान्भोजयेत्।। १९ ।।**

गतार्थम्। चूडाकरणेऽङ्गनिर्दिशात्प्रधानानभिधानात्प्रधानमाज्येनाग्नेय्या वैश्वदेव्या वा कर्तव्यमित्याहुः। यद्वोपसमाधायेत्यनेनाज्यभागान्तरमुक्तं तदेव प्रधानम्। येषां त्वग्निसंस्कारमात्रमुपसमाधानं, तेषां पूर्वं प्रधानम्।। १९।।

**।। इति चूडाकरणविवृतिः समाप्ता।।**

**।। समाप्ता च चत्वारिंशी काण्डिका।। ४० ।।**



## ।। एकचत्वारिंशी कण्डिका ।।

**सप्तमे वर्षे ब्राह्मणस्योपायनम्।। १।।**

जन्मनः प्रभृति सप्तमे वर्षे गर्भादष्टमे ब्राह्मणस्योपायनमाचार्यसमीपगमनमेखला-बन्धनसंस्कारः प्रधानभूतः। तस्मिन्हि सति श्रुतिस्मृत्यधिकारो भवति। अत एव द्वितीयं जन्म स्मर्यते -

'प्रथमं मातृतो जन्म द्वितीयं मौञ्जिबन्धनात्।

अत्र माता च सावित्री पिता त्वाचार्च उच्यते।।' (मनु.२.१७०)

इति।। १।।

**नवमे राजन्यस्य।। २।।**

अवेष्ट्यधिकरणनयेन राजा क्षत्रियस्तस्यापत्यं राजन्यः क्षत्रियदारकः। तस्य जन्मनः प्रभृति नवमे गर्भाद्दशमे उपनयनम्।। २।।

**एकादशे वैश्यस्य।। ३।।**

समानं पूर्वेण।। ३।।

**आषोडशाद्‌ब्राह्मणस्यानतिक्रम आद्वाविंशाद्राजन्यस्याऽऽचतुर्विंशाद्वैश्यस्य।। ४।।**

सर्वत्राभिविधावाङ्। ब्राह्मणस्य षोडशवर्षान्तं यावदुपनयनकालानतिक्रमः, एवं द्वाविंशान्तं यावत् क्षत्रियस्य, आचतुर्विंशाद्वैश्यस्य।। ४।।

**स्नातोप्तकेशे यथोक्तमुपसमाधाय, जयप्रभृतिभिर्हुत्वा, रेवतीस्त्वा व्यक्ष्णन्कृत्तिकाश्चक्रतुस्त्वापसस्त्वा व्यतन्वत। धियोऽवयन्नवग्ना अमृजन्सहस्त्रमन्ताँ अभितोदयच्छन्नशीतिर्मध्यमवयन्नु नारीरित्यहतं वासोऽभिमन्त्रयते।। ५।।**

स्नातश्चासावुप्तकेशो मुण्डितशिरास्तस्मिन् माणवके उपस्थिते सति, यथाविधि उपसमाधानमग्निसंस्कारमुद्धतसिक्तोपलिप्ते भूविशेषे स्थापनं परिसंवहनं पर्युक्षणं परिस्तरणं च कृत्वाऽऽज्यं चोपनिधाय, विलाप्य, संवीक्ष्य, दण्डमेखलादिकं यथोपयोग-

मानीयोपनेता जयप्रभृतिभिर्ऋतुनक्षत्राद्यन्तैर्हुत्वा, रेवतीस्त्वेत्यादिकया शक्वर्या अहतमभुक्तं नवं वासो हस्ते निधायाभिमन्त्रयते। किल वाससोऽयमुत्पत्तिक्रमः - आदौ तावद्रेवतीभिः कर्पासो लोष्ठनिकाभिरभिहन्यते विधूयते च, ततः कृत्यते वेष्ट्यते सूत्रतामापाद्यते इत्यर्थः, ततस्तन्तुवायेन आतानायते, ततः कूर्चेन परामृज्यते। ततो वस्त्रं वयति तन्तुवायः, सम्पन्ने च वस्त्रे पल्लवद्वये दशाः संयोजयति। एवंक्रमोऽत्र मन्त्रे कर्पासादीनां हननादौ देवताविशेषाणां कर्तृतारोपणेन स्तूयते। हे वस्त्र त्वां रेवतीः देवताः व्यक्ष्णन्विशेषेणाक्षिण्वन् कर्पासावस्थायां लोष्ठनिकादिभिर्हतवत्यः। कृत्तिकाः 'कृती-वेष्टने', कर्तर्यो वेष्टिकाश्चक्रतुः चक्रुः सूत्रं कृतवत्यस्तद्द्वारेण सम्पादितवत्यः। अपसोऽपापा मरुतस्त्वां व्यतन्वत विशेषाणातन्वत आतानरूपतां कृतवन्त इत्यर्थः। धियोऽवयन् बुद्धिविशेषेण हि वस्त्रविशेषस्य वानं सम्पद्यते। अव ग्नाः अमृजन् 'व्यवहिताश्च' (१.४.८२) इत्यवशब्दो मृजिना सम्बध्यते। ग्नाः देवताः अवामृजन् 'मृजू-शुद्धौ' कूर्चेन आततस्य सूत्रस्य मार्जनं कृतवत्य इत्यर्थः। सहस्रमन्तानभितोदयच्छन्, अभित उभयतः पल्लवद्वये उदिति निपातस्तथा शब्दस्यार्थे, सहस्रशब्दो बाहुल्यार्थः, सहस्रमन्तानां दशानामयच्छन् बबन्धुः। काः। ग्ना इति योजनीयम्। अशीतिर्मध्यमवयन्नु नारीः, नुशब्दः क्षिप्रवचनः, मध्यं वस्त्रस्याशीतिर्नार्यो नागदेवता अवयन् उतवत्यः।। ५।।

**देवीर्देवाय सविता सवित्रे परिधत्त, वर्चसा नयेमं शतायुषं कृणुहि जीवसे कमिति परिधापयति।। ६।।**

अनेन यजुषा वासः परिधापयति। हे देव्यो रेवत्याद्या इदं वासः परिधत्त परिधापयत। कस्मै। देवाय द्योतमानाय माणवकाय। त्वमपि हे माणवक परिधत्त परिधत्स्व। सविता व्यत्ययेन हे सवितः इदं वासः परिधापय। सवित्रे देवतार्थाभिज्ञानस्य जनयित्रे माणवकाय। त्वमपि हे माणवक परिधत्त परिधत्स्व सविता भूत्वा। हे वासः नय प्रापय इमं माणवकं कं ब्रह्माणं ब्राह्मणत्वं प्रापय। वेदसमृद्धियुक्तं कुर्वित्यर्थः, शतायुषं कृणुहि कुरु।।

एष मन्त्रस्त्रयाणां वर्णानां परिधापने साधारणोऽधोवाससः। उत्तरीयं वक्ष्यतेऽजिनम्। जरां गच्छेत्यादिभिः परिहितवाससमनुमन्त्रयते इत्यादित्यदर्शनः। न त्वेव-

माचार आचार्याणाम्, नापि मन्त्रलिङ्गमेवमिति योजनाऽन्यथा कार्या। एकैकस्यासाधारण इत्येकैकस्य वाससः परिधापने मन्त्रत्रयम्। तत्र देवीर्देवायेत्येको वर्णत्रयसाधारणः, जरां गच्छेति द्वितीयः साधारणः परिधापने, परीममित्यादीनां त्रयाणामेकैको यथाक्रममेकैकस्यासाधारण इत्येकैकस्य त्रयः परिधापने मन्त्राः।। ६।।

**जरां गच्छ परिधत्स्व वासोऽभूरापीवानभिशस्तिपावा। शतं जीव शरदः पुरूची रायश्च पोषमुपसंव्ययस्व।। ७।।**

मन्त्रलिङ्गादयमपि परिधापने। उपनेता ब्रवीति - हे माणवक वासः परिधत्स्व। आशिषमाह - जरां गच्छ जराजर्जरिततनुर्भव। आपीवाभूः 'स्फायी-ओप्यायी-वृद्धौ' आङ्पूर्वः 'आतो मनिन्क्वनिब्वनिपश्च' (३.२.७४) इति क्वनिप्। प्रवृद्धो भवेत्यर्थः। अनभिशस्तिपावा अभूरित्यनुषज्यते, अभिशसोऽभिशस्तिः पापयोगस्तत्प्रतिषेधोऽनभिशस्तिः पापाभावः प्रसज्यप्रतिषेधं कृत्वा, पर्युदासेन च धर्मसम्बन्धः, अनभिशस्तिं पातीति अनभिशस्तिपावा। शतं जीव शरदः, शतं शरदां च त्वं प्राणान् धारय। पुरूचीरिति शरदो विशेषणं पुरुशब्दो भूरिवचनः बहून् पुरुषानञ्चन्ति साधयन्ति इति पुरूच्यः, पुरूचीनां रायो धनस्य च पोषं पुष्टिं परिधत्स्व समन्ताद्धारय।। ७।।

**परीमं सोमं तेजसे महे श्रोत्राय दध्मसि। यथैनं जरसं नयज्ज्योक् श्रोत्राय जागरज्ज्योक् श्रोत्रेऽधिजागरदिति ब्राह्मणस्य।। ८।।**

एष ब्राह्मणस्य परिधापने मन्त्रः सोमपदाल्लिङ्गादितरयोः सोमसम्बन्धाभावात् - 'यदि राजन्यं वैश्यं वा याजयेन्न्यग्रोधततीराहृत्य, ताः सम्पिष्य, दध्नयुत्सृज्य, तदस्मै भक्षं प्रयच्छेन्न सोमम्' इति श्रुतेः।

हे माणवक एतद्वासः परिदध्मसि, 'इदन्तोमसि' (७.१.४६) इतीदन्तः। परिदध्मः परिधापयामः, सोममेव चेमं परिधापयामः, त्वया अनेनोपनयनद्वारेण सोम एव हि परिहितो धृतो वेदस्तदर्थाभ्यासद्वारेण भविष्यति। किमर्थं परिधापयामः। तेजसे महे, महते, पूजार्थं वा, 'मह-पूजायाम्' इत्यस्य रूपम्। श्रोत्राय-श्रूयते इति श्रोत्रं वेदः, तदर्थं वेदवेदार्थाधिगमाय, अथवा श्रोत्राय श्रोत्रयुक्ताय शिष्याय वेदपारङ्गमस्त्वमुपाध्यायः श्रोत्रियेभ्यो हितः सम्पद्यस्वेति तात्पर्यम्। यथैनं वासो विशेषं जरसं नयत् जरां नयति माणवकः, तथा च परिधापनेन परिधापयामः, यथा बहूनि वस्त्राणि भोगेन

जरयिष्यति, तथाऽहं परिधापयामीति यावत्। ज्योक् चिरकालं श्रोत्राय वेदाय जागरत् जागृहि। बहुकालं वेदतदर्थजागरणं पठनबोधानुष्ठानात्मकं तवास्त्वित्यर्थः। ज्योक् श्रोत्रेऽधिजागरत् बहुकालं शिष्येभ्यो जागृहि। उपदिश अतिशयेन परोपकारप्रकृष्ट-धर्मकत्वात्।। ८।।

**परीममिन्द्रमोजसे महे क्षत्राय दध्मसि। यथैनं जरसं नयज्ज्योक् क्षत्राय जागरज्ज्योक् क्षत्रेऽधिजागरदिति राजन्यस्य।। ९।।**

हे ब्रह्मचारिन् वासः परिदध्मसि, वासः परिधापयामः, इन्द्रमिन्द्रेण सह बाहुभ्यां जातत्वादिन्द्रो राजन्यस्तं परमेश्वरं स्वयमेव प्रजापालनसामर्थ्यात्। किमर्थम्। ओजसे बलाय। महे महते पूजिताय वा। क्षत्राय साधूनां त्राणाय उत्साहाय च। गतार्थमन्यत्।। ९।।

**परीमं मनुमायुषे महे पोषाय दध्मसि। यथैनं जरसं नयज्ज्योक् पोषाय जागरज्ज्योक् पोषेऽधिजागरदिति वैश्यस्य।। १०।।**

मनुमिति मानुषत्वान्मनुम्। पोषो धनपुष्टिस्तदर्थम्। शिष्टं समानम्।। १०।।

**परीदं वासोऽधिधाः स्वस्तये भवापीवानभिशस्तिपावा। शतं जीव शरदः, सुवीरो वसूनि चोग्रो विभज सुजीवन्निति परिहितवासमनुमन्त्रयते।।११**

त्रयाणामपि वर्णानां परिहितवाससामनेनानुमन्त्रणं करोत्युपनेता। परिशब्दः पूर्ववदिहापि व्यवहितान्वयः। हे माणवक त्वमिदं वासः परि अधिधाः पर्यध्ययाः, आधिक्येनोत्कर्षेण परिहितवानसि स्वस्तयेऽविनाशाय यत्, तत्त्वमापीवा आपीनः प्रवृद्धो भव, अनभिशस्त्यनभिशस्तं पाति रक्षतीत्यनभिशस्तिपावा, शतं च शरदां जीव, सुवीरश्च शोभनपुत्रयुक्तो भव, तथा वसूनि धनानि उदारः सन्विभज विशेषेण भजस्व देहि वा परिजनर्त्विक्प्रभृतिभ्यः। सुष्ठु जीवन् सुजीवन् सुखादिना जीवन्।।

**'योगे योगे' 'युवा सुवास' इति चैताभ्यामग्निमभि दक्षिणमानीयै-ह्यश्मानमातिष्ठाश्मेव त्वं स्थिरो भव। कृण्वन्तु विश्वे देवा आयुष्टे शरदः शतमिति दक्षिणेन पदाऽश्मानमास्थापयति।। १२।।**

योगे योगे इत्यनेन युवा सुवास इत्यनेन च मन्त्रेणाग्निं लक्षणीकृत्य प्रदक्षिणं

यथा भवति, तथा माणवकमानीय, एह्यश्मानमातिष्ठेति मन्त्रेणाश्मानं दक्षिणेन पदा आस्थापयति अधिष्ठापयत्याचार्यः।।

**योगे योगे तवस्तरं वाजे वाजे हवामहे।**
**सखायमिन्द्रमूतये।।**

व्याख्यातेयम्। अत्र वह्निप्रदक्षिणे तु योगः सम्बन्धो विशेष्यते। योगे योगे सर्वत्र ब्रह्मचारिक्रियासम्बन्धे कर्तव्ये, वाजे वाजे हविषि हविषि, इन्द्रं हवामहे आह्वयामः ऊतयेऽवनाय, तवस्तरं बलवत्तरं, सखायं सहायम्।

**युवा सुवासः परिवीत आगात्स उच्छ्रेयान्भवति जायमानः।**
**तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः।।**

एष यूपोच्छ्रायणे विनियुक्तोऽन्यत्र मन्त्रः। तत्रैष मन्त्रार्थः - यूप एव युवा नवः सद्यश्छिन्नः, शोभनेन वाससा रशनया च परितो वेष्टित आगात् आगतः। तं धीरासो धीराः पण्डिता ऋत्विजः, उन्नयन्ति उच्छ्रियन्ति, मनसा देवयन्तः देवान् यष्टुकामाः पशुयागं चिकीर्षन्तः। प्रकृतोऽत्रायमर्थः - ब्रह्मचारी युवा सुवासाः परिहितशोभनवस्त्रः परिवीतः संवृतो ब्रह्मचार्यात्मा सहि युवा नित्यतरुणः संवीतश्च शणवाससा, आगात् आगतः, इदं शरीरं कर्मवशात्प्राप्तः। प्राणो व्याख्यातव्यो ब्रह्मचारिसम्बन्धी। सोऽपि हि शरीरेण वाससेव संवृत आगतो ब्रह्मचारिशरीरम्। नित्यतरुणश्च युवा स ब्रह्मचारी उच्छ्रित उन्नतो जायमानो वर्धमानो भवति, आत्मा वायुर्गगन इव क्षुधादिभिः प्रवृद्धो भवति। तं धीरासो धीराः पण्डिताः कवयः क्रान्तदर्शना उन्नयन्ति ऊर्ध्वं नयन्ति आत्मानं मोक्षं प्रापयन्ति, प्राणमुत्क्रामयन्ति ऊर्ध्वं ब्रह्मद्वारं प्रापयन्ति। ब्रह्मचारिशरीरमप्युन्नयन्ति क्रियाज्ञानकाण्डानुष्ठानेनोत्कृष्टं सम्पादयन्ति, स्वाध्यः शोभनधियः सुकर्माणः, एकाग्रेण मनसोन्नयन्ति।

एह्यश्मानमिति, हे माणवक एहि आगच्छ अश्मानं पाषाणमातिष्ठाऽधितिष्ठ, अश्मेव स्थिरो भव, विश्वे सर्वे देवा आयुष्टे कृण्वन्तु शरदः शतं समाः शतम्।। १२।।

**मम व्रते हृदयं ते ददामि, मम चित्तमनुचित्तं ते अस्तु। मम वाचमेकव्रतो जुषस्व बृहस्पतिस्त्वा नियुनक्तु मह्यमिति नाभिदेशादूर्ध्वं पाणिनोन्मार्ष्टि।। १३।।**

मम व्रत इत्यादिना मन्त्रेण नाभिमारभ्य शिखान्तं यावद् ब्रह्मचारिणम् आचार्य उन्मार्ष्टि। व्रतमिति कर्मनाम। हे ब्रह्मचारिन् मम व्रते कर्मणि ते तव हृदयं ददामि त्वदीयं हृदयं मच्चिकीर्षितकर्मसहायमस्त्वित्यर्थः। मम सम्बन्धि चित्तं ते तवानुचित्तमस्तु, मदीयचित्तानुगतं तव चित्तमस्त्वित्यर्थः। मम सम्बन्धिनीं वाचं त्वमेकव्रतो भूत्वा, जुषस्व यदहमध्यापयामि, तदेकचित्तो भूत्वा अधीष्वेत्यर्थः। वाग्वै बृहती, तस्याः पतिर्बृहस्पतिरात्मा। स त्वां नियुनक्तु सम्यक्सङ्कल्पद्वारेण मत्सेवादौ प्रवर्तयतु, मह्यं मदर्थं, ममापि तथा सति आचार्यकसम्पत्तिरुपकारो भविष्यतीत्यर्थः।। १३।।

**दधिक्राव्ण इति त्रिर्दधि भक्षयित्वा, ब्रह्मचर्यमागामुप मा नयस्वोंभूर्भुवः स्वरिति वाचयति।। १४।।**

ब्रह्मचारी वक्ति। तमाचार्यो वाचयति ब्रह्मचर्यमित्यादि स्वरित्यन्तम्। किं कृत्वा दधिक्राव्ण इत्यादिना त्रिर्दधि भक्षयित्वा भक्षणे ब्रह्मचारिणं प्रयुज्य। खादित्वा आचान्तो ब्रह्मचर्यमित्यादि ब्रह्मचारी पठति, गुरुपाठितः सन्निति तात्पर्यम्।

**दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः।**
**सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत्।।**

एषा व्याख्याता। ब्रह्मचर्यमित्यादि ब्रह्मचारी ब्रवीति हे गुरो अहं ब्रह्मचर्यमागाम्, ब्रह्मणो वेदस्य चरणमागामागतः प्राप्तः। ब्रह्मचर्यं मया अवश्यकर्तव्यतया सङ्कल्पितम्। अत उपनयस्व मां संस्कुर्वित्यर्थः। अध्येषणे लोट्। हे उपनेतस्तवाप्याचार्यकसिद्धिः फलं भविष्यति मां संस्कुर्वत इत्यात्मनेपदेन बोधयति। आदित्यदर्शनस्तु व्याख्यातवान् - गुरुरिदमाह - ब्रह्मा प्रजापतिस्तस्य चरणं ब्रह्मभावमहमागामागतः, अतो मामुपनयस्व ब्रह्मसमीपं प्रापय। हे ब्रह्मचारिन्नित्यादि। एतत् विचिन्त्यम्। 'ओमिति ब्रह्मणोऽभिधानमोमिति ब्रह्म खं ब्रह्मे'ति श्रुतेः। भूरिति भूलोकस्था देवता अग्निरूपोच्यते। भुवरित्यन्तरिक्षदेवता पूर्ववत्तात्स्थ्यात्, स च वायुः। स्वरिति स्वर्लोकस्था देवता आदित्यात्मिकोक्ता।। १४।।

**इयं दुरुक्तात्परिबाधमाना वर्णं पवित्रं पुनती म आगात्। प्राणापानाभ्यां बलमाभजन्ती सखा देवी सुभगा मेखलेयम्। ऋतस्य गोप्त्री तपसस्तरुत्री घ्नती रक्षः सहमाना अरातिम्। सा नः समन्तमनुपरेहि भद्रया भर्तारस्ते मेखले**

**मारिषाम। श्रद्धाया दुहिता तपसोऽधिजाता स्वसर्षीणां मन्त्रकृतां बभूव। सा मा मेखले परिरेरिहस्व मयि धेहि तप इन्द्रियं चेति वाचयन्मेखलामाबध्नीते।।**

इयं दुरुक्तादित्यादिकास्त्रिष्टुभो वाचयन्नाचार्यो मेखलामाबध्नीते। ब्रह्मचारी वक्ति। गुरुर्वाचयति। इयं मेखला दुरुक्ताद्दुष्टादसत्यभाषणादिकादुक्ताद्वचनात्परिबाधमाना वारयन्ती तस्यां बद्धायां वाक्पाणिपादचापलवारणान्नियमचोदनाद्वर्णं ब्राह्मणादिजातित्रयं पुनती पावयन्ती अध्ययनादियोग्यताऽऽपादनद्वारेण, रूपादिकं वा वर्णं पुनती, स्वभावपवित्रं पावनयोग्यं वा। सा मे ममागादागता प्राणापानाभ्यां बलमाभजन्ती ददती स्वाध्यायादिद्वारेण। 'भञ्जो-आमर्दने' इत्यस्य, वर्णात्मकं रूपमाभजन्ती विनाशयन्ती तस्यां हि सत्याम् अध्ययनं क्रियते। तच्च क्रियमाणं प्राणापानौ निरुद्ध्य क्रियत इति प्राणापानबलमपहतं तया भवति। सखा समानख्याना। देवी द्योतनादिगुणयुक्ता। सुभगा हृद्या नवकोमलमुञ्जसङ्गता। ऋतस्य सत्यस्य गोप्त्री पालयित्री तस्यां सत्यां यथेष्टवाचित्वनिवारणात्, ऋतस्य यज्ञस्य वा रक्षिका बद्धमेखलेन वेदतीर्थादिगमनात्। तपसो व्रतनियमसहितस्य वेदाध्ययनस्य तरुत्री तारयित्री पारं नयत्री। घ्नती रक्षः, यातुधानान्नाशयन्ती, वज्रो वै मेखलेति श्रुतेः। सहमाना अरातिं, शत्रुमदानं वा प्रसहमाना अभिभवन्ती कार्पण्यं शत्रूंश्च निवारयन्तीत्यर्थः। सा नोऽस्माकं समन्तं समन्तादनुपरेहि आगच्छ भद्रया वृत्ता। हे मेखले तव भर्तारो धारयितारः सन्तो वयं मा रिषाम। रिषिर्हिंसाकर्मा। त्वां धारयतामस्माकं हिंसा मा भूत्। श्रद्धाया आस्तिक्यस्य दुहिता श्रद्धाऽस्य माता। तपसोऽधिजाता, तपोऽस्याः पिता। मन्त्रकृतां सम्यग्ज्ञानविदामृषीणां स्वसा भगिनी बभूव भूता। हे मेखले सैवंभूता त्वं मां परिरेरिहस्व 'लिह-आस्वादने' छान्दसो वर्णव्यत्ययः मां समाश्लिष्य, मयि तपो नियमयुक्ताध्ययनं धेहि निधेहि, इन्द्रियं च मे इन्द्रियषट्कपाटवं च देहि।। १५।।

**मौञ्जीं त्रिवृतं ब्राह्मणाय प्रयच्छति, मौर्वीं धनुर्ज्यां राजन्याय, सौत्रीं वैश्याय।। १६।।**

मौञ्जीं सप्तमुञ्जनिर्मिताम्। त्रिवृतं त्रिगुणवेष्टिताम्। त्रिवृद्वज्रः। त्रिवृन्नवकम्। तत्र त्रिवृता यूपं परिचीयादित्यादौ रज्जौ त्रिवृच्छब्दः। त्रिवृत्स्तोम इत्यादौ त्रिवृच्छब्दो नवके। इहापि रज्जौ त्रिगुणायां त्रिवृच्छब्दः, तथा सदाचारात् तेन भ्रान्त्या

केचिन्नवगुणां मेखलां व्याचक्षते। मुर्वो नाम तृणविशेषस्तस्य विकारो मौर्वी, तां धनुर्ज्यां धनुषः प्रसार्यं गुणं राजन्याय प्रयच्छति। सौत्रीं वैश्याय, सामान्याभिधानेऽपि स्मृत्यनुसारेण कर्पाससूत्रमयीम्। आदौ प्रयच्छति, तत आबध्नीयादिति क्रमो बोद्धव्यः।। १६।।

**चित्तस्य समोऽसि, दैव्यो ग्रन्थिरसि, मा विस्रस इति ग्रन्थिं कृत्वा, मित्रस्य चक्षुर्धरुणं बलाय तेजो यशस्वि स्थविरं समृद्धम्। अनाहनस्यं वसनं चरिष्णु परीदं वाज्यजिनं दधेयमिति वाचयन्नैणेयं चर्म ब्राह्मणाय प्रयच्छति वैयाघ्रं राजन्याय रौरवं वैश्याय।। १७।।**

'चित्तस्य समोऽसी'त्यनेन मन्त्रेण मेखलाग्रन्थिं कृत्वा, शिखावत् यथा कुलप्रसिद्धि 'त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा।' (मनु.२.४३) इत्यादिस्मरणात् मित्रस्येत्यादि वाचयन्नैणेयं कृष्णमृगस्य सम्बन्धि चर्म ब्राह्मणाय प्रयच्छत्युपनेता, राजन्याय व्याघ्रचर्म, रुरुचर्म वैश्याय। मेखलाग्रन्थौ चर्मदाने च त्रयाणां साधारणौ मन्त्रौ।

'चित्तस्ये'ति। हे ग्रन्थे त्वं चित्तस्य समश्चित्तेन तुल्यो यथा ब्रह्मचारिणश्चित्तं न चलति व्रताध्ययनादिशुद्धं तिष्ठति, तथा त्वमपि न चलसि यावद्ब्रह्मचर्यमवस्थानात्। दैव्यो देवानां सम्बन्धी त्वं ग्रन्थिरिति स्तुतिः, ततश्च मा विस्रसः मुक्तो मा भूः।

मित्रस्येति त्रिष्टुप्। ब्रह्मचारी ब्रूते। इदमजिनमहं परिदधेयं परिदधे। कीदृशम्। मित्रस्याहिंस्रस्य हरिणस्य रुरोश्चक्षुर्दर्शनं प्रसिद्धम्। वैयाघ्रपक्षेऽपि व्याघ्रो मित्रमेव राज्ञोऽभिमतचर्मदानाच्छौर्यस्मरणाच्च। धरुणं ब्रह्मचर्यादिकस्य धारणम्। बलाय ब्रह्मचर्यसामर्थ्यार्थं परिदधे तेजः ब्रह्मवर्चसस्य तेजसो निमित्तत्वात्। यशस्वि यशस्करम्। स्थविरं वृद्धमिव गौरवपात्रं स्थिरतरं वा। समृद्धं समृद्धिकारि। अनाहनस्यम् आहन्तीति आहनाः 'सर्वधातुभ्योऽसुन्' (उ.६३८) इत्यसुन्, आहनसि साधु आहनस्यं तत्प्रतिषेधोऽनाहनस्यम्। वसनमाच्छादनम्। चरिष्णु गमनशीलं मृगावस्थायामभूत्। वाजि वाजमन्नं तद्विद्यतेऽस्येति वाजि, तस्मिन्परिहिते ब्रह्मचर्यावस्थाय भक्त्याऽन्नं प्रयच्छन्तीति तस्यान्नत्वमुपचर्यते।। १७।।

**तच्चक्षुरित्यादित्यमुपस्थापयति।। १८।।**

तच्चक्षुरित्यादिना आदित्योपस्थानं कारयति।

**तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्।**
**पश्येम शरदः शतं जीवेम शरदः शतम्।।**

तदेव चक्षुस्त्रैलोक्यस्य पुरस्तात्पूर्वस्यां दिश्युच्चरति उदेति। देवहितं देवैर्विहितं प्रेरितं निर्मितं वा देवेभ्य इन्द्रियेभ्यो वा हितम्। तत् शरदां शतं पश्येम पश्यन्तश्च वर्षशतं जीवेमेति ब्रह्मचारी शंसत्युपतिष्ठमान आदित्यम्।

**को नामासीत्युक्तेऽभिवादने प्रोक्तोऽसावहं भो इति प्रत्याह।। १९।।**

गुरुराह को नामासीति। क इति प्रजापतिनाम। तथाच ब्राह्मणं - 'को नामासीति प्रजापतिर्वै को नामेति।' वेदग्रहणाभिमुखत्वात्प्रजापतिरिवासीति स्तुतिच्छलेन साक्षात् प्रश्नोऽयं प्रतिवचनविधानात्। गुरुणा पृष्टः शिष्योऽभिवादयते। स्वनामोच्चारणेनासावित्युक्ते नाम प्रतीयात् विष्णुमित्रोऽहमभिवादये भो इति ब्रह्मचारिणाभिवादितो गुरुः प्रत्यभिवादनमाह प्लुतान्तम्। 'प्रत्यभिवादेऽशूद्रे'(८.२.८३) इति स्मृतेरायुष्मानेधि सौम्य विष्णुमित्र ३ इति। स्मृतेरपि - 'आयुष्मान्भव सौम्येति वक्तव्योऽन्त्याक्षरे प्लुतः।' इति।। १९।।

**देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसा उपनयेऽसौ।। २०।।**

आचार्यो ब्रह्मचारिणो दक्षिणं हस्तं दक्षिणेन हस्तेन विवाहोक्तविधिना गृह्णाति देवस्य त इत्यादिना। हे ब्रह्मचारिन् विष्णुमित्र अहमाचार्यो हरिशर्माभिधानस्त्वामुपनये इति शिष्यं स्वनाम्ना सम्बोध्य स्वनामोच्चार्य, गृहीतहस्तो गुरुर्ब्रवीति, एकोऽसाविति शब्दः शिष्यबोधने, द्वितीय आचार्यनामोपलक्षणार्थः, ते तव हस्तं गृह्णामि। कीदृशस्य। देवस्य द्योतनादिधर्मकस्य, सवितुः पदार्थादिज्ञानस्य जनयितुः। किमर्थम्। प्रसवे प्रकृष्टज्ञानादिजननाय। स्तुत्यर्थमाह - नैवं भ्रमणीयम् - यदुत चर्ममयाभ्यामात्मीयाभ्यां बाहुभ्यां हस्ताभ्यां वा हस्तं गृह्णाम्यहमिति। किं तर्हि। अश्विनोर्देवभिषजोर्बाहुभ्यां पूष्णश्च हस्ताभ्याम्।। २०।।

**सविता ते हस्तमग्रहीदग्निराचार्यस्तव। कस्त्वा कमुपनयेऽसौ काय त्वा परिददामि।। २१।।**

गृहीतहस्त एवाचार्य आह - सविताभिमतस्य जनयिता आदित्यस्ते तव हस्तमग्रहीत्, आत्मानमेव सवितृत्वेनोपचरति गुरुः। अग्निराचार्यस्तव, नाहम्, अहमेवाग्निस्तवाचार्यो वेदार्थज्ञानतदनुष्ठानतपःप्रभृतिभिर्जाज्वल्यमानत्वात्, कः प्रजापतिः सन्नहं गुरुरात्मरूपेण कं प्रजापतिमेव सन्तं त्वामहमुपनये असौ विष्णुमित्रनामा। सर्वेषामेवान्तरमेकः। स एव च संस्कारैरौपाधिकदोषनिवृत्त्या संस्क्रियते। काय प्रजापतये त्वामहं परिददामि परिरक्षार्थं ब्रह्मणे त्वां समर्पयामीत्यर्थः।। २१।।

**कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यस्मीति प्रत्याह।। २२।।**

कस्य प्रजापतेर्ब्रह्मचार्यसीति भङ्ग्या प्रश्ने आचार्येण कृते सति शिष्यः प्रत्याह - प्राणस्य ब्रह्मचारी अस्मि भवामीत्यभ्युपगमभङ्ग्यैव प्रत्युत्तरम्। प्राणो हि प्रजापतिरेव जगत्सूत्रभूतः। तथा च श्रुतिः - 'हिरण्यगर्भः पुरुषो महांस्त्वं प्राणो जगत्सूत्रमनादिरिन्द्रः। बोधः शुचिर्धर्मतरान्तरात्मा तथा विधाता जगतोऽस्य देव।।' इति।। २२।।

**प्रजापतये त्वा परिददामि। देवाय त्वा सवित्रे परिददामि बृहस्पतये त्वा परिददाम्यसौ। देव सवितरेष ते ब्रह्मचारी तं गोपायस्व दीर्घायुः स मा मृत।। २३।।**

हे ब्रह्मचारिन् प्रजापतये परिरक्षार्थमहं त्वा ददामि देवाय सवित्रेऽन्तरात्मने बृहस्पतये वाग्वै बृहती, तस्याः पतिरात्मा, तस्मै ददामीति समानम्। असाविति आचार्यनामप्रदर्शनार्थम्।

हे देव स्वप्रकाशतया द्योतमान। हे सवितः अभिमतव्रतादिजनयितः एष ब्रह्मचारी ते तव सम्बन्धी, तं गोपायस्व पालय। दीर्घायुः सोऽस्तु, मा मृत मरणं मा भूदस्य। प्रत्यक्षेऽपि परोक्षनिर्देशो वैदिको व्यत्ययः।। २३।।

**अग्निपुत्र वायुपुत्र सूर्यपुत्र विष्णुपुत्र ब्रह्मपुत्रैष ते ब्रह्मचारी तं गोपायस्व दीर्घायुः स मा मृत।। २४।।**

अग्नेः पुत्रः ऋग्वेदः। वायोः पुत्रो यजुर्वेदः। सूर्यस्य पुत्रः सामवेदः। हे ऋग्वेद यजुर्वेद सामवेद एष ब्रह्मचारी तुभ्यं परिरक्षार्थं दत्त इति ते तव प्रत्येकं सम्बन्धी, अतस्तं गोपायस्व। तथा च ब्राह्मणमग्न्यादिपुत्रत्वमृग्वेदादीनां दर्शयति -

'प्रजापतिर्वा एक आसीत्स तपोऽतप्यत, ततस्तपस्तेपानेन त्रयो देवा असृजन्त। अग्नि-र्वायुरादित्यस्ते तपोऽतप्यन्त तेभ्यस्तपस्तेपानेभ्यस्त्रयो वेदा असृजन्ताग्नेर्ऋग्वेदो वायो-र्यजुर्वेद आदित्यात्सामवेदः' इति। विष्णुपुत्रो ब्रह्मपुत्रश्चेति सम्भूतग्रामः। अथवा अग्नेः पुत्रो भूलोकः, अस्याधिष्ठात्री देवता अग्निः। एवं वायुपुत्रोऽन्तरिक्षलोकः, सूर्यपुत्रो द्युलोकः। यद्वा पुरु बहु त्रायते इति पुत्रः, अग्निश्चासौ पुत्रोऽग्निपुत्रः। एव-मन्यत्रापि योजना।। २४।।

इदानीं गृहीतहस्तमेनमनुशास्ति -

**ब्रह्मचार्यसि। अपोऽशान। कर्म कुरु। दिवा मा स्वाप्सीः। वाचं यच्छ।। २५।।**

गुरुराह - हे ब्रह्मचारिन् त्वं सम्प्रति यतो ब्रह्मचारी सम्पन्नोऽत एतानि पञ्च कर्तव्यानि बुद्ध्यस्व। अपोऽशान निमित्तोपनतावाचमनादिकं कुरु। तथा गुरुपरि-चर्यावेदाध्ययनादिकं कर्म कुरु। दिवास्वप्नं च वर्जय, मत्प्रसादेन शरीराद्यपाटव-दशायामभ्युपगच्छ दिवास्वापमिच्छायाः स्वतन्त्राया निषेधात्। वाक्संयमनं च कुरु, अनृतपरुषभाषणादिकं मा कुर्वित्यर्थः।। २५।।

**बाढमित्यभ्युपगमः।। २६।।**

**मेधां मह्यमङ्गिरसो मेधां सप्तर्षयो ददुः। मेधामग्निश्च वायुश्च मेधां धाता ददातु मे। मेधां मे वरुणो राजा मेधामग्निर्ददातु मे। मेधामिन्द्रश्च सूर्यश्च मेधां देवी सरस्वती। या मेधा अप्सरस्सु गन्धर्वेषु च यन्मनः। दैवी मनुष्ये या मेधा सा मामाविशतादिह। शरीरं मे विचक्षणं वाङ्मे मधुमद्दुहे। निशामितं निशामये मयि श्रुतम्। यन्मेऽनूक्तं तद्रमतां शकेयं यदनुब्रवे। प्रियाः श्रुतस्य भूयास्म मेधया संविधीमहि। अवृधमहमवृधस्त्वमसौ सौम्य प्राणस्त्वं मे गोपाय ब्रह्मण आणी स्थ श्रुतं मे मा प्रहासीदिति वाचयति।। २७।।**

मेधां मह्यमित्यादिकाः पञ्च ऋचः, षष्ठं यजुः शिष्यो वक्ति, गुरुर्वाचयति। कुशाग्रीया बुद्धिर्मेधा। तामङ्गिरसो वायवः प्राणापानसमानव्यानोदानाः ददुर्ददतु मह्यम्। अङ्गानि रसयन्तीत्यङ्गिरसः आन्तरा वायवस्तथा सप्तर्षयो वसिष्ठाद्या मह्यं मेधां ददतु। एतत्समानमृग्द्वये। अप्सरस्सु या मेधा, यच्च गन्धर्वेषु मनोऽन्तःकरणं,

या च दैवी वेदार्थादिसाक्षात्कारिणी, मनुष्येषु मेधा स्थिता इहलोके, सा सर्वा मामाविशतु प्रविशतु। मम शरीरं विचक्षणं पण्डितमस्तु अधिष्ठातृद्वारेण। वाक् च वेदादिरूपा मधुमत् मधुरफलं दुहे दुग्धाम्। यच्च मयि श्रुतं स्थितं निशामितं, तन्निशामये चिन्तयेयं सम्यक्। यच्च ममानूक्तं गुरुणोक्तम्, तद्रमताम्। यच्चानुब्रुवे गुरूक्तमनुवदामि, तच्छकेयं शक्नुयाम्। वयं च श्रुतस्य प्रिया भूयास्म श्रुतमस्माकं पर्यवसितमस्तु। मेधया संविधीमहि सम्बद्ध्येमहि। आत्मानमुद्दिश्य, यजुषा शिष्य इदमाह - हे अन्तरात्मन् प्राणादिक असौ विष्णुमित्रोऽहमवृधं वर्धिष्ये। त्वमपि चावृधः असौ प्राणादिकः, तस्यापि हि वेदाध्ययनादिनाऽतिशयो भविष्यति। हे सौम्य प्राणस्त्वं जगत्सूत्रमतो मे मां गोपाय। त्वं ब्रह्मण आणी सारं स्थ भवसि। श्रुतं मे मा प्रहासीत् श्रुतं मे मा त्याक्षीत्, मम सम्बन्धि यच्छ्रुतं तन्मां मा त्याक्षीदित्यर्थः। अत्र चतुर्थी उष्णिक्। शिष्टा अनुष्टुभः। अवृधमहमित्यादि षष्ठं यजुः।। २७।।

**एताभिरेव चतसृभिरनुप्रवचनीयाञ्जुहुयाद्यजुषोत्तमाम्।। २८।।**

अनुप्रवचनं प्रयोजनं येषां तेऽनुप्रवचनीया होमा इत्यन्वर्था संज्ञा। अनु उत्तरकालं हि सावित्र्याः प्रवचनं कारयिष्यते गुरुणा। अथवानुप्रवचनमर्हन्तीत्यनुप्रवचनीयाः। अत्र हि मन्त्रानुपाध्यायो वक्ति, शिष्योऽनुप्रवक्ति। अनुप्रवचनीयसंज्ञकान् होमानेताभिरेव प्रकृताभिश्चतसृभिर्ऋग्भिः कपिञ्जलाधिकरणन्यायेन मेधां मह्यमित्याद्याभिर्जुहुयात्। तेन चत्वारो होमाः। पञ्चममाह यजुषोत्तमाम्, अवृधमित्यादिना यजुषोत्तमामाहुतिं पञ्चमीं जुहुयादिति केचित्। अन्ये त्वाहुः - अत्र पक्षे पञ्चम्या ऋचो विनियोगाभावः प्राप्नोति। उत्तमामिति स्त्रीलिङ्गनिर्देशो न युज्यते प्रकृतस्यानुप्रवचनीयस्य पुंस्त्वात्, तदपेक्षयोत्तममिति प्रसङ्गात्। न चाहुऽऽतिशब्दः प्रकृतोऽस्ति। तस्मादुत्तमामृचं यजुषा सह संयोज्य, पञ्चममनुप्रवचनीयं जुहुयादित्यर्थः।। २८।।

षष्ठमनुप्रवचनीयहोममाह -

**छन्दोभ्यः स्वाहेति क्रतुनामधेयेन च यथोपाचरितः क्रतुर्भवत्येवं सर्वाणि वेदोक्तानि।। २९।।**

क्रतुरिह कर्म। कर्मनामधेयेन च जुहुयात्। एष सप्तमोऽनुप्रवचनीयहोमः। कथं क्रतुनामधेयेन होतव्यम्। यथोपचारितः क्रतुर्भवति, येन प्रकारेण प्रकृतं

कर्मोपाचरितमिष्टं भवति, तथा होतव्यम्। चतुर्थीयोगेन स्वाहाकारेण चाभिधानशक्तियोगिना च कर्मनामधेयेन उपायनाय स्वाहेत्युपनयनाय स्वाहेति वा। एवं सर्वाणि वेदोक्तानि, अनेनैव प्रकारेण सर्वाणि वेदोक्तानि कर्माणि स्वनामधेयेन छन्दोभ्यः स्वाहेति हुत्वा होतव्यानि त्रैविद्यकाय स्वाहेत्यादिप्रकारेण।। २९।।

**पश्चादग्नेर्दर्भेषु प्राङासीनः प्रत्यङ्ङासीनाय तत्सवितुरिति सावित्रीं त्रिरन्वाह पच्छोऽर्धर्चशः सर्वामन्ततो यश्च मेधाकामः स्यात्।। ३०।।**

पश्चादग्नेर्दर्भेषूपविष्टः प्राङ्मुखो गुरुः प्रत्यङ्मुखासीनायाऽऽचार्यसम्मुखोपविष्टाय शिष्याय सावित्रीं सवितृदेवतां तत्सवितुरित्यादिकां गायत्रीं त्रीन् वारानन्वाह। ब्राह्मणायेति ज्ञेयम्। उपलक्षणमेतद्राजन्यवैश्ययोर्हि सावित्र्यावन्ये स्मृतिसदाचाराभ्यां बोद्धव्येऽदब्धेभिः सवितरिति राजन्याय, विश्वा रूपाणीति वैश्याय। कथमन्वाह - पच्छः पादं पादं, पच्छः प्रथमोच्चारणे पादशोऽनुब्रूयात्। द्वितीयोच्चारणे अर्धर्चशः ऋचोऽर्धमर्धर्चमर्धर्चमर्धर्चमर्धर्चशः। अन्तेऽन्ततः सर्वाम्, तृतीयोच्चारणे यथाशक्त्यनुसारं वा सर्वामृचमनुब्रूयात्। यश्च मेधां शिष्यस्य कामयते, सोऽपि पच्छोऽर्धर्चशः सर्वामन्ततोऽनुब्रूयात्। तत्सवितुरिति व्याख्यातेयम्।।

**अदब्धेभिः सविता पायुभिष्ट्वं शिवेभिरद्य परिपाहि नो गयम्।**
**हिरण्यजिह्वः सुविताय नव्यसे रक्ष मा किर्नो अघशंस ईशत।।**
**विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे।**
**वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो विराजति।।**

एते यथासङ्ख्यं राज़न्यवैश्ययोरनुब्रूयात्। हे सवितरादित्य अद्यास्मिन्नहनि नोऽस्माकं गयं गृहं पाहि रक्ष पायुभिः पालकैः रश्मिभिरदब्धेभिरनुपहिंसितैः, शिवेभिः सुखकारिभिः। यतस्त्वं हिरण्यजिह्वः दीप्रकिरणः। सुविताय हविरादिदात्रे नव्यसे स्तोत्रादिकर्त्रे नौरिवाऽऽचरसि तारयिष्यसि आपत्समुद्रादिति वा। अतोऽस्मान् रक्ष। मा किः कश्चिन्नोऽस्मानघं पापं शंसति यः, स चौरादिः ईशत प्रभूत्।।

सविता विश्वा रूपाणि सर्वान्भावान् प्रतिमुञ्चते प्रकाशयति, कविर्मेधावी क्रान्तदर्शनः। प्रासावीत् प्रसूते जनयति, भद्रं सुखं द्विपदे चतुष्पदे च। नाकं स्वर्गं

व्याख्यातं व्यख्यत् प्रकाशयति। वरेण्यो वरणीयः प्रार्थनीयः। उषसो रात्रीणां प्रयाणमनु लक्षणीकृत्य हीनीकृत्य वा विराजति रात्रितमसोऽपहतत्वात् प्रकाशते।। ३०।।

**पालाशमेकसरं नवनीतेनाभ्यज्य, तस्य छायायां वाचयति सुश्रवः सुश्रवा असि यथा त्वं सुश्रवा अस्येवं मा सुश्रवः सौश्रवसं कुरु। यथा त्वं सुश्रवो देवानां वेदस्य निधिगोपोऽस्येवमहं ब्राह्मणानां ब्रह्मणो निधिगोपो भूयासमिति।। ३१।।**

पलाशस्यायं पालाशो दण्डः। तमेकसरमवान्तरशाखारहितमृजुं सत्वचमव्रणं नवनीतेनाभ्यज्य स्वहस्तेन गृहीत्वा गुरुस्तस्य दण्डस्य सम्बन्धिन्यां छायायां शिष्यं व्यवस्थाप्य, सुश्रव इत्यादि पाठयति।।

पालाश उच्यते - हे सुश्रवः सुश्रवा असि शोभनं श्रवणं यस्य स सुश्रवाः। तस्मिन्हि कर्माङ्गत्वेनोपादीयमाने दुष्टस्याकीर्त्यात्मकस्य शब्दस्य श्रवणं न भवति। अनुवादमाह 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति।' ब्राह्मणमपि।

'देवा वै ब्रह्मन्समवदन्त, ततस्तद्ब्रह्म पर्णे उपाशृणोत्सुश्रवा वै नाम एष' इति, ब्रह्मणि वेदे देवा अवदन्त ततस्तद्ब्रह्म पर्णे पलाशे समाश्रितं पलाशमाश्रितमित्यर्थः। अत एव पलाशः सुश्रवा इति नाम्ना प्रसिद्ध इति ब्राह्मणतात्पर्यम्। हे सुश्रवः सौश्रवसं कुरु, सुश्रवा एव सौश्रवसस्तं सौश्रवसम्। यथा त्वं सुश्रवो देवानां विवदमानानां वेदस्य निधिगोपः, वेदानां निधेः समूहस्य रक्षकोऽसि भवसि, एवमहं ब्राह्मणानां सम्बन्धिनो ब्रह्मणो वेदस्य निधिगोपो भूयासम्।। ३१।।

**पालाशं दण्डं ब्राह्मणाय प्रयच्छति।। ३२।।**

एवं प्रकृतं दण्डं पालाशं ब्राह्मणाय ब्रह्मचारिणेऽनुवचनान्ते प्रयच्छत्याचार्यः।। ३२।।

**आश्वत्थं राजन्याय।। ३३।।**

अश्वत्थो वटः[१]।। ३३।।

१. अश्वत्थशब्दस्य निघण्टुषु - बोधिवृक्षः, चलपत्रः, पिप्पलः इत्याद्याः प्रदत्ताः पर्यायत्वेन। अत्र तु ग्रन्थे तत्पर्यायपदत्वेन अनेकवारं वट इति पदं दीयते। (?)

**नैयग्रोधं वैश्याय।। ३४।।**

वैश्याय न्यग्रोधसम्बन्धिनं प्रयच्छति दण्डम्।। ३४।।

तच्छायायां पूर्वतन्त्रस्यानुवचनं कारयित्वा, दण्डं दत्त्वा, किं कारयत्याचार्य इत्याह -

**स्मृतं च म इति वाचयति। स्मृतं च मेऽस्मृतं च मे तन्म उभयव्रतम्। निन्दा च मेऽनिन्दा च मे तन्म उभयव्रतम्। विद्या च मेऽविद्या च मे तन्म उभयव्रतम्। श्रद्धा च मेऽश्रद्धा च मे तन्म उभयव्रतम्। सत्यं च मेऽनृतं च मे तन्म उभयव्रतम्। मृतं च मेऽमृतं च मे तन्म उभयव्रतम्। श्रुतं च मेऽश्रुतं च मे तन्म उभयव्रतम्। व्रतं च मेऽव्रतं च मे तन्म उभयव्रतम्। यद्ब्राह्मणस्य ब्रह्मणि व्रतं यदग्नेः सेन्द्रस्य सप्रजापतिकस्य सर्पिकस्य सपितृकस्य समनुष्यस्य समनुष्यराजन्यस्य सगन्धर्वाप्सरोजनस्कस्य ससर्पेतरजनस्कस्य सौषधिवनस्पतिकस्य सह ग्राम्यैश्च पशुभिरारण्यैश्च साकाशस्य सप्रकाशस्य सातीकाशस्य सानूकाशस्य सह यन्म आत्मन आत्मनि व्रतं तन्मे सर्वव्रतम्।। ३५।।**

यन्मन्वादिभिः स्मृतं, यच्चास्मृतमनुष्ठेयत्वेन वर्जनीयत्वेन च यथासङ्ख्यं व्रतमवश्यं पालनीयम्। एवं निन्दा च मेऽनिन्दा च मे इति निन्दितं वर्जनीयमनिन्दितमुपादेयम्। अथवा परनिन्दा वर्जनीया, अनिन्दा च प्रशंसाऽवसरे कर्तव्या परोपकारपर्यवसायिनी। एवं विद्याविद्ये ज्ञातव्ये हानोपादानार्थम्। श्रद्धा आस्तिक्यं, नास्तिक्यमश्रद्धा। तथा सत्यानृते। अमृतममरणकारि ज्ञानकर्मसमुच्चयानुज्ञानात् ज्ञेयं मम व्रतम्। मृतं मरणकारि काम्यं संसारकारणं, तदपि हानाय परपुरुषार्थार्थिना ज्ञेयं, स्वर्गाद्यर्थिना तूपदानाय। श्रुतं मीमांसादिश्रवणम्, अश्रुतं कुत्सितश्रुतं लोकायतादिशास्त्राभासविषयम्। व्रतं सद्व्रतम्, अव्रतं व्रताभासः कर्तव्याभास इत्यर्थः। यत् ब्राह्मणस्य ब्रह्मणि वेदे व्रतमध्ययनाद्यर्थं, तत् ममाऽवश्यकर्तव्यं ज्ञानपूर्वम्। अग्नेः प्राजापत्यादिसहितस्य यद्व्रतं कर्म, तत् मया ज्ञेयमनुष्ठेयं च क्रमेण। सर्वत्र गुरोः अनुग्रहं कुर्विति प्रतीयमानम्। जनस्कस्येति सकारागमश्छान्दसः।। ३५ ।।

**इदमहमग्नौ समिधमभ्यादधाम्यग्ने सर्वव्रतो भवाम्यधीते हैतेषां वेदानामेकं द्वौ त्रीन्सर्वान्वा यमेवं विद्वानुपनयत इति श्रुतिः।। ३६ ।।**

मन्त्रलिङ्गादिदमहमित्यनेन समिधमग्नौ प्रक्षिपति। इदमिति लिङ्गव्यत्ययः। इमां समिधमहमग्नावादधामि। अभिराभिमुख्यार्थः। हे अग्ने त्वत्प्रसादात् सर्वव्रतो भवामि भूयासम्। अधीते हेत्यादिकमुपनेतृस्तुत्यर्थम्। य एव विद्वान् मन्त्रब्राह्मणज्ञः सन्नुपनयते, स एवोपनेतृत्वेऽधिकृतो, नान्यः। स हि यमुपनयते, स एतेषां प्रसिद्धानां वेदानामनन्तशाखायुक्तानां मध्ये यथेच्छमेकं द्वौ वा त्रीन्वाऽधीते सर्वान् सर्वशाखा-खचितान्। हशब्द इतिहासे। अतोऽनेन संस्तुतत्वाच्छ्रौतमुपनयनं, न संस्कारान्तरवत् स्मार्तमत एवोपनयनसमर्था अप्यवश्यं कुर्वन्तीति केचित्। तदसत्, स्मार्तस्याप्य-नुमितश्रुतिमूलत्वात्। अप्रत्यक्षः तत्र विधिरिति चेत्, अर्थवादेऽपि समानता। यदपि भणति मन्त्रगतो न विधायक आख्यातशब्द इति कृत्वा, नेदमहमित्यनेन समि-त्प्रक्षेपः कर्तव्य इति, तदप्यमीमांसकभणितमाख्यातस्याविधायकत्वेऽपि लिङ्गा-त्प्रक्षेपसिद्धेः।। ३६ ।।

**कर्त्रे वरं ददाति।। ३७।।**

उपनेत्रे दक्षिणां ददाति ब्रह्मचारिणः स्वामी पिता, तदभावे ज्येष्ठभ्रात्रादिः।।

**अहःशेषं स्थापयेत्।। ३८।।**

नोपवेशयेत्, नापि सञ्चारयेत्।। ३८।।

**व्याख्यातं ब्रह्मचर्यम्।। ३९।।**

ब्रह्मचर्यमुपक्रम एव 'उपनयनप्रभृति व्रतचारी स्यात्' इत्यादिनोक्तमतो न भूय उच्यते।।

**।। इत्युपनयनम्।।**

**।। इत्येकचत्वारिंशी काण्डिका।। ४१।।**



## ।। अथ द्वाचत्वारिंशी काण्डिका ।।

**त्रैविद्यकम् ।। १ ।।**

तिसृषु विद्यासु वेदत्रयात्मिकासु भवं ग्रहणप्रयोजनं वा व्रतं त्रैविद्यकम्। वक्ष्याम इति शेषः ।। १ ।।

यं प्रति कथ्यते, सोऽप्रबुद्धो ब्रह्मचारी। तेन व्यर्थ उपदेश इत्याशङ्क्याऽऽह -

**आचार्यस्य विधिः ।। २ ।।**

आचार्येणानुष्ठातव्य इत्यर्थः ।। २ ।।

**यो वेदमधीते पुरस्ताच्चोपरिष्टाच्चांहोमुग्भिः समिधोऽभ्यादध्यात् ।। ३ ।।**

अध्ययनस्याऽरम्भे समाप्तौ चांहोमुग्भिस्तिस्त्रः समिधोऽग्नावभ्यादध्यात् स्वाहाकारमात्रशून्यं प्रक्षेपमात्रं कुर्यादित्यर्थः, अन्यथा जुहुयादिति ब्रूयात्। अंहसः पापाद्विमोचयन्तीत्यंहोमुचो मन्त्राः। ते पुनः -

**यद्देवा देवहेलनं देवासश्चकृमा वयम्।**
**अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ।।**
**यदि दिवा यदि नक्तमेनांसि चकृमा वयम्।**
**वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ।।**
**यदि जाग्रद्यदि स्वप्न एनांसि चकृमा वयम्।**
**सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ।।**

देवा एव देवासः, 'आज्जसेरसुक्' हे देवा देवासोऽतिशयार्थं पुनः सम्बोधनम्, यद्वयं देवहेलनं चकृमा, 'हेड्-अनादरे' अनादरेणावलेपेन यद्देवानां पापं कृतवन्तो वयम्, तस्मादेनसोंऽहसः पापात् विश्वात् समस्तादग्निर्मां विमुञ्चतु। अंहस एनस इति दुःखपीडितस्य पुनर्वचनम्। एनःशब्दो वा पापकृते दुःखातिशये वर्तते। अनेनैव द्वितीयतृतीयौ गतार्थौ। दिवानक्तंशब्दाभ्यां मध्यवर्तिन्यौ सन्ध्ये अपि सङ्गृहीते।। ३।।

**उक्तं व्रतोपायनविमोचनम् ।। ४ ।।**

व्रतस्योपायनं ग्रहणविमोचनं च परित्यागः। तदृद्वयमपि दर्शपूर्णमासयोरुक्तम्।

तथा च तत्रत्यं सूत्रं 'पाणी प्रक्षाल्य दक्षिणतोऽग्नेस्तिष्ठन् ब्रूयादग्ने व्रतपते वायो व्रतपते सूर्य व्रतपते' इति।

अग्ने व्रतपते व्रतमालभे तत्ते प्रब्रवीमि, तच्छकेयं तेनर्ध्यासम्। वायो व्रतपते०। सूर्य व्रतपते०। अग्ने व्रतपते व्रतमचारिषं तदशकं तत्ते प्रब्रूमस्तन्नो गोपाय। वायो व्रत०। सूर्य व्रत०।।

अमी षट् कृच्छ्रविधौ व्याख्याताः। इह च व्रतग्रहणे मोचने च समानाः कर्तव्याः। इयांस्तु विशेषः - विमोचने दण्डमग्नौ प्रास्येदप्सु मेखलां वासश्च हुतसमाप्तिं यावत्। तत एव दण्डादयो मन्त्रावृत्तिभाजः। तथा च मनुः -

यद्यस्य विहितं चर्म यत्सूत्रं या च मेखला।
यो दण्डो यच्च वसनं तत्तत्सर्वं व्रतेष्वपि।। (२.१७४)

इति।। ४।।

**।। इति त्रैविद्यकमपवर्गसहितम्।।**

**।। इति द्वाचत्वारिंशी काण्डिका।। ४२।।**



## ।। अथ त्रयश्चत्वारिंशी काण्डिका ।।

**अथातश्चातुर्हौतृकं ब्रह्मचारिकल्पेन व्रतमुपैति ।। १ ।।**

चित्तिः स्रुगित्यादयो मन्त्राश्चतुर्होतार उच्यन्ते तेषु भवं चातुर्हौतृकं व्रतं ब्रह्मचारिकल्पेन ब्रह्मचारिधर्मोपदेशिना वेदभागेन चोदितमुपेयात् ।। १ ।।

**संवत्सरमष्टौ मासांश्चतुरो मासान्वा ।। २ ।।**

संवत्सरमेतद्व्रतमुपेयादिति मुख्यः कल्पः । अष्टौ चतुरो मासान्वेत्यनुकल्पः ।।

**शुद्धपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय, जयप्रभृतिभिर्हुत्वा, पूर्वेणाग्निं दर्भस्तम्भं निहत्य, ब्राह्मणं दक्षिणत उपवेश्य, हिरण्यवर्णा इति चतसृभिः समिधोऽभ्यादध्यात् ।। ३ ।।**

अग्नेर्यः पूर्वदेशस्तत्र दर्भस्तम्भं निहत्याधीतदेवमन्यं ब्रह्मचारिणमग्नेर्दक्षिणभागे उपवेश्य अग्नेः पश्चार्धे अवस्थितः सन् 'हिरण्यवर्णा' इत्यादिभिश्चतसृभिश्चतस्रः समिधोऽग्नौ पूर्ववदभ्यादध्यात् । 'हिरण्यवर्णा' इत्यादयश्चतस्रः संमार्जने व्याख्याताः ।। ३

**नित्यव्रतोपायने ब्राह्मणा व्रतपतय इति चतुर्थम् ।। ४ ।।**

यदेतत्प्रस्तुतं ब्रह्मचारिणो नित्यमवश्यकर्तव्यं व्रतग्रहणं, तत्र 'ब्राह्मणा व्रतपतयो व्रतमालभे तद्वः प्रब्रवीमि तच्छकेयं तेनर्ध्यासम्' इति मन्त्रं चतुर्थं कुर्यात् । त्रयस्तु पूर्वं व्याख्याता अत्रापि स्थिता अग्ने व्रतपते० वायो व्रतपते० सूर्य व्रतपते० इति ।। ४ ।।

**अथ व्रतहोमान् ।। ५ ।।**

वक्ष्याम इति शेषः ।। ५ ।।

**चतुर्गृहीतैश्चतुर्होतृभिराज्येन तेजस्कामो यावकेन पशुकामोऽन्नाद्येन वीर्यकामः पयसि स्थालीपाकं श्रपयित्वा, ब्रह्मवर्चसकामो मनसैकैकं हुतमनुमन्त्रयते यद्वेदव्रतं तदत्र व्रतम् ।। ६ ।।**

सप्त चतुर्होतारोऽत्र मन्त्राः । श्रपयित्वेत्येतदन्तं स्पष्टम् । एकैकं चतुर्होतारं

हुतं मन्त्रं मनसाऽनुमन्त्रयते, मन्त्रागममनुसन्दधीत, मन्त्रद्वारेणेत्यर्थः। यद्वेदविहितं व्रतं, तत् परिपूर्णमस्त्वत्र मम व्रतमिति वाचयेत्।। ६।।

**विकाराननुक्रमिष्यामो न चतुर्भिः सहासीत, न चतुर्णां समक्षं भुञ्जीत, न चतुर्भिः सह भुञ्जीतैकतमो वा।। ७।।**

**एवमपवर्गे।। ८।।**

अपवर्गः समाप्तिर्व्रतस्य, तत्र।। ८।।

**वास आचार्याय ददाति, वरं दक्षिणत आसीनाय।। ९।।**

वस्त्रं दक्षिणामाचार्याय दक्षिणत उपविष्टाय दद्यात्।। ९।।

चतुर्होतृमन्त्रान् व्याख्यास्यामः -

**भक्त्या ब्रह्म विवर्तं वा परिणाममुपाश्रितान्।**
**आध्यात्मिकैकरूपार्थांश्चतुर्होतॄन्नमाम्यहम्।।**

**चित्तिः स्रुक् चित्तमाज्यं वाग्वेदिराधीतं बर्हिः केतो अग्निर्विज्ञातमग्निर्वाचस्पतिर्होता मन उपवक्ता प्राणो हविः सामाध्वर्युरिन्द्रं गच्छ स्वाहा।।**

चतुर्होतॄणामार्षम्। इन्द्रो देवता। 'हु-दानादयोः' जुह्वति ददतीति होतारः। चतुर्णां धर्मार्थकाममोक्षाणां दातारश्चतुर्होतारः प्रद्युम्नानिरुद्धवासुदेवसङ्कर्षणाः प्रथमब्रह्मविवर्ताः। तथा च ब्राह्मणं 'ब्रह्म वै चतुर्होतारः' इति, प्रजापतिरकामयत बहु स्यामित्यादि च। एवं च परमात्मैव यज्ञरूपः स्तूयते। यज्ञो वै प्रजापतिरिति, विष्णुर्यज्ञ इत्यादिरपि श्रुतिः। अतोऽध्यात्मयज्ञस्वरूपं रूपकेणाऽऽह - चेतनं चित्तिर्ज्ञानं स्रुक्। चित्तं मनः स्वान्तमन्तःकरणं चेतो मानसमिति पर्यायः, चित्तमाज्यं, यथाहि स्रुचा आज्यं प्रक्षिप्यतेऽग्नौ, तथा विवेकज्ञानेन मनः परमानन्दध्यानवह्नौ प्रक्षिप्यते। यथाहि क्षिप्तमाज्यं दह्यते, तद्वन्मनोऽप्यध्यात्मध्याने प्रक्षिप्तं सत् स्वयं विलीयते सर्वाविद्याभेदान्तराणि च विलापयति कतकफलरजोवत्। वाग्वेदिर्यज्ञाश्रयत्वात्। यथाहि वेदिमाश्रित्य, यज्ञपात्राणि स्रुगादीनि निजकार्येषु व्याप्रियन्ते, तद्वद्वैदिकीं वाचमुपनिषद्रूपामाश्रित्य, मनःप्रभृति अध्यात्मयज्ञसाधनं निजकार्यं जनयति। आधीतं बर्हिः, आध्यानमाधीतिः चित्तध्यातॄणां तत् बर्हिस्तदाश्रितत्वाच्चित्तिस्रुगादीनां 'प्रस्तरे

जुहूं साधयति सर्वाश्च स्रुचः' इति श्रुतेः। केतो अग्निः 'चिती-संज्ञाने' असुन्, छान्दसो वर्णव्यत्ययः, केतः प्रज्ञाविशेषः, स एवाग्निस्तेनैव योगयोगाङ्गादिसमिधां सन्दीपनात्। विज्ञातमग्नित्, विशिष्टं ज्ञानं वेदार्थग्राहि, अग्नित् छान्दसो ह्रस्वः, यथाहि ऋत्विग्विशेषेणैधसाग्निः सन्दीप्यते, तथा वेदार्थज्ञानेनोत्तरोत्तरमध्यात्मचित्ताग्निः। वाचस्पतिर्होता, वाचस्पतिरन्तरात्मा, स होता चित्तिस्रुगादिप्रेरणात्, अथवा आह्वाता मनःप्रभृतीनामृत्विजां प्रेषयिताऽध्वर्युः। मन उपवक्ता, मन्यतेऽनुमन्यते इति मनोऽन्तर्यामी, स उपवक्ता ब्रह्मा। स हि यत् जीवात्मा जानाति करोति वा, तत् सर्वमनुवदत्यनुपश्यतीत्यादिरूपेण अनुमन्यते। प्राणो हविः, स हि परमात्माग्नौ हूयते, निरुद्ध्यात्क्रान्तिकाले ब्रह्मद्वारेण परब्रह्मणि प्रक्षिप्यते। सामाध्वर्युः, सामशब्दो व्यानवचनः, यथाहि अध्वर्युः सर्वर्त्विजो निजनिजकर्मसु प्रैषैर्नियच्छति, तथा व्यानाख्यो वायुर्नाभेरुपरि दशस्वङ्गुलेषु पुरुषस्थाने स्थितः प्राणापानौ स्वमर्यादायां स्थापयति परस्परविरुद्धगती। एतच्च योगसारे निर्णीतमस्माभिः। यदेव पुरुषस्य स्थानम्, तदेव व्यानस्य प्राणापानयोर्नियन्तुः। यदा होतृपदेन आह्वाता अध्वर्युरुच्यते, तदा भूतयज्ञादध्यात्मयज्ञस्य वैलक्षण्यप्रतीतिः प्रयोजनमध्वर्युद्वयप्रदर्शनस्य। इत्थं प्रजापतिना इन्द्रादिशब्दवाच्येन प्रद्युम्नाद्यवस्थाचतुष्टयविवर्तेन चतुर्होत्रा च दशविधमात्मानं कृत्वा, परमात्मनि समर्पणं कृतम्। तदाह - इन्द्रं गच्छ स्वाहा, हे प्राण इन्द्रं परमात्मानं गच्छ, सुहुतमस्तु स्वाहूतं वा। आह्वानस्य च शोभनत्वमनुष्ठापनपर्यवसानम्। एवमस्मदादयोऽपि ब्रह्मविवर्ता ब्रह्मपरिणामा वा संसारनिवृत्तिकामा अनुतिष्ठन्ति, कर्मकाण्डस्यापि च अद्वैतप्राप्तौ पर्यवसानमित्युक्तमस्माभिः साङ्ख्यसारशारीरकयोः। एवं तावदेकश्चतुर्होता व्याख्यातः।

अथ द्वितीयः।

**पृथिवी होता द्यौरध्वर्युस्त्वष्टाग्निर्मित्र उपवक्ता वाचस्पते वाचो वीर्येण सम्भृततमेनाऽऽयक्ष्यसे यज्ञपतये वार्यमा स्वस्करो वाचस्पतिः सोमं पिबतु, जजनदिन्द्रमिन्द्रियाय स्वाहा।।**

अनेन प्रजापतिरूपयज्ञस्याऽऽधिदैविकानि यज्ञसाधनान्युच्यन्ते। पृथिवी होता, सा हि आधिभौतिकयज्ञप्रजापतेरन्नादिहविर्दानेनाप्यायनं करोति। द्यौरध्वर्युः वृष्ट्यादिप्रेषणात्। त्वष्टा आदित्यः अग्नित् पक्तृत्वात्। मित्रो ह उपवक्ता ब्रह्मा त्रय्यर्थ-

बोधेनैव निर्मलेनालङ्कृतत्वात्। हे वाचस्पते प्रजापते चतुर्होतृरूप वाचो मन्त्रब्राह्मणात्मिकाया वीर्येण अर्थतत्त्वावबोधबलेन अतिशयसम्भृतेन मया त्वमायक्ष्यसे पूजयिष्यसे। स त्वमिष्टः सन् यज्ञपतये यजमानार्थं स्वः स्वर्गमाकरः आभिमुख्येन कुरु। कीदृशं स्वर्गम्। वार्यं वरणार्हम्। वाचस्पतिः प्रजापतिः सोमं पिबतु सोमशब्देन हविर्मात्रमत्र लक्ष्यते, पिबतिना च उपयोगः। जजनदिन्द्रम्, अनेन चातुर्होतृकेण कर्मणा प्रजापतिर्जनितवानिन्द्रमिन्द्रविवर्तम्। तथा च श्रुतिः - 'ते चतुर्होत्राः सोमं गृहपतये न्यषीदन्निन्द्रं जनयाम' इति, ते पृथिव्यादयः सोमं गृहपतिं कृत्वा, चतुर्होत्रा मन्त्रेण निषण्णा वेद्यामिन्द्रं जनयायेति। इन्द्रियामेति व्रतवीर्यसम्पत्त्यर्थमित्यर्थः। स्वाहेति व्याख्यातम्।

अथ तृतीयः। किमर्थं चतुर्होता -

**सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः।**
**श्रातास्त इन्द्र सोमा वातापे हवनश्रुतः स्वाहा।।**

सोमो लतारूपः, सोमस्य चन्द्रस्य पुरोगाः अग्रेसरः। शुक्रः प्रदर्श्यः सोमो वा शुक्रः शुक्रस्य ग्रहस्यासुरगुरोर्वा पुरोगाः। सोमाः श्राताः पक्काः आश्रिता वा। सोमशब्दो हविर्मात्र उपचारात्। उपचारनिमित्तं तु व्रतसम्पत्तौ क्रमेण सोमयागयोग्यताऽऽपत्तिः। हे वातापे वाताहार हवनश्रुतः आह्वानस्य श्रोतुस्तव सुहुतं स्वाहूतं वा अस्तु। बहुकर्मविनियोगभाजोऽमी चतुर्होतारो यथायोग्यं बह्वर्थयुजो योज्याः।

**अग्निर्होताश्विनाध्वर्यू रुद्रोग्निद्बृहस्पतिरुपवक्ता वाचस्पते हृद्विधे नामन्वाचस्पतिः सोममपादास्मासु नृम्णं धाः स्वाहा।।**

अयं पञ्चहोता 'ते पाञ्चहोत्रा वरुणबृहस्पतयो न्यषीदन्निन्द्रं जनयाम' इति ह्यस्य ब्राह्मणम्। अत्र चाधिदैविकेनाधियज्ञियानामेकत्वमुच्यते मन्त्रे। अग्निर्होता, तथा च श्रुतिः, 'अग्निर्वै देवानां होता' इति, मन्त्रलिङ्गमपि 'अग्निमीळे पुरोहितम्' इति। अश्विनौ देवभिषजौ अध्वर्यू अध्वर्युप्रतिप्रस्थातारौ। रुद्रोऽग्नित्, अग्नीध्रो रुद्रः। बृहस्पतिरुपवक्ता। हे वाचस्पते हृद्विधे नामन्, हृदि विधिर्हृद्विधिरन्तर्यामी, तस्य सम्बोधनं हे हृद्विधे, नामन् नाम्ना अन्तर्यामिन् त्वं वाचस्पतिः सोममपात् सोमपः अतः पिब सोममिहास्मासु अस्मभ्यं नृम्णं बलं च धाः देहि।

**वाग्घोता वातोऽध्वर्युर्दीक्षा पत्न्यापोऽभिगरो मनो हविस्तपसि जुहोमि वाचस्पतेऽच्छिद्रया वाचाऽच्छिद्रया जिह्वा दिवि देवाऽवृधद्धोत्रा मैरयस्व स्वाहा।।**

अयं षड्होता। अध्यात्मनि या वाक्, सैव होता। वातोऽध्वर्युः, प्राणोऽन्तरिक्षगतिर्वा। दीक्षा व्रतसिद्धिरूपा पत्नी। आपोऽभिगरः, शंसनमभिगरस्तत्राप एव कर्त्र्योऽन्नादिसम्पादनद्वारेण। मनो हविरात्माग्नौ हूयमानत्वात् तपसि ब्रह्मणि जुहोमि मनःप्रभृतिकं ब्रह्मणि प्रक्षिपामि। हे वाचस्पतेऽच्छिद्रया अविनाशिन्या वाचा अन्तःप्रकाशरूपया अच्छिद्रया जिह्वया हे दिवि देव मे मम ईरयस्व प्रेरयस्व सम्पादय कर्म। कीदृश्या वाचा। अवृधद्धोत्राऽदृष्टहोमादिसम्पादनभूतयेत्यर्थः।

**महाहविर्होता सत्यहविरध्वर्युरचित्तपाजा अग्निदचित्तमना उपवक्तानाधृष्यश्चाप्रतिधृष्यश्चाभिगरा अयास्य उद्गाता वाचस्पते विधे नामन्विधेम ते नाम विधेस्त्वमस्माकं नाम मा देवानां तन्तुश्छेदि मा मनुष्याणां स्वाहा।।**

अयं सप्तहोता मन्त्रः। 'ते साप्तहोत्रा अर्यमगृहपतयो न्यषीदन्सन्तरामि' इति ह्यस्य ब्राह्मणं, सन्तरणं ब्रह्मसम्प्राप्तिः। महाहविश्चन्द्रः सर्वैरुपजीव्यमानत्वादत एवास्य कलाक्षयः कृष्णपक्षे, स होता देवानां हविर्दानेनाप्यायकत्वात्। सत्यहविरादित्यः सततप्रेरणात्, सोऽध्वर्युः। अचित्तपाजा अग्नित्, चित्तप्रज्ञाशून्योऽग्नीद्वायुरग्नीध्र इत्यर्थः। एवमचित्तमना ज्ञानमनोविहीनो वन्यफलशाकादिरुपवक्ता। कीदृशः। अनाधृष्यश्चाप्रतिधृष्यश्च, अनभिभवनीयः, अतिशयाय भूयो वचनम्। अभिगराः, गृणातिः स्तुत्यर्थः। अयास्य उद्गाता, 'यसु-प्रयत्ने', अप्रयत्नसिद्धो वेदोपनिषद्रूप उद्गाता, स उद्गायति तत्त्वम्। हे वाचस्पते विधे नामन् विधेम ते तव नाम त्वन्नामार्थं यज्ञं कुर्म इत्यर्थः। यतश्च त्वमेवास्माकं नाम स्वरूपं, तेनास्माकं देवानां मनुष्याणां च मा तन्तुश्छेदि सन्ततिं मा च्छैत्सीः। सुहुतमस्तु तव।

**।। इति चातुर्होतृकमन्त्राः।।**

**ज्ञानानन्दमयं नुत्वा परमात्मानमच्युतम्।**
**प्रवर्ग्यव्रतमन्त्राणां भाष्यं प्रस्तूयतेऽधुना।।**

तत्र 'नमो वाचे' इत्याद्यनुवाकेन 'प्राच्या त्वा' इत्यादिना यजुश्चतुष्टयरहितेन 'दिव्यो गन्धर्वो भुवनस्य' इति, 'आहुस्ते भग' इति च द्वाभ्यामनुवाकाभ्यां शान्ति-

बन्धनं क्रियते। तस्य पुनः कुण्डे समभिमन्त्र्य स्थापनं प्रदर्शितानुवाकैः। ततः शान्तिविमोकोऽवश्यकर्तव्यः। एते च मन्त्रा मन्त्ररहस्यादौ सम्मार्जने च कुशला अपीह तावच्छान्तिबन्धाय योज्यन्ते।

नमो वाचे नमो वाचस्पतये या वागुदिता या चानुदिता तस्यै वाचे नमः नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रविद्भ्यो मा मामृषयो मन्त्रकृतो मन्त्रविदः परादुर्दैवीं वाचमुद्यासं शिवामजस्रां जुष्टां देवेभ्यः स्वधावतीं पितृभ्यः शुश्रूषेण्यां मनुष्येभ्यस्तं मां देवा अवन्तु शोभायै पितरोऽनुमदन्तु सुचक्षा अहमक्षिभ्यां सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासमों भूर्भुवः स्वः।

रुद्रस्यार्षम्। अभिधेयोऽर्थो देवता। या मन्त्रमयी वाक् तस्यै वाचे नमोऽस्तु। वाचस्पतये वाचां वचनरूपाणां पतिस्तस्मै उच्चारयित्रे नमः। या वागुपदिशन्ती सूक्ष्मा च तस्यै वाचे नमो नमः। नमःशब्दस्य पुनरुच्चारणमतिशयार्थम्। आभ्यां हि भूयांसमर्थं मन्यन्ते यथा अहो रमणीया अहो रमणीयेति। ये च ऋषयो मन्त्रविदो मन्त्रकृतश्च तेभ्यो नमो नमः। तत्र मन्त्रविदो ब्रह्मवक्त्रचतुष्टयतूर्णविनिर्गतान् मन्त्रान् सकृदेव गृह्णन्ति, ग्रन्थतोऽर्थतश्च सनकादयस्ते मन्त्रविदः। तथा चाऽरण्यकम् - 'यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य विनिःश्वसि तमेतद्यदृग्वेदो यजुर्वेदः सामवेदः' इति।

अन्यत्रापि - 'ये साक्षात्कृतधर्माण ऋषयो बभूवुस्ते परेभ्योऽसाक्षात्कृतधर्मभ्यो मन्त्रान् सम्प्रादुः' इत्यादि। मा मामृषयो मन्त्रकृतो मन्त्रविदः परादुर्दैवीं वाचम् इति, ये मन्त्रकृतो मन्त्रविदश्च ऋषयस्ते दैवीं वाचं मां मा परादुः, मामिति पञ्चम्यर्थे द्वितीया, मत्सकाशात् पराङ्मुखीं मा कार्षुः मन्त्ररूपां वाचम्। किन्तर्हि। दैवीं वाचमहमुद्यासं, 'या-प्रापणे', उत्कर्षेण प्राप्नुयामित्यर्थः। शिवां श्रेयस्करीम्, अजस्रां नित्यां, जुष्टां देवेभ्यः, देवेभ्यः प्रीतिजननीं, 'जुषी-प्रीतिसेवनयोः'। स्वधावतीं पितृभ्यः, पितृभ्योऽन्नवतीम्, मन्त्रैर्हि देवाः प्रीयन्ते पितरश्च स्वधां भजन्ते। शुश्रूषेण्यां मनुष्येभ्यः, श्रवणार्हां शुश्रूषेण्याम्। तमवम्भूतं मां स्तोतारं देवा अवन्तु, शोभायै शोभयोपलक्षितं सन्तं पितरश्चाऽवन्तु अनुमदन्तु अनुमाद्यन्तु, शोभायै देवाः पितरश्च हृष्टा भवन्तु। किञ्च देवपितृप्रसादादहमक्षिभ्यां सुचक्षा भूयासमक्षिभ्यां सुदर्शनः स्यामित्यर्थः, मुखेन च

सुवर्चा सुदीप्तिर्भूयासम्। ओंभूर्भुवः स्वरिति सङ्क्षेपेण वाग्विभव उक्तः भुवनत्रयस्य वाग्विभवविवर्तत्वात्।

**प्राच्या त्वा दिशाग्निना देवतया गायत्रेण छन्दसा वसन्तमृतुं प्रविशामि। दक्षिणया त्वा दिशेन्द्रेण देवतया त्रैष्टुभेन च्छन्दसा ग्रीष्ममृतुं प्रविशामि। प्रतीच्या त्वा दिशा सवित्रा देवतया जागतेन छन्दसा वर्षा ऋतुं प्रविशामि। उदीच्या त्वा दिशा मित्रावरुणाभ्यां देवतयाऽनुष्टुभेन च्छन्दसा शरदमृतुं प्रविशामि। ऊर्ध्वया त्वा दिशा बृहस्पतिना देवतया पाङ्क्तेन छन्दसा हेमन्तमृतुं प्रविशामि। अनया त्वा दिशा प्रजापतिना देवतया अनाप्तेन छन्दसा शिशिरमृतुं प्रविशामि। गायत्रीं छन्दः प्रविशामि। त्रिष्टुभं छन्दः प्रविशामि। जगतीं छन्दः प्रविशामि। अनुष्टुभं छन्दः प्रविशामि। पङ्क्तिं छन्दः प्रविशामि। अतिच्छन्दसां छन्दः प्रविशामि। छन्दांसि प्रविशामि। तानि नः पारयन्तु, तानि नोऽवन्तु, तानि स ऋच्छतु, योऽस्मान्द्वेष्टि यं च वयं द्विष्मः। आपोऽस्मान् प्रविशन्त्वापोऽस्मासु जाग्रत। आयुर्विश्वायुर्विश्वमायुर्व्यश्नवै सर्वमायुर्व्यश्नवै।।**

उदकावमर्षणप्रवृत्त एव तु छन्दःप्रभृतीनामुदकेन सहाभिन्नत्वमारोप्योदकमाह - हे उदक, त्वां वसन्तर्तुभूतमहं प्रविशामि, प्रस्तुतकर्मणा त्वामाराध्य त्वन्मयफलानि लभेयेत्यर्थः। केन प्रविशामि। प्राच्या दिशाग्निना देवतया गायत्रेण छन्दसा। एवमृतु-पञ्चकप्रवेशे वाक्यानि योजयितव्यानि। एवं गायत्रीं छन्दः प्रविशामीत्यादि। छन्दः प्रवेशवचनमात्मादिरक्षार्थं निर्भयस्थानप्रवेशपरत्वेन योजयितव्यम्। तानि छन्दांसि नोऽस्मान् पारयन्तु प्रस्तुतसमाप्तिं कुर्वन्तु। तानि नोऽवन्तु रक्षन्तु तर्पयन्तु च। तानि स ऋच्छतु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः, यं वयं द्विष्मो यश्चास्मान्द्वेष्टि, स तानि छन्दांसि ऋच्छतु, तानि छन्दःप्रभृतीनि प्राप्य, लीयतामित्यर्थः।

आपः अस्मान् प्रविशन्तु, अधिष्ठात्री देवता रक्षकत्वेन मामधितिष्ठत्वित्यर्थः। आपोऽस्मासु जाग्रत, हे आपः अस्मासु जाग्रत। आयुर्विश्वायुर्विश्वमायुर्व्यश्नवै सर्वमायुर्व्यश्नवै, अपां प्रसादात् आयुर्व्यश्नवै विशेषेण आप्नुयां विश्वायुर्विश्वमायुरित्यादि पुनर्वचनमतिशयार्थं पूर्ववत्।

**दिव्यो गन्धर्वो भुवनस्य यस्पतिरेकाव्यो मनसा विक्ष्वीड्यः। तं त्वा यामि ब्रह्मणा देव दैवी नमस्तेऽस्तु दिवि ते सधस्थम्।। दिवि पृष्टो यजत सूर्यत्वगवयातो हरसो दिव्यस्य। एकाव्यो मनुष्यः सुशेवः। मृळाद् गन्धर्वो भुवनस्य यस्पतिरनवद्याभिः**

**समजग्माभिरप्सरःस्वपि गन्धर्वम् आसीत्समुद्र आसां सदनं व आहुस्ततः सध्र्या च पराचरन्त्यभ्रिये दिद्युन्नक्षत्रिये या विश्वावसुं गन्धर्वं ससध्रे ताभ्यो नमो अस्तु ता नो मृडयन्तु ता नः शर्म यच्छन्तु ता यं द्विष्मो यश्च नो द्वेष्टि तमासां जम्भे दध्मः।।**

दिवि भवो दिव्यः, गा रश्मीन्धारयतीति गन्धर्वः, स एव रुद्रः इष्टः। स एव भुवनस्य पतिः। श्रूयते हि - 'इमे वै लोका भुवनं तेषामेषोऽधिपतिर्यो रुद्र' इति। एक एव अवति सर्वं रक्षतीत्येकाव्यः। मनसा विक्ष्वीड्यः, विक्षु देवसेनासु मध्ये स एव ईड्यः स्तुत्यः मनसा मननध्यानादिना आराधनीय इत्यर्थः, अथवा विक्ष्विति विभक्तिव्यत्ययः विशां मनुष्याणां मनसैवेड्यः, योऽसावन्तरादित्ये पुरुष औपनिषदः। हे देव द्योतनादिकर्मक तमेवम्भूतं त्वा भुवनाधिपतिभूतत्वात् अहं यामि प्राप्नोमि, ब्रह्मणा मन्त्रात्मकेन वेदेन वन्दमानः स्तुवान आयामि वा प्राप्तुमिच्छामीत्यर्थः। अतो नमस्तेऽस्तु यस्य ते दिवि सधस्थं स्थानं तस्मै। 'दिवि-पृष्टः' प्रवर्ग्यव्रतहोमारम्भार्थमिदमृत्विज उद्दिश्योच्यते। हे ऋत्विजः दिवि स्वर्गे पृष्टभूतोऽयमादित्यः सर्वदेवोत्तम इत्यर्थः। सूर्यत्वक् सूर्यस्य त्वगिव त्वक् यस्य स सूर्यत्वक् सूर्यान्तर्वर्ती पुरुष इत्यर्थः। अवयाः बाल्याद्यवस्थाशून्यो ब्रह्मणोऽनाद्यन्तत्वात्। अतोऽस्य दिव्यस्य हरसस्तेजोरूपस्य यजत हे ऋत्विजः, एकाव्यः, मनुष्षु मनुष्येषु मुमुक्षुषु साधुर्मनुष्यः, सुशेवः, शेव इति सुखनाम, नित्यानन्दस्वभाव इत्यर्थः, सुखसेव्यो वा। छान्दसो वर्णव्यत्ययः। सुशेवा इति केचित्पठन्ति। मृडात् मृडं सुखमत्तीति मृडात् नित्यसुखस्य भोक्ता। गन्धर्व इति व्याख्यातम्। काभिर्यजत। अनवद्याभिराहुतिभिः समजग्माभिः समं कृत्वा, अग्निं यान्तीभिः। अनेकर्त्विक्कर्तृकत्वाद्भाक्तं यौगपद्यम्। अप्सु सरतीत्यप्सरास्तास्वपि गन्धर्व आदित्य आसीदस्ति। अयमत्र विवेकः यदि कश्चिदाशङ्कते त्रेताया अभावादाहवनीयाः कथं ब्रह्मचारिव्रताहुतयस्तत्रेदमुक्तम्। जलचारिणीष्वप्याहुतिष्वाऽऽदित्योस्ति सर्वत्रगोऽसावित्यर्थः। अतो हे ऋत्विज आसां वो युष्माकं सम्बन्धिनीनामाहुतीनां समुद्रो मन्त्ररूपो वेदः सदनमाश्रयो गृहमाहुः, अतस्तद्बलेन लौकिकाग्नौ हूयन्ताम्। कास्ताः। या हुताः सत्यस्तत एव मन्त्रबलात्सध्र्या च सहैव यजमानेन पराचरन्ति। कुत्र। अभ्रियेऽभ्रच्छन्नेऽन्धतमसे अविद्यावृत इत्यर्थः। नक्षत्रिये प्रकाशे तत्त्वालोके ज्ञान इत्यर्थः। दिद्युत् अतिशयेन द्योतमाना अज्ञानाभ्रपटलमपसारयन्त्य इत्यर्थः। विश्वं सर्वं वासयति विश्वावसुस्तं गन्धर्वमादित्यं ससध्रे गच्छन्त यूयमपि हे

ऋत्विज इति प्रोत्साहना। ताभ्यो व्रताहुतिभ्यो नमोऽस्तु महाप्रभावाभ्यः। ताश्चास्मान् मृडयन्तु सुखयन्तु, तथा शर्म सुखं यच्छन्तु। पनरभिधानं निरतिशयमुक्तिसुखार्थम्। यं वयं द्विष्मो यश्चास्मान्द्वेष्टि, तं वयमासामाहुतीनां जम्भे स्थाने वह्नौ दद्मः क्षिपामः।

**आहुस्ते भग चक्षुषी ताभ्यां विपश्य मामभि। यदेतत्सारघं मधु तेन रूपमनज्मि ते तेन रूपमनग्धि मे।। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां देवानां क्रतुभिर्देवाभ्यञ्जनैरभ्यञ्जे भगवन्नामासि तस्य त ऋचश्च यजूंषि च सामानि च वागग्रा अन्यच्चक्षुः सूर्येऽन्यदग्रा अन्यद्भगवान्भूयासम्।। ऐरोऽसि चक्षुरसि श्रोत्रमसि पुरन्ध्रिर्नाम वागसि। येन शतक्रतुर्भागमुपजुह्वे तेन त्वोपह्वये भग।। तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम्। दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा सुमतिरवोचत्।। अग्निरीशो वासव्यस्याग्निर्महः सौभगस्य तान्यस्मभ्यं रासति।।**

अत्रापि च परमात्मैव रुद्ररूप आदित्योऽश्विनाऽग्निरूपेण स्तूयते। भजनीयः सेवनीयो भगो रुद्रः परमात्मा तस्य सम्बोधनम्, हे भग, तव चक्षुषी आहुर्वेदविदः चक्षुष्मन्तं त्वां वेदविद आहुः - 'तस्य सूर्याचन्द्रमसावेव चक्षुषी' इति श्रुतेस्ताभ्यां चक्षुर्भ्यां विशेषेण मामाभिमुख्येन चानुकूल्येन पश्य, अतिशयार्थं पुनर्वचनम्। सरघा मधुमक्षिका। तासामिदं सारघं यदेतत्प्रसिद्धं मधु, तेन तव रूपं तेजोमयमनज्मि, ते इति केचित्। सारं दृढं संसारं हन्तीति सारघं मधुरफलत्वात् मधु तत्त्वज्ञानम्, तेन ते चक्षुषी चन्द्रादित्यरूपेऽनज्मि, कृताञ्जने संस्कृते सम्पादयामि तत्त्वज्ञानविषयत्वमापादयामीत्यर्थः। तेन रूपमनग्धि मे, त्वमपि च मया विशोधितचक्षुर्ज्ञानकर्मभिर्मम यद्रूपं पारमार्थिकब्रह्मतत्त्वात्मकं तदनग्धि अञ्जनेन संस्कुरु विलीनाविद्योपप्लवं कुर्वित्यर्थः।

देवस्येति। हे रुद्र त्वामहमभ्यञ्जे देवानां सम्बन्धिभिरभ्यञ्जनैर्देवैर्द्योतनादिगुणकैः ऋषिभिर्वेदार्थाभ्यासकुशलैर्यैस्त्वमभ्यक्तो ज्ञानाहुतिप्रभृतिभिरित्यर्थः, देवस्य सवितुः प्रसवे आज्ञायां वर्तमानः, अश्विनोर्देवभिषजोर्बाहुभ्यां, न तु स्वाभ्यां चर्ममयाभ्यां, सूर्याचन्द्रमसावश्विनौ अश्वरथसञ्चारित्वात्, पूष्णः आदित्यस्य हस्ताभ्यां देवानां च। क्रतुभिराहुतिभिः प्रवर्ग्यव्रतहोमसम्बन्धिनीभिः। क्रामन्तीति क्रतवो नित्यकर्मज्ञानानीति साधारणी व्याख्या। हे रुद्र भगवन्नामासि सर्वस्याधिपतिस्त्वमित्यर्थः। तस्यैवम्भूतस्य तव ऋच ऋग्वेदः, यजूंषि यजुर्वेदः, सामानि सामवेदो वाक् वक्तीति वाक् त्रयी

तव वाचिका इत्यर्थः। त्वया वा प्रतिसर्गादिसुप्तप्रतिबुद्धनयेन स्मृतत्वात्तव त्रयी, तथा वाक्। अग्ना अन्यच्चक्षुः सूर्ये चान्यत्, काम्यकर्माहुतिभिः सन्तर्प्यतेऽग्नौ या दृष्टिस्तव, साऽन्या स्वर्गादिफलस्य दात्री। सूर्ये तु प्रकाशकैकस्वरूपे ध्यानादिना साक्षात्कृतेऽन्या मोक्षस्य दात्री याऽपि काम्यनिषिद्धरहितनित्यनैमित्तिककर्माहुतिभिः सन्तर्प्यतेऽग्नौ त्वदीयस्वभावान्तरे दृष्टिः सूर्ये च पूर्वोक्ता साऽप्यन्या, ज्ञानकर्मसमुच्चयादपि त्वं मोक्षं साधयसि गृहमेधिनामित्यर्थः, नैष्ठिकब्रह्मचर्यापेक्षया तु केवलज्ञानकृता मुक्तिर्व्यक्ततयोक्ता। अतोऽनेन व्रतेन भगवान्भूयासं ब्रह्मभूयं प्राप्नुयामित्यर्थः। ऐरोऽसि, इरा अन्नं तस्यायमैरोऽन्नाधिपतिरसीत्यर्थः। चक्षुरसि। श्रोत्रमसि। पुराणि लोकत्रय-समूहान्धारयतीति पुरन्ध्रिस्तन्नामिका वागसि त्रयीमयोऽसीत्यर्थः, यावन्तः प्रकाशका-भावास्तावन्त इत्यर्थः। हे भग रुद्र तेन मन्त्रेणाऽहं त्वामुपह्वये आह्वयामि, येन शतक्रतुरिन्द्रो भागं सोमादिहविषो दानमुपजुह्वे 'हु-दानादनयोः' ददौ, चखाद वेत्यर्थः। तद्वामिति तत् तस्मात् हे नरावश्विनौ सूर्याचन्द्रमसौ वा कल्पितभेदौ सनये विभजनाय इदं भागरूपं हविष आविष्करोमि। उग्रं बहुबलम्। क इव किम्। तन्यतुर्न वृष्टिं, न शब्द उपमायाम्, तन्यतुर्वायुर्मेघादिसन्तानभेदत्वात्, यथा वायुर्वृष्टिमाविष्करोति वैद्युतादितेजःसङ्क्षोभणेन। दध्यङ् ह यन्मध्वाथर्वण इति, अथर्वणोऽपत्यं दध्यङ्ङिति यस्य संज्ञा, स तथा वां युवामश्वस्य शीर्ष्णाऽश्वशीर्षो भूत्वा, आहूतवान् सुमतियुक्तः। किमर्थम्। मधु मधुने मोक्षायेत्यर्थः, मोक्षस्य नित्यानन्दसुन्दरमधुमयत्वात्, तद्वद-हमपि सुमतिरवोचत् युवामाह्वये इत्यर्थः।

अग्निरीश इति, अग्निर्वसव्यस्य ईशः, वसुनि साधु वसव्यम् हिरण्यप्रभृतिकं तस्याग्निरीश्वरः स्वामीत्यर्थः। अग्निर्महः, सौभगस्येश इति सम्बन्धः, महतः सौभाग्यस्याग्निः प्रभुरित्यर्थः। तानि वसव्यसौभाग्यानि अस्मभ्यं रासति ददात्यग्निः।

**अग्ने व्रतपते सम्राडसि व्रतपा असि व्रतभृदसि व्रतपतिरसि व्रतमालभे तत्ते प्रब्रवीमि तच्छकेयं तेनर्ध्यासम्। वायो व्रतपते०। सूर्य व्रतपते०।**

अग्ने व्रतपते इति, त्रिभिरग्निमुपतिष्ठमानो व्रतमालभते। हे अग्ने व्रतपते व्रतस्य प्रकृतस्य गोपायितः, असि त्वं सम्राड् सम्यग्राजसे, व्रतपा व्रतस्य पालयिता। व्रतभृदसि व्रतस्य पोषको भवसि। व्रतपतिरसि व्रतस्य स्वामी भवसि। यत एवम्भूतस्त्वमत उच्यते - अहं व्रतमालभे आरभे, तत्तस्मात्ते प्रब्रवीमि, तद्व्रतं

त्वत्प्रसादादाहं कर्तुं शक्नुयाम्, तेन च कर्मणः समृद्धिं फललक्षणां प्राप्नुयाम्। वायो व्रतपते०, सूर्य व्रतपते०, इत्येतावपि गतार्थावनेनैव।

**पृथिवी समित्तामग्निः समिन्धे तामहं समिन्धे सा मा समिद्धा सुषमिद्धा तेजसा वर्चसा यशसा ब्रह्मवर्चसेन समिन्ध्यात्।। अन्तरिक्षं समित्तां वायुः समिन्धे तामहं समिन्धे सा मा समिद्धा सुषमिद्धा तेजसा वर्चसा यशसा ब्रह्मवर्चसेन समिन्ध्यात्।। द्यौः समित्तां सूर्यः समिन्धे तामहं समिन्धे सा मा समिद्धा सुषमिद्धा तेजसा वर्चसा यशसा ब्रह्मवर्चसेन समिन्ध्यात्।।**

एतैस्त्रिभिर्यथाक्रममग्नौ तिस्रः समिध आदधाति व्रतसाहचर्यात्तिष्ठन्नेव, नासीनः। इयं प्रथमा। समित् पृथ्वी पार्थिवत्वात्। तां समिधमग्निः समिन्धे व्यत्ययेनोत्तमपुरुषः समिन्धते। तामहं समिन्धे दीपयामि। सा समिद्धा सुष्ठु समिद्धा सती मां ब्रह्मवर्चसादिभिः समिन्ध्यात् समिन्धेत्। एवं द्वितीया अन्तरिक्षमिव, तृतीया द्यौरिवेति समानम्।

**सूर्य व्रतपते सम्राडसि व्रतपा असि व्रतभृदसि व्रतपतिरसि व्रतमचारिषं तदशकं तत्ते प्रब्रूमस्तन्नो गोपाय।। वायो व्रतपते सम्राडसि व्रतपा असि व्रतभृदसि व्रतपतिरसि व्रतमचारिषं तदशकं तत्ते प्रब्रूमस्तन्नो गोपाय।। अग्ने व्रतपते सम्राडसि व्रतपा असि व्रतभृदसि व्रतपतिरसि व्रतमचारिषं तदशकं तत्ते प्रब्रूमस्तन्नो गोपाय।।**

एतैस्त्रिभिश्चूलिकाक्रमापूतैर्व्रतं विमुच्यते। अर्थस्तूक्त एव, क्रममात्रमेव भिद्यते साधारणपदेषु, तदचारिषं तदशकमिति तु विशेषः। तद्व्रतं चरितं त्वत्प्रसादान्मया, शकितं च, तत् सम्पन्नं सत् रक्षामात्रमेवापेक्षते। तस्मात् हे सूर्य वायो अग्ने तद्व्रतं नोऽस्माकं गोपाय रक्ष। व्रतविमोके समित्त्रयदानं कर्तव्यम्। तत्रापि च मन्त्राः समिदित्यादिचूलिकाक्रमेणेष्टाः समिदादानं च व्रतसाहचर्यात्तिष्ठतः।

उदुत्यमिति दशर्चेनानुवाकेन होमः।

**उदु त्यं जातवेदसं देवं वहन्ति केतवः।**
**दृशे विश्वाय सूर्यम्।।**

सन्ध्योपासने व्याख्यातेयम्।

**इममूषु त्वमस्मभ्यं सनिं गायत्रं नवीयांसम्।**
**अग्ने देवेषु प्रवोचात्।।**

प्रवोचादित्याख्यापने 'लोडर्थे लेट्', 'इतश्च लोपः परस्मैपदेषु' (३.४.९७) इतीकारलोपः, 'लेटोऽडाटौ' (३.४.९४)। ऊ इत्यनर्थकः, षु इति सुशब्द उपसर्गः, सनिशब्देन सम्बध्यते। हे अग्ने इमं होममस्मभ्यमस्माकं सम्बन्धिनं गायत्रम्, अनया गायत्र्या सम्पादितं होमं त्वं देवेषु प्रवोचात् प्रब्रूहि, यदुत युष्माकमयं होमो युष्मद्भोग्य इत्यर्थः। सुसनिं 'वन-षण-सम्भक्तौ' शोभनसंविभागं, नवीयांसमतिशयेन नवम्।

**समिन्द्र नो मनसा नेषि गोभिः सं सूरिभिर्हरिवः सं स्वस्त्या।**
**सं ब्रह्मणा देवकृतं यदस्ति सं देवानां सुमत्या यज्ञियानाम्।।**

हे इन्द्र हरिवः हरितवर्णाश्वयुक्त नोऽस्माकं मनसा संनेषि संनयसि संविभजसि, शोभनमननध्यानादिकं सम्प्रयच्छसीत्यर्थः। एवं गोभिः संनयसि, सूरिभिर्विद्वद्भिः ऋत्विग्भिर्यज्ञसहायैः संनयसि, स्वस्त्या अविनाशेन मोक्षप्राप्तिलक्षणेन संनयसि, तथा ब्रह्मणा वेदेन परमात्मना च संनयसि बह्मभूयं गमयसि देवकृतं यदन्यदप्युत्कृष्टमस्ति तेन संनयसि, देवानां बृहस्पतिप्रभृतीनां सम्बन्धिन्या सुमत्या शोभनया बुद्ध्या संनयस्यस्माकम्। कीदृशानाम्। यज्ञियानां यज्ञार्हाणाम्। यज्ञियानां देवानां सुमत्या संनयसीति वा सम्बन्धः।

**सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन।**
**त्वष्टा सुदत्रो विदधातु रायोऽनु नो मार्ष्टु तन्वो यद्विलिष्टम्।।**

हे इन्द्र वयं त्वत्प्रसादाद्वर्चसा दीप्त्या, पयसा तनूभिः शरीरैः स्वपुत्रादि-सम्बन्धिभिः समगन्महि सङ्गताः भूयास्म, शिवेन शान्तेन च मनसा समगन्महि। तथा त्वष्टा रायो धनं विदधातु नः, सुदत्रः शोभनदाता सुष्ठु वा दाता, यस्त्वष्टा अनु अनन्तरं नोऽस्माकं मार्ष्टु संशोधयतु अनुमार्ष्ट्विति वा सम्बन्धः। किमनुमार्ष्टु। यदनुमार्जनयोग्यं किल्बिषमर्थात्। कीदृशम्। विलिष्टं विलग्नमित्यर्थः इति केचित्। अयं त्वत्रार्थः, 'लिश-अल्पीभावे' नित्यनैमित्तिकाद्यनुष्ठानेन यद्विशेषेणाल्पीभूतं, तदेव हेलयैवानुमार्ष्टु त्वष्टेति।

**अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः।**
**अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततन्थ।।**

अग्निः प्रथमो जातवेदाः सर्गादावुत्पन्नो विना तद्रूपेण जातधनो जातप्रज्ञानश्च

उषसां रात्रीणामग्रमारम्भमन्वख्यदनुप्रकाशितवान् निर्मितवानित्यर्थः। ततोऽहानि दिवसानन्वख्यत्। ततः सूर्यस्य रश्मीनन्वख्यत्प्रख्यापितवान्। कीदृशोऽग्निः। पुरुत्रा पुरूणां बहूनां त्राता, यद्वा पुरुरेव पुरुत्रा 'पुरुदेवमनुष्येभ्यस्त्रा' (५.४.५६) इति त्राप्रत्ययस्तद्धितः। द्यावापृथिव्यौ चान्वाततन्थ विस्तारितवान्।

**या वां कशा मधुमत्यश्विना सूनृतावती।**
**तया यज्ञं मिमिक्षतम्।।**

हे अश्विनौ या वां युवयोः कशा वाक्, सा हि कशेव नियन्त्री चित्ताश्वानां, मधुमती मधुपरिणामा सूनृतावती सत्यवती तया यज्ञं व्रताङ्गभूतं मिमिक्षतं संमिश्रीकुरुतमिति केचित्। अयं त्वर्थः 'मिह-सेचने' सिञ्चतमाप्यायतमित्यर्थः।

**धाता दधातु नो रयिमीशानो जगतस्पतिः।**
**स नः पूर्णेन वावनत्।।**

धाता प्रजापतिर्नोऽस्मभ्यं रयिं धनं दधातु धारयतु वा। स हि ईशानः प्रभुः जगतो जङ्गमस्य त्रिलोक्या वा, जगतस्पतिर्जगतां पाता। स धाता नोऽस्माकं पूर्णेन अन्यूनेन संविभागेन वावनत् 'वन-षण-सम्भक्तौ' अतिशयेन संविभजतु।

**धाता प्रजानामुत राय ईशिषे धातेदं विश्वं भुवनं जजान।**
**संदाशुषे किरति भूरिवांसं वयं स्याम पतयो रयीणाम्।।**

धाता प्रजानामीशिषे ईष्टे। किं वा अल्पोक्त्या धातैवेदं विश्वं समग्रं भुवनत्रयं जजान जनितवान् जातवांश्च। धातैव दाशुषे दत्तवते यजमानाय संकिरति संददाति। किम्। भूरिवांसं प्रभूतमेव संविभजनीयं यज्ञफलादिकम्। अतो धातुः प्रसादाद्वयं रयीणां धनानां पतयः स्याम।

**त्रयस्त्रिंशत्तन्वतो यान्वितन्वत इमं यज्ञं स्वधया ये ददन्ते।**
**तेषां छिद्रं प्रतिदध्मो यदत्र स्वाहायं यज्ञो अप्येतु देवान्।।**

यज्ञं तन्वन्ति ये ते तन्तवो यजमानर्त्विक्प्रभृतयः। त्रयस्त्रिंशदिति तन्त्रं यथासम्भवोपलक्षणार्थत्वात्। यानिति व्यत्ययः। य इमं यज्ञं तन्वते स्वधया अन्नेन, ये ददते यज्ञं, व्यत्ययेन वा स्वधामन्नं ददते देवेभ्यो ये, तेषां छिद्रं व्रतविघ्नविधायि-फलाचरितादिकं तत्प्रतिदध्मः प्रतिविदध्महे विनिवारयामोऽनेन होमेन, यदत्र व्रते

किञ्चिद्विघ्नकारि वस्त्वऽनेन होमेन विनिवारयाम इत्यर्थः। स्वाहा सुहुतमस्तु। अयमपि यज्ञो देवानेतु गच्छतु।

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।**

**समूढमस्य पांसुरे।।**

विष्णुः प्रजापतिर्यज्ञादिरूपमिदं त्रैलोक्यं विचक्रमे विक्रान्तवान्। त्रेधा निदधे पदं, त्रिभिः पदैस्त्रिलोकीरूपेण विवृत्तः परिणतो वेत्यर्थः। समूढमस्य पांसुरे, चतुर्थं पदं चतुर्थचरणरूपमविवृत्तमपरिणतं च यदस्य तात्त्विकं ब्रह्मणो रूपम्, तत् पांसुरेऽ-विद्यया सुच्छन्ने समूढं सम्यग् ब्रुडितं नाऽयोगिभिर्गम्यते इत्यर्थः।

अत्र च `व्रतापवर्गे मा नो घर्मं' इत्यनुवाकेन प्रत्यृचमेकोनत्रिंशदाहुतयो होतव्याः।

**मा नो घर्म व्यथितो विव्यथो नो मा नः परमधामाह्रुतो नैः।**

**मोष्वस्मांस्तमस्यन्तराधा मा रुद्रियासो अभिकुर्वतो नः।।**

हे घर्म प्रवर्ग्यव्रत नोऽस्मान् व्यथितः सन् मा विव्यथः प्रमादजेनापराधेन वैगुण्यमापादितोऽपि सन्नस्माकं व्यथां मा कार्षीरित्यर्थः। मा नः परमधामाह्रुतो नैः, 'ह्वृ-कौटिल्ये', अह्रुतः अकुटिलः सन् परमधाम परमं स्थानं मृत्युगृहं मा नैः मा नैषीः। मोष्वस्मांस्तमस्यन्तराधाः, मा-उ-सु माशब्दो निषेधार्थः, उशब्दश्चार्थे, सुशब्दः तमःशब्देन सम्बध्यते। मा चास्मान्सुतमसि अन्धतमसे नरके आधाः क्षेप्सीः अन्तर्मध्ये। मा रुद्रियासो अभिकुर्वतो नः, रुद्रियासो रुद्रसम्बन्धिन्यः क्रूराः शक्तयो नोऽस्माक-मभिकुर्वतोऽस्मदाभिमुख्येन स्वकार्याणि मा कार्षुः, अक्रूरभावोऽस्तु।

**मा नः क्रतुभिरीळतेऽभिद्विषो अस्मान्सुनीते मापराधाः।**

**मा नो अग्निं निर्ऋतिमरातिं मा नो द्यावापृथिवी हेळते हेळयेथाम्।।**

रुद्रः प्रार्थ्यते। नोऽस्मान्येऽभिद्विषोऽभिमुखाः शत्रवस्ते क्रतुभिर्मा ईळते क्रतुकरणे प्रवृत्ताः सन्तः स्तुतिं मा कार्षुः, यथा प्रहृष्टो रुद्रस्तच्छत्रुत्वादस्मासु विरूपं कञ्चिदादधीतानिष्टमित्यर्थः। अस्मद्द्विषो याज्ञिका मा भूवन्नित्यर्थः। किं तर्हि। कुकर्माचरणेन स्वयं क्षीयन्तामित्यर्थः। अस्मान्सुनीते माऽपराधाः। हे सुनीते सुनीतिरिति बहुव्रीहिः, हे शोभननययुक्तेऽस्मान् माऽपराधा अपराधयोगिनो मा कृथा इत्यर्थः। मा

नो अग्निमित्यादि द्वितीया प्रथमार्थे, नोऽस्मानग्निर्मा हेलते, 'हेड़-अनादरे', अनादरं कोपमस्मासु मा कार्षीत्। एवं निर्ऋतिरतिर्मा हेळते इति योज्यम्। एवं द्यावापृथिव्यौ मा हेलयेथामिति समन्वयः कार्यः।

**अनु नो मित्रावरुणा इहावतामनुदीध्याना अभि नः सखायौ।**
**आदित्यानां प्रसृतिर्हृतिरुग्रा शिवा पाष्टा हविषः परिणो वृणक्तु।।**

मित्रमहः सर्वप्राण्युपकारित्वात्, वरुणो रात्रिकालः वरणात् तमसावरणात्। इह व्रतसमाप्तिकर्मणि मित्रावरुणावन्ववतां रक्षतां नोऽस्माकम्। कीदृशौ। अनुदीध्यानौ दीप्यमानौ तेजसाभिमुखौ, अस्माकं च सखायौ। तथा आदित्यानां सम्बन्धी प्रसृतिः प्रसारः करनिकरो नोऽस्माकं हविषः परिवृणक्तु हविष्यान्नादि वर्जयतु, अतिदीप्त-त्वात्सस्यप्रभृतीन्मा धाक्षीदित्यर्थः। यतोऽसौ हृतिः, हरति बलं तीव्रतयेति हृतिः, शिवा शान्ता भूयात्, यतः सा पाष्टा प्रष्ठा प्रधानभूता। 'प्रष्ठोऽग्रगामिनि' (८.३.९२) इत्यनुशासनात्, अतः उग्राऽपि सती प्रार्थनावशाच्छान्ता स्यादित्यर्थः।

**विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार।**
**देवस्य पश्य काव्यं महित्वा द्यां ममार सह्यः समानः।।**

रुद्र एवादित्यरूपेण स्तूयते। तस्मादाभ्यां जुहुम इति शेषः। देवस्य द्योत-नादादित्यस्य पश्य काव्यं क्रान्तिकर्म महित्वा महत्, यदेतदीयेन विक्रमेण सह्यः सहनार्हः सहभावो वा समानश्च ओजोरूपेण चन्द्रमाः द्यां दिवि ममार प्राणत्यागं कृतवानमावास्यायाम्। तथा ह्ययमादित्यः पलितो वृद्धः परितो वा सर्वतः युवानमपि कलापरिपूर्णं समर्थं जगार भक्षितवान् चन्द्रं विधुं विधावनक्रियायुक्तम् अत एव दद्राणं गच्छन्तं सततगतिम्। समने बहूनां, आदित्यरश्मीनां स्वकलानां सङ्गमे सति पौर्णमास्याम्। युवानमपीत्यन्वयः।

**ओं भूः स्वाहा। ओं भुवः स्वाहा। ओं स्वः स्वाहा। ओं भूर्भुवः स्वः स्वाहा।।**

**उदु त्यं जातवेदसं देवं वहन्ति केतवः।**
**दृशे विश्वाय सूर्यम्।।**

व्याख्यातेयम्।

**उद्वयन्तमसस्परि ज्योतिष्पश्यन्त उत्तरम्।**
**देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्।।**

इयमपि व्याख्याता।

**उदु तिष्ठ स्वध्वरावा नो देव्या कृपा दृशे च भासा।**
**बृहता सुसुक्कभिरग्ने याहि सुशस्तिभिः।।**

हे स्वध्वर शोभनाध्वर प्रवर्ग्यव्रत उदु तिष्ठ, उत्-उ-तिष्ठ, उशब्दः पादपूरणार्थः, उत्तिष्ठ, नोऽस्मान् अव रक्ष देव्या देवसम्बन्धिन्या कृपा सामर्थ्येन, बृहता महत्या भासा दीप्त्या, दृशे दर्शनाय। हे अग्ने त्वमपि याहि गच्छ सुशुक्कभिः शोभनाभिः शौर्यादिभिर्ज्वालाभिः, सुशस्तिभिः शोभनप्रशंसायुक्ताभिः शुभसूचिकाभिरुपलक्षित इत्यर्थः।

**ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता।**
**ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिः विह्वयामहे।।**

हे अग्ने त्वां वयं विह्वयामहे विविधमाह्वयामः। कैः। अञ्जिभिरभिव्यक्तैर्वाक्यैः। कीदृशैः वाघद्भिः वोढृतमैः संशोधनादिसमर्थैरित्यर्थः। यदिति यस्मादर्थे। यत ऊर्ध्वस्तिष्ठ ऊर्ध्वो भव। ऊ इति निपातोऽनर्थकः। सुशब्द उपसर्गः ऊतये इत्यनेन सम्बध्यते। किमर्थमूर्ध्वो भव। सूतये शोभनावनाय नोऽस्माकम्। देवो न सविता, नशब्द उपमायां, देव इव सविता त्वमूर्ध्वो वाजस्य अन्नस्य सनिता, 'वन-षण-संभक्तौ', संविभक्ता।

**पुनरूर्जा निवर्तस्व पुनरग्न इषाऽऽयुषा। पुनर्नः पाह्यंहसः।।**

हे अग्ने ऊर्जा आज्यलक्षणेन अन्नेनेष्टः सन्पुनर्निवर्तस्व, पुनरपि इषा ओदनलक्षणेन अन्नेनेष्टः सन्निवर्तस्व आयुषा युक्तः सन् हविषा वृद्ध इत्यर्थः, पुनरपि च नोऽस्मान् पाहि रक्ष अंहसः पापात्।।

**सह रय्या निवर्तस्व अग्ने पिन्वस्व धारया।**
**विश्वप्स्न्या विश्वतस्परि।।**

हे अग्ने निवर्तस्व, समाप्तेष्वपि व्रतेषु मा गाः रय्या धनेन सह, किञ्च

पिन्वस्व अस्मान् प्रीणीहि। कया। धारया धारयित्र्या शक्त्या। कीदृश्या। विश्वप्स्न्या सर्वस्योत्पत्तौ स्फीतया विश्वतस्परि सर्वस्योपरि स्थितया।

**धाता दधातु नो रयिमीशानो जगतस्पतिः स नः पूर्णेन वावनत्।।**

**धाता प्रजानामुत राय ईशिषे धातेदं विश्वं भुवनं जजान।**

**सं दाशुषे किरति भूरिवांसं वयं स्याम पतयो रयीणाम्।।**

**अग्न आयूंषि०। अग्ने पवस्व०। त्वं नो अग्ने०। स त्वं नो अग्ने०। वायुरग्रे गा०।**

एते सप्त मन्त्राः व्याख्याताः।

**प्र याभिर्यासि दाश्वांसमच्छा नियुद्भिर्वायविष्टये दुरोणे।**

**नि नो रयिं सुभोजसं युवस्व नि वीरं गव्यमश्व्यं च राधः।।**

हे वायो याभिर्नियुद्भिरश्वैस्त्वं प्रयासि गच्छसि, दाश्वांसं हविषो दातारं यजमानम्। किमर्थम्। इष्टये यजनाय, अच्छेति निपातोऽभिशब्दस्यार्थे वर्तते, अभिप्रयासि। त्वं ताभिर्नियुद्भिर्दुरोणे गृहे नोऽस्मान्नियुवस्व 'यु-मिश्रणे' नियोजय, रयिं धनं सुभोजसं शोभनान्नं च नो गृहे नियुवस्व, वीरं च पुत्रं नियुवस्व। कीदृशम्। गव्यं गोषु साधुम्, तथाऽश्व्यं राधश्च धनमश्व्यम्। पुनर्वचनमतिशयार्थम्। अभ्यासे हि भूयांसमर्थं मन्यन्ते यथाहो रमणीयाहो रमणीयेति।

**हिरण्यगर्भः०।। यः प्राणतः०।। य ओजोदा०।। येन द्यौरुग्रा०।। य इमे द्यावा०।। यस्य मे विश्व०।।**

एताः षट् व्याख्याताः।

**यं क्रन्दसी अपसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने।**

**यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम।।**

यं क्रन्दसीत्यस्याः अयमर्थः -

द्यावापृथिव्याभिधाना प्रसिद्धेयं याज्ञिकानाम्। यत्र सूर आदित्योऽभ्युदितो विभाति, तस्मै कस्मै प्रजापतये सर्वात्मने हविषा विधेम हविर्दध्मः, हविषोपचरामस्तमित्यर्थः। यं यत्र क्रन्दसी क्रन्दनयुक्ते घनस्तनितवेदाध्ययनशब्दवत्यौ द्यावापृथिव्यावपसा पापविहीनेऽभ्यैक्षेताम् यदधिष्ठाने सत्यौ कार्याणि निरूपयतः, मनसा

मननेन तस्तभानेऽवष्टम्भनयुक्ते अरेजमाने चाकम्पमाने च स्थावररूपे इति यावत्। यत्र सर्वं प्रतिष्ठितं, तस्मै प्रजापतये हविराज्यलक्षणं जुहुम इति तात्पर्यम्।

अत ऊर्ध्वं प्रवर्ग्यव्रते शान्तिविमोकः सिद्धः। स इहापि कर्तव्यः। तं व्याख्यास्यामः -

**आयुर्दा आयुर्मे देहि प्राणदाः प्राणं मे देहि व्यानदा व्यानं मे देहि अपानदा अपानं मे देहि चक्षुर्दाश्चक्षुर्मे देहि श्रोत्रदाः, श्रोत्रं मे देहि वर्चोदा वर्चो मे देहि आयुषे नः पुनर्देहि।।**

एतानि सप्त यजूंषि। सप्तानामपि च - 'आयुषे नः पुनर्देहि' इति साधारणोऽनुषङ्गः।

प्रवर्ग्यव्रतं, सर्वकर्मको वा प्रजापतिरुच्यते। हे प्रवर्ग्यव्रत प्रजापते वा, आयुषो दाता त्वम्, अत आयुर्मे मह्यं देहि। आयुषे नः पुनर्देहि, आयुष इति तादर्थ्यचतुर्थ्यन्तेन आयुर्लक्षणजीवननिमित्तानि नित्यकर्माण्युपलक्ष्यन्ते, नित्यनैमित्तिककर्मानुष्ठानार्थं पुनरायुर्मह्यं देहीत्यर्थः। एषां षण्णामपि यजुषां तुल्या दिक्।

**नमो रुद्राय दिविषदे यस्य वर्षमिषवस्तस्मै नमस्ते नमः समरे स मा मा हिंसीः।।**

आदित्योऽत्र रुद्रः। आदित्याय नमः। दिवि सीदतीति दिविषत् तस्मै। यस्य वर्षमिषवः, वृष्टिर्वर्षं धारासारो यस्य शरास्तस्मै पुनःपुनर्नमस्कारोऽस्तु। तेन च नमस्कारेण प्रसादितः संस्त्वं रुद्रो मा मा हिंसीः मां मा वधीः। द्वितीयस्य मा इत्यस्य। युष्मदादेशस्य प्रयोगोऽस्मदीयोपलक्षणार्थः, अस्मदीयांश्च पुत्रप्रभृतीन् मा हिंसीरित्यर्थः। समरे संग्रामे।

**नमो रुद्रायान्तरिक्षसदे यस्य वात इषवस्तस्मै०।।**

**नमो रुद्राय पृथिवीषदे यस्यान्नमिषवस्तस्मै०।।**

समानं पूर्वेण।

'ब्रह्मण उपस्तरणमसि' इत्यनुवाकं जपन्ति। ते जपन्तो 'मित्रस्य चर्षणी धृत' इति मैत्र्या प्रथमयाऽऽदित्यमवेक्षन्ते, अब्लिङ्गाभिश्चाप उपस्पृशन्ति।

**ब्रह्मण उपस्तरणमसि, ब्रह्मणे त्वोपस्तृणामीळायै वास्त्वसि, वास्तुमद्वास्तुमान्भूया वास्तुः स भूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः।।**

हे उदक असि त्वं ब्रह्मण उपस्तरणं, ब्रह्मा त्वामुपस्तीर्य बीजभूतमुप्त्वा लोकान् सृजति। यथोक्तम् - 'अप एव ससर्जादौ तासु वीर्यमथाक्षिपत्।।' इति वीर्यं शक्तिरुदकस्यैव तु सर्वकार्यनिमित्तत्वम्। ब्रह्मणे त्वोपस्तृणामि, ब्रह्मपदप्राप्तये त्वामहमुपस्पृशामि। इळायै च त्वामुपस्पृशामि, इळा अन्नं तच्च ब्रह्मपदार्थिनाप्यभ्यर्थनीयं तद्धेतुकनित्यकर्मादिसाध्यत्वादपवर्गस्य। वास्त्वसि गृहमसि सर्वाश्रयत्वात्, वास्तुमत् ब्रह्मा हि तव गृहमाश्रयभूतं वर्तते। वास्तुमान् भूयाः पुरुषव्यत्ययोऽत्र। त्वत्प्रसादादहं वास्तुमान् भूयासम् गृहवान्स्यां ब्रह्मभूयं प्राप्नुयामित्यर्थः। अवास्तुः स भूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः, सोऽप्रतिष्ठो भूयात्।

**प्रतिष्ठासि प्रतिष्ठा मे भूयादप्रतिष्ठः स भूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः।।**

प्रतिष्ठन्ते यत्र लोकाः स प्रतिष्ठा असि भवसि, उदक त्वमतो मम प्रतिष्ठा भूयात्। यस्तु अस्मान् द्वेष्टि यं च वयं द्विष्मः सोऽप्रतिष्ठो भूयात्।

**आ वात वाहि भेषजं वि वात वाहि यद्रपः।**
**त्वं हि विश्वस्य भेषजो देवानां दूत ईयसे।।**

हे वात भेषजं सत्कर्मफलं ब्रह्मप्राप्तिलक्षणमावाहि प्रापय, यद्रपः पापमविद्यालक्षणं तद्विवाहि अपसारय। यतस्त्वं सर्वस्य भेषजः औषधं संसारव्याधिबाधकत्वात्, तथा देवानां दूतश्च ईयसे सञ्चरसि कर्मानुष्ठानरूपैः फलैर्योजयसि। यत एवम्भूतस्त्वं तस्मादुच्यसे।

**यतदो वात ते गृहे निहितस्य निधिहितः।**
**ततो नो धेहि जीवसे ततो नो अभयं कृधि।।**

हे वात तव निधिहितो निधिमतो गृहे निहितस्य सर्वकर्मफलस्य यतः सम्भवः, तेनातः कर्मणो यद्भागधेयं, तन्नस्ततो निधेहि। यतद इति दकारस्य तकारश्छान्दसः। केचित्तु यदत इति पठन्ति। शताध्ययनस्याध्येतारः निधिर्हि स इत्यपि पठन्ति। स तव गृहे त्वनाश्रयत्वेन व्यवस्थितः प्रजापतिः सर्वफलविधानभूत इति तत्रार्थः। किमर्थं देहि भागधेयम्। जीवसे जीवनाय चिरतरोपभोग्यस्वर्गादिफलोपभोगायेत्यर्थः। ततो नोऽभयं कृधि, यदस्माभिः कर्म क्रियते ततोऽस्माकमभयं कृधि संसारतमोऽविद्यास्मितारागद्वेषाभिनिवेशलक्षणक्लेशभयनिवारणं कुर्वित्यर्थः। एवमपि

व्याचक्षते - हे वात तव यततो यतमानस्य गृहे यद्व्यवस्थितं फलं ततो निधेहि किञ्चिज्जीवनाय अभयाय इति।

**द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः।।**

हे अश्विनौ अस्मान् परिपातं समन्ताद्रक्षतम्। कैः। द्युभिर्दिवसैः। कीदृशैः। अक्तुभिरभिव्यक्तैः निरभ्रैरत एव सुभगैः, रिष्टं हिंसकं तद्रहितैररिष्टैः। यच्च किञ्चन वयं कुर्मस्तन्मामहन्तामतिशयेन पूजयन्तु। के ते। मित्रो वरुणोऽदितिः सिन्धुर्नदीसमुद्रलक्षणः पृथिवी उत द्यौः।

**पृथिवी शान्तिरन्तरिक्षं शान्तिर्द्यौः शान्तिर्दिशः शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिस्त्वयाहं शान्त्या सर्वशान्त्या मह्यं द्विपदे चतुष्पदे शान्तिं करोमि शान्तिर्नो अस्तु शान्तिरसि शान्तिः शान्तिः शान्तिः।।**

पृथिवी नोऽस्माकं शान्तिः 'अस्तु' इति सर्वत्राऽनुषङ्गः। अस्त्वित्यस्य चानुषक्तस्य बहुवचनान्तेषु वनस्पतिप्रभृतिषु विपरिणामः।

हे उदक त्वया शान्त्यात्मकेन सर्वशान्त्यात्मकेनाहं 'शान्तियुक्तो भूयासम्' इति शेषः। अतोऽहं मह्यं स्वार्थं द्विपदे पुत्राद्यर्थम्, चतुष्पदे गवाद्यर्थं शान्तिं करोमि। यतोऽसि त्वं शान्तिरतः शान्तिर्नो अस्तु, अविद्यादिक्लेशाः शाम्यन्तु नः इत्यर्थः। मुमुक्षुं प्रति शान्तिः शान्तिः शान्तिरिति अभ्यासोऽतिशयार्थः संसारक्लेशैकमयत्वप्रदर्शनार्थः।

**या वागुदिता या चानुदिता शिवा नः शंतमा भव, सुमृळीका सरस्वति मा ते व्योम संदृशि।।**

हे वाक् सरस्वति या त्वमुदितोच्चारिता वैखरीरूपा, या च अनुदिता अन्तःसञ्जल्पादिरूपा मध्यमा पश्यन्ती सूक्ष्मा च, सा नोऽस्माकं शिवा क्षेमकारिणी भव, शंतमा सुखतमा, सुमृळीका शोभनसुखा। अभ्यासोऽतिशयार्थः। मा ते व्योम संदृशि, व्योम छिद्रं ते तव व्योम छेदं मा द्राक्षं त्वद्विहीनः कदाचिदपि मा भूवमित्यर्थः, अविच्छिन्नस्थितिं च त्वां दिव्येन चक्षुषा जानीयामित्यर्थः।

**मित्रस्य त्वा चक्षुषा प्रेक्षे मित्रस्य त्वा चक्षुपान्वीक्षे।**
**सूर्यस्य त्वा चक्षुषा प्रेक्षे सूर्यस्य त्वा चक्षुषाभिवीक्षे।।**

हे वाक् त्वामहं मित्रस्य चक्षुषा प्रेक्षे, मित्रस्य चक्षुषान्वीक्षे मित्रदृष्ट्या अनुपश्यामीत्यर्थः। एवं सूर्यस्येति व्याख्येयम्। अभिशब्द आभिमुख्येऽत्र।

'मित्रस्य चर्षणीधृत' इति मैत्रीं जपन्नादित्यमीक्षते।

**मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसि।**
**द्युम्नं चित्रश्रवस्तमम्।।**

मित्रस्य सर्वप्रीतिकारिण आदित्यस्य श्रवो धनं रश्मिलक्षणम् अन्नादिहेतुत्वात् 'अहं वीक्षे' इति शेषः। कीदृशस्य मित्रस्य। चर्षणीधृतः चर्षणयो मनुष्यास्तेषां धारकस्य, देवस्य द्योतनादिधर्मकस्य। कीदृशं श्रवः। सानसि स्नेहकारि। उणादिषु स्नेहार्थ एव सानसिशब्दो निपातितः। द्युम्नं द्योतमानं यशोयुक्तमन्नयुक्तं वा। तथा च 'द्युम्नं द्योततेर्यशो वाऽन्नं वा' इति निरुक्तकारः। चित्रश्रवस्तमम् आश्चर्यभूततमधन-मित्यर्थः।

**मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसि।**
**सत्यं चित्रश्रवस्तमम्।।**

आत्मनैवैतां पठति। अत्र सत्यमेतावन्मात्रं विशेषः।।

'आपो हि ष्ठा' इत्यादयस्तिस्रः। ताश्च सम्मार्जने व्याख्याताः।

**आपः पृणीत भेषजं वरूथं तन्वो मम।**
**ज्योक् च सूर्यं दृशे।।**

हे आपः मम भेषजं हितकारि कर्म वेदाध्ययनादिकं कर्म पृणीत पूरयत। वरूथं तन्वो मम, मदीयायास्तनोः शरीरस्य यूयमेव वरूथं गृहमाश्रयः। ज्योक् चिरकालं च त्वत्प्रसादादहं सूर्यं दृशे पश्यन् भूयासम्।

**शं नो देवीरभीष्टय।**

इति व्याख्याता।

**शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा।**
**शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः।।**

मित्रादयोऽस्माकं सुखरूपाः सुखकरा भवन्त्वित्यर्थः। विष्णुरुरुक्रमः त्रैलोक्यस्य क्रमणे विततक्रम इत्यर्थः।

**शं नो मित्रः शं वरुणः शं नो अस्त्वर्यमा।**

**शं न इन्द्रश्चाग्निश्च शं नो विष्णुरुरुक्रमः।।**

अत्रास्त्विवति विशेषो देवताविशेषश्च।।

**त्यमूषु वाजिनं देवजूतं सहोवानं तरुतारं रथानाम्।**

**अरिष्टनेमिं पृतनाजमाशुं स्वस्तये ताक्ष्यमिहाह्वयेम।।**

त्यं तं ताक्ष्यं गरुडमिह स्वसन्निधौ आह्वयेम आह्वयामः, ऊ इति निपातोऽनर्थकः। षु इति सुशब्दः, सुवाजिनं शोभनकम्पनं देवजूतं देवानां प्रीतिकारणमभिमतं, सहोवानं, सह इति बलनाम, बलवन्तं, रथानामपि तरुतारं तारयितारमरिष्टनेमिमहिंसितगतिं, पृतनाजं पृतनानां परसेनानां जेतारम्, आशुं शीघ्रगतिम्। किमर्थमाह्वयामः, स्वस्तयेऽविनाशाय।

'कया नश्चित्र' इति वामदेव्यस्तृचः शान्त्यर्थ एवोच्चार्यते।

**कया नश्चित्र आ भुवदूती सदावृधः सखा।**

**कया शचिष्ठया वृता।।**

हे इन्द्र कया वृता वर्तनेन कर्मणा ऊतिरवनं संसारक्लेशनिवारणमाभुवत् आ समन्ताद्भवति। चित्रः, चित्रा आश्चर्यभूता परपुरुषार्थरूपेत्यर्थः। सदावृधः सर्वकालाश्च समृद्धयः कया वृता भवन्ति। सखा, एतदूतेर्विशेषणम्। शचिष्ठयेति वृतेत्यस्य विशेषणं शक्ततमयेत्यर्थः।

**कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदंहसः।**

**दृढा चिदारुजे वसु।।**

हे इन्द्र त्वा त्वां, मुक्त्वा इत्यध्याहारः, त्वां वर्जयित्वा कः सत्यः सत्यसङ्कल्पः। मदानां मंहिष्ठः नित्यानन्दात्मकहर्षयोग्यतया हृष्टानां मध्ये मंहिष्ठोऽतिशयेन पूजनीयः। अतस्त्वां मुक्त्वा कः सत्यः, यो अंहसः मत्सदंहसः माद्यत्पापस्य संसारक्लेशकारिणः सम्बन्धि वसु धनमनाद्यविद्यावासनात्मकं सामर्थ्यम् आरुजे आरुजति विनाशयति, दृढा चित्, सुदृढया चिता चैतन्येन विद्यारूपेणेत्यर्थः।

**अभी षु णः सखीनामविता जरितॄणां शतं भवास्यूतिभिः।।**

हे इन्द्र नोऽस्माकं सुखसीनां शोभनसमानख्यानानामविता, जरितॄणां स्तोतॄणा-

मभ्यविता आभिमुख्येन रक्षिता भवासि भव ऊतिभिः, शतशब्दोऽतिबाहुल्यलक्षणार्थः, अतिबह्वीभिरूतिभिरवनक्रियाभिरविता भवेत्यर्थः। भवासीति लोडर्थे लेट्।

**य उदगात्पुरस्तान्महतोऽर्णवाद्विभ्राजमानः सरिरस्य मध्ये।**
**स मा वृषभो रोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु।।**

स सूर्यो विपश्चिद्विद्यामयो मनसा मननेनाऽनुध्यानेन मां पुनातु पावयतु, यः पुरस्तात्पूर्वस्यां दिशि उदगादुदितः महतोऽर्णवात्समुद्रात्। विशेषेण भ्राजमानो दीप्यमानः सरिरस्य सरणमार्गस्याऽन्तरिक्षस्य मध्ये। वृषभः कामानां वर्षयिता, वृषभो वा सर्वज्योतिषामुत्कृष्टः। रोहिताक्षः लोहितलोचनः कनकनयनः।

**यद्ब्रह्मावादिष्म तन्मा मा हासीत्सूर्याय विभ्रजाय वै नमो नमः।।**

यद्ब्रह्म वेदमवादिष्म पठितवन्तो वयं तन्मा हासीन्मा त्याक्षीत्। सूर्याय विशेषेण भ्राजमानाय पुनः पुनः नमस्कारोऽस्तु। शान्तिविमोकः।

**आपमापमपः सर्वा अस्मादस्मादितोऽमुतः।**
**अग्निर्वायुश्च सूर्यश्च सह सञ्चस्करुर्धिया।।**

औपनिषदाः परमरहस्यमन्त्रा अमी परमाः पावनाः संसारघोरसागरसन्तरणोपायाः प्रायः सर्वत्र समर्थाः, प्रवर्ग्यव्रतेऽपि शान्तिप्रस्तावोपयोगिन आपमापमित्यादय इतीहावश्यं विवरणीयाः। अपः पात्रे निधायोपस्तौति - सर्वा अप अहमापमापं प्राप्तवान्। अभ्यासोऽतिशयार्थः। अस्मादस्मादितोऽमुतः, अस्मादिति प्रत्यक्षनद्यादिजलाशयनिर्देशः, अमुत इति परोक्षाधाराभिधानम्। अभ्यासः साकल्यार्थः। एता अपः सर्वा अग्निवायुसूर्याः सञ्चस्करुः संस्कृतवन्तः। धिया प्रज्ञया।

**वाय्वश्वा रश्मिपतयो मरीच्यात्मानो अद्रुहः।**
**देवीर्भुवनसूवरीः पुत्रवत्त्वा इमेऽसुवः।।**

वायुवदश्वा व्यापकाः। के। रश्मिपतयः। रश्मयश्च ते पतयः पालकाः अपां, रश्मय एव ह्यब्गर्भाः सन्तो मेघा भवन्ति। अतश्च मरीच्यात्मानः, आपो मरीच्यन्तर्वर्तित्वेन स्थिता इत्यर्थः। अद्रुहः सूक्ष्मरूपेण मरीचिमध्यगता अपि द्रोहशून्या अनुपहिंसिका इत्यर्थः। देवीः देव्य आपः। भुवनस्य भुवनानां सूवरीः सूवर्यः प्रसवशीलाः। इमे इमान् लोकान् असुवः सूतवत्यः। पुत्रवत्त्वै पुत्राणां जीवात्मनामवत्वै अवनाय संसारक्लेशशान्तये।

**महानाम्नीर्महामाना महायामा महासोमासः।**
**देवीः पर्जन्यसूवरीः पुत्रवत्त्वा इमं सुव।।**

महानाम्नीभिर्ऋग्भिरुदकमुच्यते। ऋचश्च महानाम्न्यः तदभिधानादापस्तथा, महद्यतो नाम आसामपामिति, महाप्रभावा इत्यर्थः। अत एव च महामाना, बृहत्या पूजया युक्ताः। महायामा महापरिमाणाः। तथा महासोमासः, ताभिरेव ह्यभिषुतः सोमो यागयोग्यो भवति। एवम्भूताश्च पर्जन्यसूवरीः पर्जन्यस्य मेघस्य सवित्र्यः। पुत्रवत्त्वा इमं सुव, इमं ब्रह्मचारिणं पुत्रवत्त्वाय सुव पुत्रजननयोग्यं सम्पादय।

**अपाश्नुष्टिमपारक्षमपाश्नुष्टिमपारसम्।**
**अपाघमनुजावर्ति मम देवीर्ऋते हिताः।।**

अप इति षष्ठीबहुवचनस्य सुपां सुबित्यादेशः। स्नुष्टिरेकदेशः। स्पृशामीत्यध्याहारः। अपामेकदेशं स्पृशामीत्यर्थः। उद्धृत्य हि जलैकदेशोऽत्राभिमन्त्र्यत इत्युक्तम्। एवमपां रक्षकमंशमुद्धृतं स्पृशामि, अपां रसं सारम्। अपाघमनुजावर्ति, अपामघं पापं स्पृशाम्यपसारयामि। सद्भावेऽप्सु पापस्य प्रमाणमाह - अनुजावर्ति, अपामनुजा जीवात्मानस्तज्जन्यत्वात्, तेष्वावर्तमानमघमशुचित्वं कारणेऽप्यनुवृत्तिं गमयति, घटादिगतमिव गन्धादि मृत्पिण्डादिके। अतो वर्तमानम् अघम् आसामुद्धृत्य मन्त्रैः पावनं शान्त्यादौ। मम देवीर्ऋते हिताः, मम ऋते हिता मम ऋते यज्ञे सत्ये च हिताः। अथवा मम देव्यो हिता आपः, यथा ऋतो यज्ञो हितो मम, ऋतः सत्यशब्दो वा।

**वज्रं देवीरुदिताः स्थ वरुणं देवसूवरीः।**
**आदित्यानुदितं देवीर्योनिनोर्ध्वमुदीषत।।**

यूयं पापनिवारणाय वज्रमिवोदिताः स्थ भवथ। यतो वरुणस्य दोषनिवारकस्य देवस्य सूवर्यो यूयम्। आदित्यानुदितं कर्म व्रतादिकं काम्यं च, तस्य कर्तारं हे देव्य ऊर्ध्वमुदीषत सर्वोत्कृष्टं सम्पादयतेत्यर्थः, योनिना स्वजन्मनिमित्तेन परब्रह्मशक्त्येत्यर्थः।

एवमादयो मन्त्रा बहुशक्तयः शान्तिविमोकेऽप्युपयोगिनः।

**भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षिभिर्यजत्राः।**
**स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः।।**

एवमादयो जपमन्त्राः शान्त्युपयोगिनः। हे देवा वयं कर्णैर्भद्रं बन्धनीयं कल्याणं

शृणुयामः ब्रह्मप्राप्तिपर्यवसायि वेदान्तादिकम्। हे यजत्राः यष्टॄणां त्रातारोऽक्षिभिर्नेत्रैर्भद्रं पश्येम। तथा स्थिरैरविनाशिभिरङ्गैः करचरणादिभिरुपलक्षिताः सन्तस्तुष्टुवांसस्तुवन्तो देवहितं देवेषु निहितं यदायुः, तत् व्यशेम विशेषेणाश्नुवाम तनूभिः शरीरैः।

**स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।**
**स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु।।**

इन्द्रो वृद्धश्रवाः वृद्धधनः बहुधनो नोऽस्मभ्यं स्वस्तिं अविनाशं दधातु ददातु धारयतु वा। एवं पूषा आदित्यो विश्ववेदाः सर्वज्ञः स्वस्ति नो ददातु। तार्क्ष्यो गरुत्मानरिष्टनेमिः, 'रिष्ट-हिंसाकर्मा', अरिष्टोऽनुपहिंसितः नेमिरास्पदं स्थानं यस्य सः, अनुपहिंसितास्पदः। प्रान्तो वा नेमिरहिंसितमर्यादः केनाप्यनुल्लङ्घित इत्यर्थः। बृहस्पतिर्देवगुरुश्चास्मभ्यं स्वस्ति दधातु धारयतु वा।

**केतवोऽरुणाः सश्चर्षणयो वातरशनाः प्रतिष्ठां शतधाय समाहिता अथो सहस्रधायसम्।।**

केतुसंज्ञका अरुणवर्णा ज्ञातारो वातमेखला शतधाय समाहिताः समाश्रिताः प्रतिष्ठां समाधिस्थैर्यादिकं शरीरगतेष्वनुभूय ततो मोक्षं गता इत्यर्थः। शतधायेति यकारोऽनर्थकः। अथो सहस्रधायसं, सहस्रधा इत्यर्थः, चिरतरलभ्यो मोक्ष इत्यर्थः। तथा च स्मृतिः - 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।' इति।

**शिवा नः शंतमा भवाथ दिव्या आप ओषधयो वनस्पतयः।।**

नोऽस्माकं शिवाः क्षेमकारिण्यः शंतमाश्च सुखतमा यूयं भवथ।

**सुमृळीका सरस्वति मा ते व्योम संदृशि।।**

अनेन भूमिमालभते। हे सरस्वति उदकवति सुमृळीका सुसुखदा भव, मा ते तव व्योम विच्छेदविप्लवं दस्युप्रभृतिकृतं द्राक्षम्।

**।। इत्यरुणमन्त्रविवृतिः।।**

नैष्ठिकब्रह्मचारिणो व्रतमुक्तमधुना मन्त्रार्थो विव्रियते। तत्र शताध्ययन उपनिषत्त्वेन प्रसिद्धेष्वनुवाकेषु पञ्चदशसु प्रथमैकादशद्वादशानामिहोपयोगोऽस्ति। प्रथमस्य विघ्नशान्तौ, एकादशस्य शिष्यानुशासने, द्वादशस्यापि शान्तौ। तत्र प्रथम-द्वादशौ तावत् -

**शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा।**
**शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः।।**

**नमो ब्रह्मणे नमो वायवे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्म वदिष्याम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारं शान्तिः शान्तिः शान्तिः।।**

मित्रादयोऽत्राध्यात्मिक्यो देवताः। तथा च श्रुतिः - 'प्राणो वै मित्रोऽपानो वरुणः' इति। परमात्मविवर्तास्तत्परिणामा वा जगत्सूत्रप्राणप्रभृतयस्तदधिष्ठात्र्यो देवता मित्रादयः। एवं चक्षुषोऽधिष्ठाता देवताविशेषः अर्यमा। अरीन् स्वाध्याया-दिविरोधिनः नियच्छति यः सोऽर्यमा। नोऽस्माकं मित्रः शं सुखं भवतु, सुखमस्माकं भावयत्वित्यर्थः। एवं वरुणादिष्वपि योज्यम्। विष्णुर्व्यापकोऽन्तर्यामी उरुक्रमो बृहत्क्रमः। नमो ब्रह्मणे, परमात्मने नमस्कारोऽस्तु। एवं वायवे वायुरूपाय जगत्सूत्र-भूताय नमस्कारोऽस्तु। हे वायो नमस्तेऽस्तु। परोक्षेण स्तुत्वा, प्रत्यक्षेण स्तौति - हे वायो त्वमेव प्रत्यक्षं ब्रह्मासि भवसि, नाभेरुत्थितस्त्वमेव वेदरूपेण प्रत्यक्षेण विव-र्तसे विपरिणमसे वेत्यर्थः। अतस्त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि, यतस्त्वमेव प्रत्यक्षं ब्रह्म। त्वामेव ऋतं वदिष्यामि सत्यं च।

इह समुच्चीयमाने मोक्षोपायभूते ज्ञानकर्मणी ऋतशब्देनोक्ते, तदितिकर्तव्यता तु सत्यशब्देन। अथवा ऋतसत्यशब्दयोरेकार्थत्वात्पुनर्वचनमतिशयार्थम्। तदृतं च सत्यं च मामवतु, वक्तारमवतु। पुनर्वचनं पूर्ववत्। अथवा मामवतु वक्तारं, प्रवक्तारं चोपाध्यायम्। शान्तिः शान्तिः शान्तिरित्यस्तु विघ्नानामिति शेषः। त्रिर्वचनं संसारस्य विघ्नभूयस्त्वादतिशयार्थम्। एष प्रथमोऽनुवाकः।

**शं नो मित्रः शं वरुणः शं नो अस्त्वर्यमा शं न इन्द्रश्चाग्निश्च शं नो विष्णुरुरुक्रमः।। नमो ब्रह्मणे नमो वायवे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्मावादिषमृतमवादिषं सत्यमवादिषं तन्मामावीत्तद्वक्तारमावीदावीन्मामावीद्वक्तारं शान्तिः शान्तिः शान्तिः।।**

अत्र प्रथमाद्देवतामात्रं विशिष्यतेऽतीतकालता च।

**सह ना अवतु सह नौ भुनक्तु सह वीर्यं करवावहै ।**
**तेजस्विना अधीतमस्तु मा विद्विषावहै शान्तिः शान्तिः शान्तिः।।**

इदं शिष्योपाध्यायौ सह ब्रूतः, अन्यत्र तु दम्पती अपि। मित्रादिदेवतागणौ नौ आवां शिष्योपाध्यायौ कर्मभूताववतु रक्षतु सह स्थितौ, तथा भुनक्तु पालयतु भोजयतु वा नित्यानन्दरूपमपवर्गफलम्। सहैव च स्थितौ वीर्यं वेदाभ्याससमुद्भूतमतिनैर्मल्यलक्षणं करवावहै कुर्वहे। तेजस्विनौ अभिभवितुं केनाप्यशक्यौ। यदधीतं, तदावयोरस्तु स्थिरम्। मा विद्विषावहै, आवयोरन्योन्यं विद्वेषो मा भूत्। शान्तिरिति व्याख्यातम्। एवमावापस्थाने शान्तिं कृत्वा, शिष्यं मेधावित्वमनिराकरिष्णुत्वं च कामयमानमाचार्यो वाचयेदृग्द्वयम्।

**यश्छन्दसामृषभो विश्ववेदाश्छन्दोभ्योऽध्यमृतात्सम्बभूव।**
**स मामिन्द्रो मेधया स्पृणोत्वमृतस्य वेदधारणो भूयासम्।।**

शरीरं मे विचक्षणं वाङ्मे मधुमद्दुहे। कर्णाभ्यां भूरि सुश्रवं ब्रह्मणः कोशोऽस्मि मेधया पिहितः श्रुतं मे गोपाय।

मन्त्रवर्णाज्जपमात्रादेव मेधादिफलं धारणशक्तिरनिराकरिष्णुता तां च प्राप्नोति। यः छन्दसां वेदानाम् ऋषभो वर्षिता कामानां प्रधानभूतो वा ओंकारः विश्ववेदाः सर्वज्ञः सर्वधनो वा, छन्दोभ्यो वेदान्तेभ्योऽमृतरूपोऽधिबभूव। अविद्यावशेन द्वैतापन्नो वेदान्तार्थानुष्ठानेन सर्ववेदार्थानुष्ठानेन वा ज्ञानकर्मसमुच्चयेनाधिकामृतरूपो नित्यानन्दाद्वैतरूपो भवतीत्यर्थः। स इन्द्रः प्रजापतिः मा मां मेधया स्पृणोतु प्रीणातु। अमृतस्यामृतत्वाय मोक्षायाहं वेदधारणशक्तियुक्तः स्याम्। अनिराकरिष्णुताप्यत्रोक्ता। तथा मम शरीरं विचक्षणं मोक्षोपायानुष्ठानचतुरं भूयात्। वाक् च वेदयुक्ता मधुमत् मधुररसयुक्तं कर्मफलं दुहे दोग्धु। कर्णाभ्यां भूरि बहु चिरं सुश्रवं शोभनं शृणुयां वेदान्तरूपम्। ब्रह्मणो वेदस्याहं कोशो वेदार्थज्ञानरत्ननिचयभाण्डागारं भूयासम्। भाण्डागारं च पिधानेन स्थगितं भवतीत्याह - मेधया प्रज्ञाजनितसंस्कारेण पिहित आच्छादितो रक्षितः दृढसंस्कारवशेन वेदार्थस्याविस्मरणात्। श्रुतं मे गोपाय, मम श्रुतं च रक्ष परप्रयोजनयुक्तं कुर्वित्यर्थः।

श्रीकामः 'आवहन्ती वितन्वाना' इत्यादिभिर्जुहुयात्।

**आवहन्ती वितन्वाना कुर्वाणा वरमात्मनः।**
**वासांसि मम गावश्चान्नपानेन वर्धय।।**
**अतो मे श्रियमावह लोमशां पशुभिः सह स्वाहा।।**

ऋग्यजुषाभ्यामाभ्यां द्वे आहुती जुहुयात्। एकामित्येके, ऋग्यजुषान्त एकस्वाहाकारात्। अन्याश्चाहुतयोऽत्र पूर्वव्याख्यातैः स्त्रीलिङ्गकैर्मन्त्रैर्होतव्याः। हे श्रीः मम वासांसि गाश्चाऽन्नपानेन सह वर्धय। किं कुर्वती। आवहन्ती प्रापयन्ती ढौकयन्ती। वितन्वाना विविधं विशेषेण वा विस्तारयन्ती। आत्मनश्च वरं कुर्वाणा वरणीयं वरमुत्कृष्टं मणिकनकादिकमात्मसम्बन्धितया कुर्वाणा। अतो मे श्रियमावह, यस्मात्सम्यगधीतवेदोऽहमुपाध्यायावश्यदेयदक्षिणायोग्यतोपनतार्थिविशेषो वा, ततो हेतोर्लोमशां लोमशाजाविप्रभृतिभिर्विभूषितां पशुभिरश्वादिभिः सह। उपकुर्वाणकस्यैतदुक्तमित्याहुः।

यशस्काम 'आ मा यन्तु' इत्यष्टाभिर्जुहुयात्। यद्याचार्यो जुहोति, अथापि ब्रह्मचारी, उभयथा ब्रह्मचारिणः फलं तदुद्देशेन कर्मकरणात्।

**आ मा यन्तु ब्रह्मचारिणः स्वाहा। सं मा यन्तु ब्रह्मचारिणः स्वाहा। तपोयशोयशानि स्वाहा। जनोयशोयशानि स्वाहा। तं त्वा भग प्रविशामि स्वाहा। स मा भग प्रविश स्वाहा। श्रेयान्वसो यशोयशानि स्वाहा। अस्मिन्सहस्रशाखे विभजाहं त्वयि मृजे स्वाहा।।**

ये ब्रह्मचारिणो धर्माः सिद्धयश्च ते मा माम् आयान्तु। प्रजापतिरेवमभ्यर्थ्यते। तदर्थं च सुहुतमस्तु। एवं सम्यगायान्तु मां ये ब्रह्मचारिणः सम्बन्धिनो यमनियमादयः। तपोयशोयशानि स्वाहा, तपांस्येव यशःप्रकाराः तपोयशोयशानि तपोयशोयशांसि समायान्तु, 'प्रकारे गुणवचनस्य' (८.१.१२) इति द्विर्वचनम्। तदर्थं च सुहुतमस्तु। तपोलोके वा स्वर्गविशेषे ये यशःप्रकारास्ते समायान्त्वित्यर्थः। एवं जनोयशोयशानि स्वाहेति व्याख्येयम्। तं त्वा भगेति, हे भग भजनीय ब्रह्मन् त्वामहं प्रविशामि। स मा भगेति, स त्वं हे भग मां प्रविश। श्रेयान्वसो यशोयशानि स्वाहा, हे वसो वासयितः धनद त्वं श्रेयान् प्रशस्योऽतिशयेन, अतस्त्वत्प्रसादान्मां यशांसि प्रविशन्तु तदर्थं च सुहुतमस्तु। अस्मिन्सहस्रेति, अस्मिन्बहुशाखे यजुर्वेदे ब्रह्मविभवोपनिषत्पथे वा विभज विभागयोगिनं कुरु। अहं त्वयि विषयभूते हे ब्रह्मन् मृजे आत्मानं शोधयामि, विगतनिखिलमलं सम्पादयामि ब्रह्मणि क्षीणं, तदर्थं तु सुहुतमस्तु।

आरण्यकव्रतपद्धतिपर्यवसाने त्विदं कार्यम्।

वेदमनूच्याऽऽचार्योऽन्तेवासिनमनुशास्ति इदं कर्तव्यमिदमकर्तव्यमित्यौपनिषदैकादशानुवाकेन। एकादशानुवाकस्तु -

**सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमद। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छैत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। यत्नान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्। यज्ञाद्देवपितृकार्येभ्यो न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि तानि त्वया कर्तव्यानि नो इतराणि। अथ यान्यस्माकं सुचरितानि तानि त्वया कर्तव्यानि नो इतराणि। अथ ये केचनास्मच्छ्रेयांसो ब्राह्मणा आगच्छेरन् तेषां त्वयाऽऽसनेन प्रश्रयितव्यम्। श्रद्धया देयमश्रद्धया देयम्। संविदा देयमसंविदा देयम्। ह्रिया देयम्। भिया देयम्। वित्त्यै देयम्। अवित्त्यै देयम्। भूत्यै देयम्। अभूत्यै देयम्। अथ यदि ते कर्मविचिकित्सा वृत्तिविचिकित्सा वा स्याद्ये तत्र ब्राह्मणाः संमार्शिनो युक्ता आयुक्ता अलक्षा अलुब्धा धर्मकामा वा स्युर्यथा ते तत्र वर्तेरंस्तथा त्वं तेषु वर्तेथाः। अथाऽभ्याख्यातेषु ये तत्र ब्राह्मणाः संमर्शिनो युक्ता आयुक्ता अलक्षा अलुब्धा धर्मकामा वा स्युर्यथा ते तत्र वर्तेरंस्तथा त्वं तत्र वर्तेथाः। एष आदेश एष उपदेश एषा वेदोपनिषदेतदनुशासनमेतदुपास्यम्।**

उपनिषत्संहितामधीत्यैवेदमुच्यते। आचार्य एकादशानुवाकाभिहितां नीति-मुपनिषदध्ययनान्ते ग्राहयति, अत एव 'वेदाध्ययनानन्तरमेव धर्मजिज्ञासा कर्तव्या' इति, जैमिनिमुनिना निगदितम्। यत एकादशानुवाकारम्भ एव 'वेदमनूच्य' इति श्रुतिरप्यस्ति मूलभूता। वेदसमुत्थ एव हि न्यायः प्रमाणम्। यत्रोच्यते -

'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः।।' इति।

अवेदमूलस्तु मानुषमतिमात्रकल्पितः कुतर्को धर्माधर्मौ प्रति न प्रमाणं, यथा सौगतबार्हस्पत्यकल्पः। यत्रेदमुच्यते -

'पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः।।'

'तर्कोऽप्रतिष्ठः स्मृतयो विभिन्ना
नासावृषिर्यस्य मतं न भिन्नम्।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः।।'

'हस्तस्पर्शादिवान्धेन' इति।

हे ब्रह्मचारिन् सत्यं वद, सत्यं पुनः परोपकारपर्यवसायि, असत्यमपि सत्यफलं कदाचिद्वक्तव्यं येन ब्राह्मणवधादिकं रक्ष्यते। यथोक्तम् -

'सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात्सत्यमप्रियम्।
असत्यं न प्रियं ब्रूयादेष धर्मः सनातनः।।'

धर्मं चर, विहितकर्माचरासङ्ग्रहादिकमनुतिष्ठ। स्वाध्यायान्मा प्रमद, स्वाध्यायविषयं प्रमादमालस्यादिनानध्ययनं मा कृथाः। आचार्यदक्षिणार्थमभिमतं धनमाहृत्य पुत्रपौत्रादिसन्तानविच्छेदं मा कार्षीः, गुरवे दक्षिणां दत्त्वा विवाहं कुर्यादित्यर्थः। सत्यस्यासत्यभाषणं प्रमादः। धर्मस्य नित्यनैमित्तिकलक्षणस्याकरणं प्रमादः। काम्यस्य तु विगुणस्य करणमकरणं च। एवं यत्नस्य प्रमादः, आलस्याद्युपहतता। कुशलं शरीररक्षादिकं तत्र प्रमादः, स्वास्थ्येऽप्यभयेन तच्छान्त्यादिकरणं, स्वस्त्ययनं हि प्रत्यहं शान्तिरूपं वैश्वदेवादावाम्नातम्। स्वाध्यायप्रमादो न कर्तव्यः, प्रवचने चाध्यापने आवृत्तोऽपि वेदो गुणितव्योऽध्यापयितव्यश्च। एवं यज्ञेषु पाकयज्ञादिषु प्रमादोऽननुष्ठानलक्षणो न कर्तव्यः। माता देव इव यस्य स मातृदेवो भव। त्वयाऽनवद्यानि अगर्हितान्येव कर्माणि कर्तव्यानि, न कदाचिदितराणि। श्रुतिस्मृतिविहितान्यपि लोकविगर्हितानि वर्जनीयानि पुराणमोक्षनिवेशनादीनि। अस्माकं च गुरुतद्भार्याऽपत्यप्रभृतीनां शोभनान्येव चरितानि कर्माणि आचरितव्यानि, नेतराणि। गुरुभिरपि सद्भिर्यानि व्यामोहदानि चरितानि अनुष्ठितानि, तानि श्रद्धया नानुष्ठातव्यानि, यथा विश्वामित्राचरितश्वजघन्याशनचण्डालयाजनादीनि। तथा ये केचनास्मत्सकाशादतिशयेन ज्यायांसो बहुविद्यत्वादिना[१] ब्राह्मणा आगच्छेयुस्तेषां त्वयाऽऽसनेन प्रश्रयितव्यम्, आसनदानपादसंवाहनात् प्रश्वसनं खेदापनोदनलक्षणं कर्तव्यम्, न तु दर्पेणोद्ग्राहणिकादिकमारब्धव्यमित्यर्थः, श्रद्धा आस्तिक्यबुद्धिस्तयैव देयम्। कदाचित्त्वश्रद्धयाऽपि देयं लोकविगर्हापरिहाराय। बहुजनेषु सङ्घटितेषु गायनादिविषयेषु समुदायदाने प्रस्तुते कर्मण्यप्रसिद्धिपरिहारायाऽश्रद्धयाऽपि देयमित्यर्थः। अथवाऽश्रद्धयाऽदेयमित्यकारप्रश्लेषः। संवित् भृत्यादिभरणाय प्रतिज्ञा - इदं मया देयमिति। तया देयमित्यर्थः।

---

१. बहुवित्त्वादिना

असंविदाऽप्यप्रतिज्ञातमपि कर्मकौशलमवलोक्य देयम्। दौर्गत्येऽपि सम्बन्धिबान्धवार्थिजनायाभ्यागताय वाक्भूमितृणोदकादि यथाशक्ति ह्रिया देयम्। नागविनायकदुर्गाद्युग्रदेवताभ्यः पूर्वतरसङ्कल्पितं बल्युपहारादि तदाक्रमणभिया देयम्। वित्तं प्रयोजनं यत्रास्ति सा वित्तिस्तदर्थं देयम्। अवित्त्यै च देयं कदाचित्। भूत्यै विभवाय देयमभूत्यै अपि कदाचित्। श्रद्धया देयमित्यस्यैव सर्वोऽनुवादः स्तुत्यर्थत्वेन वा। एवं वेदार्थे वर्तमानस्य यदि कदाचित्कर्मसु वैदिकेषु संशयः स्यात् केषुचित्, वृत्तौ वा जीवनोपायधनार्जने किमस्मादादेयम् उत नेति, तदा ये तत्र त्वन्निवासदेशे ब्राह्मणास्तेभ्यः सन्देहोऽपसारयितव्यः। कीदृशा ब्राह्मणाः। सम्यग्विमर्शकुशलाः, युक्ताः अविकलकरणाः, आयुक्ताः अनुष्ठानसक्ताः अलक्षाः अक्रूरमतयः, अरूक्षा इति पाठेऽप्ययमेवार्थः, अलुब्धाः अलोभिनो लोभशून्याः। धर्मकामा वा स्युः, धर्मकामा एव यदि स्युः यथा ते तत्र कर्मवृत्त्यादौ प्रवर्तन्ते, तथैव त्वं प्रवर्तेथास्तत एव निर्णयं कुर्या इत्यर्थः। अन्याचार्यपृष्टेन च यथार्थोपदेशिना भवितव्यमर्थात्। ये तु तत्र अभ्याख्याता आभिमुख्येन असम्भिन्नबुद्धयस्तेषां बुद्धिसम्भेदं विरोधं च मा कार्षीः। किं तर्हि। यथा ते पूर्वोक्तगुणका ब्राह्मणाः प्रवर्तेरन्, तथा वर्तेथाः संवृत्तिमत्त्वेन। अभ्याख्याताः आभिमुख्येन ख्याताः मन्त्रिप्रभृतयः। यदेतन्मदीयं शासनम्, एष आदेशः, धार्मिकस्य राजादेराज्ञा। उपदेशो वैदिको हितपर्यवसायी वा विशेषोपनिषद्रहस्यामित्यर्थः। प्रत्यवायाभावेन बलेन लोभेन रहस्यसम्बोधनेन चानुष्ठातव्यमेवमेतदित्यर्थः।।

**।। इत्यारण्यव्रतानि सम्पूर्णानि।।**

**।। इति त्रयश्चत्वारिंशी काण्डिका।। ४३।।**

## ।। अथ चतुश्चत्वारिंशी काण्डिका।।

अथ गोदानसंज्ञकं व्रतमुच्यते यस्य केशान्तसमावर्तनशब्दावन्यौ पर्यायौ।

**षोडशे वर्षे गोदानमग्नौ वा समाप्ते तद्व्याख्यानं जटाकर्मणा।। १।।**

जन्मनः प्रभृति षोडशे वर्षे वर्तमाने ब्रह्मचारिणा गोदानसंज्ञकं व्रतं कर्तव्यम्। यत्स्वरितं दारस्वीकारार्थी। अस्मादूर्ध्वं स्नात्वा 'दारकर्मोच्यते। यस्तु सर्वकालं वेदमधीत्य विवाहं चिकीर्षति तस्योपनयनादारभ्य षोडशे वर्षे गोदानम्। 'त्रिवेद्यां ह्यष्टाचत्वारिंशद्वर्षाणि ब्रह्मचर्यं चरणीयम्' इति पक्षः। तदेकवेदग्रहणे षोडश संवत्सरा भवन्ति त्रिभागेन। यस्य त्वापत्कालेन षोडशे वर्षे भवत्युपनयनं तस्याग्नौ समाप्ते गोदानव्रतम्, अग्न्यध्ययने समाप्त इत्यर्थः। योऽपि वेदैकदेशमधीत्य सिस्नासति तस्याप्येषपक्षोऽग्नौ समाप्त इति। तच्चैतत्केशान्तिकापरपर्यायं गोदानव्रतं जटाकर्मणा व्याख्यातं शिखाकर्मणेत्यर्थः। अत्रापि ह्युपसमाधानादिक्षुरकर्मान्तं समम्।। १।।

**दर्भेष्वासीनं दर्भानध्यधिकृत्य हिरण्यं चाभिषिञ्चत्याग्निकीभिर्वा राज-सूयिकीभिर्वा या आपो दिव्या इति द्वाभ्याम्।। २।।**

कृतशौचार्थस्नानमग्नेः पश्चात्प्राङ्मुखं दर्भेषूपविष्टं ब्रह्मचारिणं 'या आपो दिव्या' इति द्वाभ्यामभिषिञ्चति आग्निकीभिरद्भिर्यदि वा राजसूयिकीभिः। तत्र आग्नेय्यो वहन्त्याद्या नद्यादिप्रभवा मन्त्रलिङ्गात् सूर्यतेजःप्रबन्धाच्च। सरस्वत्यादिप्रभवास्तु राजसूयिक्यः राजसूये राजाभिषेकार्थमाम्नानात्। किं कृत्वाऽभिषिञ्चति। दर्भान् हिरण्यं चाध्यधिकृत्य, ब्रह्मचारिणः शिरसि दर्भान् तदुपरि सुवर्णं निधायेत्यर्थः।।

**या आपो दिव्याः पयसा सम्बभूवुर्या अन्तरिक्षया उत पार्थिवासः। तासं त्वा सर्वासां रुचाऽभिषिञ्चामि वर्चसा।।**

प्रस्तारपङ्क्तिश्छन्दः, मृत्योः साम्परायिकस्यार्षम्, उत्तरस्याप्यनुष्टुभा नृपस्यैव। हे ब्रह्मचारिन् तासामपां सर्वासां वर्चसा वीर्येण त्वामभिषिञ्चामि। कीदृशेन वर्चसा। रुचा सुवर्णेन सह वर्तमानेन। कासामपाम्। या दिव्याः दिवि भवाः आदित्ये स्थिताः, 'आदित्याज्जायते वृष्टिः' इत्यागमात्। याश्चान्तरिक्ष्या अन्तरिक्षे भवा मेघस्था

इत्यर्थः। उत अपिच पार्थिवासः पार्थिवा नद्यादिभवाः, याश्च पयसा क्षीरेण सम्बभूवुः सम्भूता मिश्रीभावमापन्नाः, अग्निहोत्रादौ सर्वेण वा हविषा सम्भूता इत्यर्थो ज्ञेयः, पयोग्रहणस्य हविर्मात्रोपलक्षणत्वात्।

**अभि त्वा वर्चसा सिचं यज्ञेन पयसा सह।**
**यथासो मित्रवर्धनस्तथा त्वा सविता करत्।।**

अनुष्टुप्। अहं त्वा त्वामभिषिचम् अभिषिञ्चामीति लकारव्यत्ययः। वर्चसा पयसा यज्ञेन सह वर्तमानम्। मयाभिषिक्तस्त्वं वर्चस्वी पयस्वी होता याज्ञिकश्च भवेत्यर्थः। यथा त्वं मित्रवर्धनः याज्ञिकश्च भवेत्यर्थः। यथा त्वं मित्रवर्धनः मित्राणां वर्धयिता असः भवसि तथा त्वां सविता करत् 'लिङर्थे लेट्' कुर्यात्।। २।।

**एवं राजानम्।। ३।।**

एवमेव राजानं क्षत्रियमभिषिञ्चेत् इति समस्तस्य मन्त्रद्वयस्य विनियोगात्तस्यातिदेशः।। ३।।

विशेषमाह -

**सावीर्हि देवेति चानुवाकेनान्यद्यथोक्तमक्रतुज्यानिम्।। ४।।**

'सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै' इत्यादिनानुवाकेनान्यद्यथोक्तं कवचसन्नहनादिकं कुर्यात्। किं सर्वम्, नेत्याह अक्रतुज्यानिं, क्रतुर्मृत्युसवः, ज्यानिरर्थत्यागादिकृत आयासस्तद्वर्जम्। अनुवाकनिर्देशाद्धि तल्लिङ्गादेतावपि प्राप्नुतः इति प्रतिषिध्येते।। ४।।

**सर्वान्नं हविष्यं क्षीरोदकाभ्यां पितुं नु स्तोषमित्यादिनानुवाकेन संयूय तस्यौडम्बरेण स्रुवेण जुहोति वाजस्य नु प्रसव इति च चतुर्दशभिः।। ५।।**

सर्वं यवादिकमन्नं हविष्यं माषादिवर्जं क्षीरोदकाभ्यां सह संयूय मिश्रीकृत्य 'पितुं नु स्तोषम्' इत्यनुवाकेन, ततस्तेनानुवाकेन जुहोति। यद्वा तस्येति व्यत्ययेन षष्ठी। वेदवद्वेदविदां वचांसि प्रवर्तन्ते। यत औडम्बरेण स्रुवेण 'वाजस्य नु प्रसव' इति होमप्रकरणनिर्दिष्टैश्चतुर्दशभिर्मन्त्रैश्चतुर्दश आहुतयः।। ५।।

**यस्य न जुहुयात्तदाग्नीषोमीयस्येध्मेऽपि प्रोक्षेच्छेष उदकमासिच्य तेनाभिषिञ्चति।। ६।।**

प्रकृतस्य क्षीरोदसंमिश्रितस्य सर्वहविष्यान्नस्य यमंशं न जुहुयात् तस्यैकदेश-मग्नीषोमीयस्येध्मे प्रोक्षेत्। ततोऽपि यदवशिष्यते तत्रोदकमासिच्य तेन तं क्षत्रियं ब्रह्मचारिणमभिषिञ्चेत्। एतत् 'यस्य न जुहुयात्' इत्यादि इहानार्षं केचिदेव नराः पठन्ति।। ६।।

**सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै।**

**अथास्मभ्यं सवितर्वार्याणि दिवे दिव आसुवा भूरि पश्वः।।**

अत्र मृत्योः साम्परायण( ? यिक)स्यार्षमनुवाके। सावीर्हि त्रिष्टुप्। मृत्युसवे यजमानस्य कवचसन्नहने विनियुक्ता। हे देव सवितः अस्मै यजमानाय वर्ष्माणं वर्म कवचं सावीर्हि अभ्यनुजानीहि वरिमाणमतिशयेन वरमुत्कृष्टम्। कीदृशाय यजमानाय। प्रथमाय प्रधानाय, पित्रे पालयित्रे। अथानन्तरं वार्याणि वरणीयानि धनानि अस्मभ्यं यजमानाय याजकेभ्य आसुव जनय, दिवे दिवे दिने दिने, तथा भूरि बहून् पश्वः पशूनासुव।

**भूतो भूतेषु चरति प्रविष्टः स भूतानामधिपतिर्बभूव।**

**तस्य मृत्योश्चरति राजसूयं स राजा राज्यमनुमन्यतामिदम्।।**

त्रिष्टुप्। मृत्युरूपः प्रजापतिर्देवता। भूतः सत्यो भूतेषु जीवात्मसु प्रविष्टः सन् चरति जानात्यन्तर्यामितया, अत एव स भूतानां जीवात्मनामधिपतिः प्रभुर्बभूव भवति, लडर्थे लिट्। यथोक्तम् - 'अज्ञो जन्तु ..........।' इति। यतस्तस्य मृत्योर्ज-गत्स्वामिनः राजसूयं राजन्यानुज्ञातं राजशासनं चरति। स राजा प्रतिशरीरं स्वप्रकाश-तया राजते। स इदं राज्यं यजमानस्य राजमानत्वं विशिष्टकर्मफलभोगितया शोभमानत्वमनुमन्यतामभ्यनुजानातु। चरतीति निर्मा!तृत्वम्, अधिपतिरिति पालयि-तृत्वं, तस्य मृत्योश्चरति राजसूयमिति च संहर्तृत्वमुक्तम्।

**येभिः शिल्पैः पप्रथानामदृंहद्येभिर्द्यामभ्यपिंशत्प्रजापतिः।**

**येभिर्वाचं विश्वरूपेभिरव्ययंस्तेनोममग्न इह वर्चसा समङ्ग्धि।।**

जगती। अग्निर्देवता। येभिः शिल्पैः प्रथमानां प्रत्यक्षां पृथिवीं दृढीकृतवान्, यैः कर्मभिः द्यामभ्यपिंशत् उत्तम्भितवान्, कः प्रजापतिः, यैश्च कर्मभिर्वाचं त्रिवेदीं विश्वरूपैः सर्वैः कर्मभिरुपलक्षिताम् अव्ययन् निर्मितवान्। अनेकार्थत्वाद्धातूनां

व्ययतिरिहि निर्माणे वर्तते। हे अग्ने तेन कर्मगणेन पराक्रमकृतेनेमं यजमानं समंग्धि 'अञ्जू-व्यक्तिम्लक्षणगतिषु', सम्यक् अंग्धि प्रत्यक्षं प्रापय वा समंग्धि विशेषात् वर्चसा च दीप्त्या च यजमानं समंग्धि संयोजय।

**येभिरादित्यस्तपति प्रकेतुभिर्येभिः सूर्यो ददृशे चित्रभानुः।**
**येभिर्वाचं पुष्कलेभिरव्ययंस्तेनेममग्न इह वर्चसा समङ्ग्ध।।**

जगती। प्रकृष्टाः केतवो रश्मयो यैः प्रकेतुभिरादित्यस्तपति, येभिः यैश्च प्रकेतुभिश्चित्रभानुराश्चर्यकारिकिरणः सूर्यो लोकान् ददृशे दृष्टवान्। गतार्थमन्यत्।

**आयं भातु शवसा पञ्च कृष्टीरिन्द्र इव ज्येष्ठो भवतु प्रजानाम्।**
**अस्मिन्नस्तु पुष्कलं चित्रभान्वायं पृणातु रजसो विमानम्।।**

जगती। अयमादित्य आभातु प्रकाशयतु। किम्। पञ्च कृष्टीः, पञ्च मनुष्यान्। शवसा बलेन यथायमादित्यः प्रजानां ज्येष्ठोऽतिशयेन प्रशस्यो भवत्विन्द्रवत्। अस्मिन्नादित्ये पुष्कलं बहुलं चित्रभानु विचित्रप्रकाशोऽयमापृणातु आपूरयतु रजसो लोकस्य विविधं मानं प्रमाणम्।

**यत्ते शिल्पं कश्यप रोचनावदिन्द्रियावत्पुष्कलं चित्रभानु।**
**यस्मिन्सूर्या अर्पिताः सप्त साकं तस्मिन्राजानमधिविश्रयेमम्।।**

त्रिष्टुप्। मृत्युसवे चर्मास्तरणे विनियुक्ता। कशामर्हति कश्यं शरीरं पातीति कश्यपं चर्म, तस्यामन्त्रणं हे कश्यप व्याघ्रचर्मन्, यत्तव शिल्पं रूपं चरितं वा तस्मिन् राजानं राजमानं यजमानमिममधिविश्रय उपर्याश्रितं कुरु। रोचनावत् रोचमानम्, इन्द्रियावत् इन्द्रिययुक्तं, पुष्कलं प्रभूतं, चित्रभानु विचित्रकान्तिमत्त्वादेव यत्र सप्त सूर्यरश्मयोऽर्पिताः प्रतिफलिताः सूर्यप्रतिबिम्बानि वा। सप्तग्रहणं बाहुल्योपलक्षणम्। साकं सह।

**व्याघ्रो वैयाघ्रे अधि विक्रमस्व दिशो महीः।**
**विशस्त्वा सर्वा वाञ्छन्त्वापो दिव्याः पयस्वतीः।।**

अनुष्टुप्। यजमानं चर्म आरोहन्तमनुमन्त्रयते। हे यजमान अधिक्रमस्व आक्रमस्व यतस्त्वं व्याघ्रः, उत्कृष्ट इत्यर्थः। व्याघ्रः, इवेति वार्थः। सर्वा विशः सर्वे

मनुष्यास्त्वां वाञ्छन्तु अभिलषन्तु तथा दिव्या आपः पयस्वतीः पयसा क्षीरेण युक्तास्त्वां वाञ्छन्तूपसर्पन्तु।

या आपो दिव्या पयसा सम्बभूवुर्या अन्तरिक्ष्या उत पार्थिवासः। तासां त्वा सर्वासां रुचाभिषिञ्चामि वर्चसा।

**अभि त्वा वर्चसासृजं यज्ञेन पयसा सह।**
**यथा सो मित्रवर्धनस्तथा त्वा सविता करत्।।**

अभ्यां प्रस्तारपङ्क्तिभ्यामासिञ्चति। या आपो दिवि भवा दिव्या अन्तरिक्षे भवा अन्तरिक्ष्याः पृथिव्यां भवाः पार्थिवासः पार्थिव्याः पयसा सम्बभूवुः, पयोग्रहणमुपलक्षणार्थं, हविषा सम्भूताः युक्ता, आहुतित्वं प्राप्ता इति यावत्, तासां सर्वासां रुचा दीप्त्या वर्चसा ब्रह्मवर्चससंवृद्ध्या तत्त्वं जानानोऽहं यजमनं त्वामभिषिञ्चामि। अनेन चाभिषेकेण त्वामहं वर्चसा अभ्यसृजम् अभिसृजामि योजयामि, यज्ञेन यज्ञफलेन पयसा च सह संसृजामि। यथा स सविता मित्रवर्धनस्तथा त्वां मित्रवर्धनं करत् करोतु।

इन्द्रं विश्वेति चतसृभिः रथमारोहन्तमनुमन्त्रयते -

**इन्द्रं विश्वा अवीवृधन्समुद्रव्यचसं गिरः।**
**रथीतमं रथीनां वाजानां सत्पतिं पतिम्।।**

विश्वाः सर्वा गिरो वाच इन्द्रं यजमानमवीवृधन् वर्धयन्तु। समुद्रव्यचसं, सम्यग्मुदं रातीति समुद्रो नित्यानन्दः, 'व्यच-सम्भवे', नित्यानन्दसम्भविनं, रथीनां रथवतां रथीतमं रथितममिन्द्रं विश्वातिशयरथयुक्तं, वाजानामन्नानां पतिं, सत्पतिं साधूनां पालयितारम्।

**अभि प्रेहि वीरयस्वोग्रश्चेता सपत्नहा।**
**आतिष्ठ मित्रवर्धनस्तुभ्यं देवा अधिब्रुवन्।।**
**आतिष्ठ बृत्रहन्नथं युक्ता ते ब्रह्मण हरी।**
**अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना।।**

हे यजमान अभिप्रेहि रथमारोह, वीरयस्व यज्ञानुष्ठाने विक्रमयुक्तो भव। उग्रः तीव्रः, चेता चैतन्ययुक्तः, सपत्नहा शत्रूणां हन्ता। आतिष्ठ रथमधितिष्ठ मित्रवर्धनश्च भव। तुभ्यं देवा अधिब्रुवन् देवा अपि एतत्तव वदन्ति, नत्वहमेव।

वृणोत्यावृणोति तत्त्वमिति वृत्रं पापं मिथ्याज्ञानं च। हे वृत्रहन् यजमान रथमातिष्ठ। हरी हरयः अश्वास्तव युक्ताः संयुक्ताः रथेन यतो ब्रह्मणा वेदेन सहातिष्ठ, मन्त्रैर्वा योजिताः। कर्मज्ञानानुष्ठानेन तव सुमनो ग्रावा ग्रावाणं पाषाणप्रायं दुर्भेदम-विद्यारूपमर्वाचीनम् अधोमुखं करोतु। वग्नुना वाचा, वक्ति तच्छीलो वग्नुः शब्दः।

**आतिष्ठन्तं परि विश्वे अभूषञ्छ्रियो वसानश्चरति स्वरोचिः।**
**महत्तदस्याऽसुरस्य नामा विश्वरूपो अमृतानि तस्थौ।।**

आतिष्ठन्तं रथमारोहन्तं यजमानं विश्वे सर्वे देवाः पर्यभूषन् परिभूषयन्ति, आरूढो भूषितश्चायं यजमानः श्रियः शोभाः वसानः आच्छादयन् स्वरोचिः स्वदीप्तिः स्वर्गदीप्तिश्च सन् चरति आक्रामति शत्रून्। यतो महत्तदस्यासुरस्य नाम, यजमान इति यत् नाम, तदस्य महाप्रभावम्। असुरस्य प्राणवतः, असवः प्राणा विद्यन्ते यस्य सोऽसुरः, मत्वर्थीयो रप्रत्ययः। यतोऽयं यजमानो विश्वरूपः सर्वरूपः प्राप्त-ब्रह्मलयः सन्नमृतानि अमृतत्वमातस्थौ आतिष्ठति।

'अनु त्वेन्द्र' इति तिसृभिर्गच्छन्तमनुमन्त्रयते -

**अनु त्वेन्द्रो मदत्वनु बृहस्पतिरनु सोमो अन्वग्निरावीत्।**
**अनु त्वा विश्वे अवन्तु देवाः सप्त राजानो य उदाभिषिक्ताः।।**

अनु त्वा त्वां गच्छन्तमिन्द्रोऽनुमदतु। तथा बृहस्पतिरन्ववतु, सोमश्चान्ववतु। अग्निश्चान्वावीदन्ववतु। किं बहुना। विश्वे सर्वे देवास्त्वामन्ववन्तु अनुरक्षन्तु। ये सप्त राजानः सप्तर्षय उत्कर्षेण आ समन्तादभिषिक्तास्तेऽपि त्वामन्ववन्तु।

**अनु त्वा मित्रावरुणा इहावतामनु द्यावापृथिवी ओषधीभिः।**
**सूर्योऽहोभिरनु त्वाऽवतु चन्द्रमा नक्षत्रैरनु त्वाऽऽवीत्।।**

हे यजमान त्वां मित्रावरुणावन्ववतां, द्यावापृथिव्यौ च ओषधीभिः सह। सूर्योऽहोभिर्दिवसैः सह, चन्द्रमाश्च नक्षत्रैः सह त्वामन्वावीत् अन्ववतु।

**द्यौश्च त्वा पृथिवी च प्रचेतसा यज्ञो बृहद्दक्षिणा त्वा पिपर्तु।**
**अनु स्वधा चिकिते सोमो अग्निरनु त्वावतु सविता सवेन।।**

जगती। हे यजमान त्वां द्यौश्च पृथिवी च प्रकृष्टेन चेतसा पिपर्तु काम्यमानैरर्थैः प्रपूरयतु। तथा यज्ञो, बृहती परिपूर्णा दक्षिणा च त्वामन्वागच्छत्विति भविष्यता

सम्बन्धः। स्वधा च पितृहविः त्वामन्वागच्छतु चिकिते चैतन्यविशेषे वर्तमानम्। तथा सोमः, अग्निः सविता च सवेन आज्ञया सङ्कल्पमात्रेण त्वामन्ववन्तु।

**एना व्याघ्रं परिषस्वजानं सिंहं हिन्वन्ति महते धनाय।**
**मर्मृज्यन्ते द्वीपिनमप्स्वन्तररुषं न सुभ्वस्तस्थिवांसम्।।**

जगती। सुगन्धिद्रव्यैर्यजमानस्य समालभने क्रियमाणेऽनुमन्त्रणमनया क्रियते। हे यजमान एना अनेन इषुणा परिषस्वजानं सम्बध्यमानं व्याघ्रं सिंहप्रायमपि शत्रुं भवन्तो हिन्वन्ति स्वीकुर्वन्ति। किमर्थम्। महते धनाय। अपिचाप्स्वन्तर्मध्येऽपि वर्तमानं द्वीपिनं द्विधाविदारितस्थापितजलसम्बन्धिगतं कृत्वा शत्रुं मर्मृज्यन्तेऽतिशयेन शोधयन्ति अरुषं निष्क्रोधं कृत्वा। क इव कम्। सुभ्वः स्वर्णकार इवारुषं सुवर्णं तस्थिवांसं कषपट्टिकादौ स्थितम्। नेत्युपमार्थीयः।

**पितुं न स्तोषं महोधर्माणं तविषीम्।**
**यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत्।।**

अत्रैकदाशर्चेऽनुवाकेऽगस्त्यस्य गरलनिगिरण आर्षम्। उष्णिक् च्छन्दः। पितुशब्दोऽन्नवचनः। तं पितुं स्तोषं स्तौमि। मह इति बलनाम। महो धारयते महोधर्मा तं, अत एव तविषीं बलवन्तम्। कम्। यस्य पितोः त्रितः त्रिस्थानस्य लोकत्रयस्थस्य सम्बन्धिना तेजसा बलेन वृत्रं मेघदानवं व्यर्दयद्विशेषेणार्दितवान्। कः। अर्थादिन्द्रः। कथङ्कारम्। विपर्वं विघटितसन्धिं कृत्वा।

**स्वादो पितो मधो पितो वयं त्वा ववृमहे।**
**अस्माकमविता भव।।**

हे पितो स्वादो स्वादुरस हे मधो मधुरपरिणाम वयं त्वां ववृमहे वरं प्रार्थयामहे। किम्। अस्माकं त्वमविता रक्षिता भव।

**उप नः पितवाचर शिवः शिवाभिरूतिभिः।**
**मयोभुरद्विषेण्यः सखा सुशेवो अद्वयः।।**

हे पितो पालयितः नोऽस्माकम् उपाचर उपागच्छ। शिवः क्षेमकारी। शिवाभिरूतिभिः सुखकारिभिः रक्षणैः। मयः सुखं भावयतीति मयोभूः, अद्विषेण्यः

अद्वेषणीयः, सखा समानख्यानो मित्रभूतः, सुशेवः सुखेन यः सेव्यते, अद्वयः अद्वितीयः प्रतिबन्धकशून्यः।

**तव त्ये पितो रसा रजांस्यनुविष्ठिताः।**
**दिवि वाता इव श्रिताः।।**

तव त्ये पितो रसाः, रज इति लोकनाम, ये केचिदुत्कटा रसाः रजांस्यनुविष्ठिता लोकत्रयमाश्रिताः, हे पितो, त्ये सर्वे तव सम्बन्धिनः। दृष्टान्तमाह - यथा सर्वे वाता दिवमाश्रिताः।

**तव त्ये पितो ददतस्तव स्वादिष्ठ ते पितो।**
**प्र स्वाद्मानो रसानां तुविग्रीवा इवेरते।।**

हे पितो स्वादिष्ठ स्वादुतम, तव ददतस्तव यज्ञादौ दीयमानस्य, सम्बन्धिनां रसानां स्वाद्मान उत्कृष्टस्वादवन्तो रसास्त ईरते लोकत्रयं गच्छन्ति युगपत्। तुविग्रीवा इव बहुग्रीवा इव सहस्रशीर्षाः परमात्मरूपाः सर्वत्र प्रवृत्ता इत्यर्थः।

**त्वे पितो महानां देवानां मनो हितम्।**
**अकारि चारुकेतुना तवाहिमवसावधीत्।।**

हे पितो त्वे त्वयि महानां महतां देवानां मनो हितं निहितम् आसतामस्मदादयः, महतामपि देवानामिन्द्रप्रभृतीनां मनस्त्वय्येवाहितं त्वामेव ते ध्यायन्तीत्यर्थः। तथाहि - तव अवसा बलेनाहिं वृत्रमवधीत्, अर्थादिन्द्रः इत्यर्थः। तथा स एव तव सम्बन्धिना चारुकेतुना उत्कृष्टप्रज्ञया अकारि अर्थादहेर्वधम्।

**यददः पितो अजगन्विवस्व पर्वतानाम्।**
**अत्रा चिन्नो मधो पितोऽरं भक्षाय गम्याः।।**

हे पितो यदद एतत् पर्वतानां सम्बन्धि ओषध्यादि रसत्वमजगन् गतमुत्पन्नं, तत् हे पितो मधो अरमलं पर्याप्तं कृत्वा भक्षाय गम्याः गतम्। विवस्वेत्यामन्त्रणपदम्। हे विवस्व विशेषेण वसितः।

**यदपामोषधीनां परिंशमारिशामहे।**
**वातापे पीव इद्भव।।**

यदपामोषधीनां परिंशं स्पर्शमारिशामहेऽनुभवामः, स सर्वस्तव महिमेति शेषः। हे वातापे वातानां प्राणापानादीनामाप्यायक पीवः पीवरो निविडोऽस्मद्गृहे भव।

**करम्भ ओषधे भव पीवो वृक्क उदारथिः।**
**वातापे पीव इद्भव।।**

हे ओषधे ओषधिरूप पितो करम्भो भव दधिक्षीरादिमिश्रभक्तादिना रूपेणास्मद्गृहे तिष्ठेत्यर्थः। वृक्को व्याधीनां वर्जकः उदारथिः उत्कृष्टरथः।

**यत्ते सोम गवाशिरो यवाशिरो भजामहे।**
**वातापे पीव इद्भव।।**

हे सोम यत्ते तव गवाशिरो घनं दधि, यवाशिरो यवकरम्भादिकं भजामहे सेवामहे, तेन रूपेण हे वातापे पीवरो भवास्माकम्।

**तं त्वा वयं पितो वचोभिर्गावो न हव्या सुषूदिम।**
**देवेभ्यस्त्वा सधमादमस्मभ्यं त्वा सधमादम्।।**

हे पितो तं त्वा वयं स्तुतिवचोभिः सुषूदिम क्षरामः। गावो न हव्या, यथा गावो हव्यं क्षीरं क्षरन्ति। देवेभ्यः सधमादं सहमदनं त्वां सुषूदिम। एवमस्मभ्यं त्वा सधमादमिति समानम्।

**वाजस्य नु प्रसवः सुषुवेऽग्रे सोमो राजौषधीष्वसु।**
**ता अस्मभ्यं मधुमतीर्भवन्तु वयं राष्ट्रे जागृयामा पुरोहिताः।।**

वाजस्येत्यऽनुवाक इन्द्रस्य जयवत आर्षम्। 'सोमो वा ओषधीनां राजा' इति श्रुतेः। सोम ओषधीनां व्रीह्यादिकानां राजा। स च प्रजापतेर्विवर्तत्वात् परिणतत्वाद्वा प्रजापतिरूपेण स्तूयते। वाजस्यान्नस्य सम्बन्धी प्रसवः कार्यसारः ओषधीष्वप्सु च राजा, षष्ठ्यर्थे व्यत्ययेन सप्तमी, ओषधीनामपां च राजा अग्रे प्रथमसर्गादौ सुषुवे जनितवान् यज्ञद्वारेण जगत्त्रयम्। जगत्कारणभूतस्यापि सोमस्यैव वाजीकरणमित्य न्नस्तुतिपर्यवसाय्येतत्। अतोऽन्नहोमबलादस्मभ्यमस्मदर्थमोषध्यो मधुमत्यो मधुररसयुक्ताः सन्तु। 'ताः' इति सर्वासामोषधीनामनाख्येयातिशयप्रतिपादनार्थं 'ते लोचने' इत्विवत्, जगत्कारणस्यापि सोमस्य या हेतुभूतास्ताः का अपीत्यर्थः। राष्ट्रे

जगति वयं जागृयामा रागादिदोषनिवारणाय गृहीतोद्यमाः स्याम। पुरोहिताः पुरःसरा अग्रेसरा अग्रे परलोके हिता इत्यर्थः।

**वाजस्येदं प्रसव आबभूवेमा विश्वा भुवनानि सर्वतः।**
**अदित्सन्तं दापयति प्रजानन्त्सोमो रयिं सहवीरं नियंसत्।।**
**वाजस्य नु प्रसवः शिश्रिये देवीमा विश्वा भुवनानि सम्राट्।**
**स विराजा परियाति प्रजानन् प्रजां पुष्टिं वर्धमानो अस्मे।।**

वाजस्येदम्, इदं जगत् वाजस्य प्रसवो बभूव। किं तत् जगत्। इमानि विश्वानि सर्वाणि भुवनानि सर्वतः सर्वत्र स्थितानि। सोमोऽन्नरूपः, अदित्सन्तं न दानेच्छायुक्तमदानशीलमपि दापयति प्रजानां मध्ये स्थितम्। किं दापयति। रयिं धनं, सहवीरं सपुत्रं, नियंसत् नियमयुक्तम्।

वाजस्य प्रसवः सम्राट् प्रजापतिर्विश्वा विश्वानि भुवनानि शिश्रिये आश्रितवान्। स विराजा विशेषेण राजमानः परियाति देवान् प्राप्नोति अग्नौ सोमादिरूपः 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति विराजेति समासान्ताभावः। प्रजानन् प्रकृष्टज्ञानयुक्तः। किं कुर्वन् परियाति। अस्मेऽस्माकं रयिं धनं वर्धमानः।

**सोमं राजानमवस इन्द्रं दानाय चोदय।**
**विष्णुं वाचं सरस्वतीं सवितारं च वाजिनम्।।**

अनुष्टुप्। हे वाजप्रसव सोमं राजानं विष्णुं सरस्वतीम् इन्द्रं वाजिनमन्नवन्तं चोदय प्रेरय तर्पयित्वाऽभिमुखं कुरु। किमर्थम्। अवसे रक्षणाय दानाय चाभिमत-फलानाम्।

**प्र नो यच्छत्वर्यमा प्र पूषा प्र बृहस्पतिः।**
**प्र वाग्देवी ददातु नः।।**

गायत्री। अर्यमा पूषा बृहस्पतिस्त्वं च वाग्देवी प्रददातु नोऽस्मभ्यमभिमतम्। प्रयच्छत्विति भूयोवचनमतिशयार्थम्।

**अग्ने अच्छा वदेह नः प्रत्यङ् नः सुमना भव।**
**प्र नो रास्व विशस्पते धनदा असि नस्त्वम्।।**

अनुष्टुप्। हे अग्ने इह यज्ञे नोऽस्माकं प्रत्यगभिमुखः सन् सुमना भव अच्छ

वद च अभिमुखमनुकूलं वद। हे विशस्पते पुरुषप्रभोनोऽस्माकं धनदो भवसि, अतो नोऽस्मभ्यं प्रारास्व प्रदेहि धनम्।

**इन्द्रवायू सुसंदृशा सुहवेह हवामहे।**
**यथा नः सर्व इज्जनः संगमे सुमना असत्।।**

इन्द्रवायू हवामहे आह्वयामः इह यज्ञे सुष्ठु सम्यक् दृशौ ययोस्तौ सुसंदृशौ सुहवा सुखाह्वानौ। यथा सर्वो जनोऽस्माकं सङ्गमे सुमना असत् भवति, तथा कुरुतम्। इदिति पादपूरणः।

**सोमं राजानं वरुणमग्निमन्वारभामहे।**
**आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम्।।**

सोमादीनन्वारभामहे तदुद्देशेन कर्म कुर्मः।

**विश्वे अद्य मरुतो विश्व ऊतीर्विश्वे भवन्त्वग्नयः समिद्धाः।**
**विश्वे मा देवा अवसागमन्निह विश्वमस्तु द्रविणं वाजो अस्मिन्।।**

विश्वे अद्येति। त्रिष्टुप्। अद्यास्मिन्नहनि विश्वे सर्वे मरुतो विश्वऊतीः सर्वाण्यवनानि रक्षणानि भवन्तु। एवं सर्वे अग्नयः समिद्धा भवन्तु। विश्वे देवा अवसा अवनेन मा मामागमन् आगच्छन्तु। इह यजमाने विश्वं द्रविणमस्तु। वाजो अस्मिन्, अस्मिन् यजमाने वाजः अन्नमस्तु।

**आ मा वाजस्य प्रसवो जगम्यादा मा द्यावापृथिवी विश्वरूपे।**
**आ मा गन्तां पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात्।।**

आ मा वाजस्य। वाजस्याऽन्नस्य प्रसवः सारः मामाजगम्यात् अतिशयेनागच्छतु। गतार्थमन्यत्।

**वाजो मा सप्त प्रदिशश्चतस्रो वा परावतः।**
**वाजो मा विश्वैर्देवैर्धनसाता इहावतु।।**

इह यज्ञे धनसातौ धनविभागनिमित्तं वाजोऽन्नं मामवतु आगच्छतु विश्वैः सर्वैर्देवैः सह। वाजो मां सप्तप्रकारो व्रीह्यादिरूपेण, प्रदिशश्चतस्रो दिश इति संवरणीयम्। त्रिभिर्लोकैः सह सप्त प्रदिश इत्याहुः।

**वाजो मे अद्य प्रसुवाति दानं वाजो देवान्हविषा वर्धयाति।**
**वाजस्य हि प्रसवे नन्नमीति विश्वा आशा वाजपतिर्जयेयम्।।**

वाजो यज्ञो वाजसाध्यत्वात् दानं प्रसुवाति जनयति अवजानाति वा, हविषा च देवान्वर्धयति। यतश्च वाजस्य प्रसवेऽनुज्ञायां वर्तमाना विश्वा आशा नन्नमीति अतिशयेन नमन्ति, तस्माद्वाजपतिर्भूत्वा विश्वा आशा दिशोऽहं जयेयम्।

**वाजः पुरस्तादुत मध्यतो नो वाजो देवानृतुभिः कल्पयाति।**
**वाजस्य हि प्रसवे नन्नमीति सर्वा आशा वाजपतिर्भवेयम्।।**

पुरस्तान्मध्ये च नो वाजोऽस्तु, तथा ऋतुभिः सर्वेषु ऋतुषु देवान् कल्पयतु। गतार्थमन्यत्।

**सं मा सृजामि पयसा पृथिव्याः सं मा सृजाम्यद्भिरोषधीभिः।**
**सोऽहं वाजं सनाम्यग्ने:।।**
**पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः।**
**पयस्वतीः प्रदिशः सन्तु मह्यम्।।**

सं मा सृजामीति व्याख्यातं, पयः पृथिव्यामिति च।

**।। इति चतुश्चत्वारिंशी काण्डिका।। ४४।।**



।। अथ पञ्चचत्वारिंशी काण्डिका।।

**अथैकाग्नेः समाधानम्।। १।।**

व्रतसमाप्त्यनन्तरमधीतवेदेन स्नात्वा विवाहः कर्तव्यः। कृतविवाहस्य पाकयज्ञा आम्नाताः। ते चाग्नौ क्रियन्ते। जीवत्पितृकस्य वैवाहाग्नौ विकल्पः। यो जिवत्पितृको यदा न धारयते, तदा तेनाग्न्यन्तरमुत्पादनीयमवश्यम्, पितृप्रमयेऽग्न्यन्तरार्जनं च पैतृकाग्न्युपशमपूर्वकमित्युपशमनमाह। पितरि प्रेते एक एवासहायः शिष्यते पैतृकोऽग्निः। तस्यैकाग्नेः समाधानं प्रतिपत्तिकर्म कर्तव्यं पुत्रेणैव न तु पुरोहितप्रभृतिभिः।

अपरा व्याख्या - एक एवाग्निः पैतृको यस्यास्ति नतु वैवाहनः स्वयं वृत्तः स एकाग्निर्गृहस्थः प्रमीतपितृकः। समाधानशब्दस्तन्त्रेण द्वयमाह - पूर्वाग्नेस्त्यागमावसथाग्नेराहरणम्। यतः सम्यगाधानमर्जनमपि, अनेकार्थत्वाद्धातुनिपातानाम्।। १।।

एतदेव स्फुटयितुमाह -

**परमेष्ठिमरणे पुत्रस्याग्निसमाधानम्।। २।।**

परमेष्ठी स्वामी पिता। तस्य प्रमये पुत्रेणैवाग्नेः समाधानं शमनं कर्तव्यमित्युक्तार्थम्।।२।।

**सर्वानुपवासयेत्।। ३।।**

ऋत्विग्बन्धून्सर्वान् उप समीपेऽग्नेर्वासयेत्।। ३।।

**यावद्रात्रिं तमग्निं प्रज्वालयेदाकालमुपव्युषम्।। ४।।**

उषा रात्रिः विगता उषा यत्र स व्युषः। स प्रभातकालः। तस्य समीपमुपव्युषमादित्योदयकालं यावत् तं प्रकृतमेकाग्निं ज्वालयेत् सन्दीपयेत्। यावद्व्युषा रात्रिस्तावत् अग्निं प्रज्वालयेदिति भावः।। ४।।

**माषकणमन्थेनौदुम्बरेण कंसेनाग्निं शमयेत्, हिरण्यपाणिं सवितारं वायुमिन्द्रं प्रजापतिम्। देवाम् अङ्गिरसो हवामह इमं क्रव्यादं शमयन्त्वग्निमिति।।**

उदकमिश्रमाषचूर्णसम्पादितेन मन्थेन औदुम्बरकंसपात्रनिक्षिप्तेन तमग्निं शमयेत्।

विराट्पंक्त्यौ। ब्रह्मण आर्षम्। ऋगर्थस्तु - हवामहे जुहुमः देवान् ह्वयामो वा। कान्। सवितारं हिरण्यपाणिं तथा वायुम्, इन्द्रं, प्रजापतिम्, अङ्गिरसश्च। किमर्थम्। क्रव्यादं शमयन्त्वग्निम्।। ५।।

**काशानामूते कटे भस्म समारोप्य स्थापयेत् - क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्ञो गच्छत्वरिप्रवाहः। इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन्निति।। ६।।**

काशानां तृणविशेषाणां सम्बन्धिनि ऊते ग्रथिते कटे समारोप्य तत् प्रशमितैकाग्निभस्म स्थापयेत् गमयेत् क्रव्यादमग्निमिति त्रिष्टुभा। काशानां मूढकट इति वा पाठः। तत्रासमञ्जसमूलाग्रतृणनिर्मिताकारो मूढकटः।

ऋगर्थस्तु - क्रव्यादमाममांसभक्षकमग्निं यजमानाद्दूरं प्रहिणोमि प्रक्षिपामि। यमराज्ञः सम्बन्धी योऽरिप्रवाहः पापनिचयस्य वोढा, सोऽनेनैवाग्निना सह दूरं गच्छन्तु। इतरः पुनर्यमाहरिष्यामि, अयमिहैव स्थाने देवेभ्यो हव्यं वहतु प्रकर्षेण जानन्। कीदृशः। जातवेदा जातधनो जातज्ञानो वा। अस्मान्मन्त्रलिङ्गादकृतविवाहस्यापि परमेष्ठिप्रमयेऽग्न्यन्तरपरिग्रहमिच्छन्ति।। ६।।

**निर्दग्धमिति दक्षिणाऽपरस्यां दिशि चतुष्पथे निधायोपधानं सीसं च तस्मिन्नध्यधि मार्जयन्ते - सीसे मलिम्लुचामहे शीर्ष्णा चोपबर्हणे। क्रव्यादः समया मृष्ट्वा तं प्रेत सुदानव इति।। ७।।**

निर्दग्धमिति मन्त्रेण दक्षिणापरस्यां दिशि नैर्ऋत्यां दिशि याम्यपश्चिमदिगन्तराले यश्चतुष्पथस्तत्र निधाय स्थापयित्वा काशकटनिहितं भस्म, उपधानशब्दवाच्यं च यत् जीवतः पितुः शिरोऽवष्टम्भनं गडुकादिकमासीत्।। ७।।

**अपास्मदेत्विति चतसृभिरुपस्थाय।। ८।।**

'अपास्मदेतु' इत्यादिभिश्चतुर्भिर्मन्त्रैरुपस्थानं कर्तव्यम्।। ८।।

**अपास्मदेतु निर्ऋतिर्नेहास्या अपि किञ्चन।**
**अगोतां नाष्ट्रां पाप्मानं सर्वं तदपहन्महे।। १।।**

**अपास्य नैर्ऋतान्पाशान्मृत्योरेकशतं च ये।**
**अपास्य ये सिनाः पाशा मृत्योरेकशतं सुवे।। २।।**

एकशतं सिना नद्धास्तान् पाशान् अपास्य अहं सुवे ईशे, कार्येषु समर्थो भवामीत्यर्थः।। २।।

**ये ते पाशा एकशतं मृत्यो मर्त्याय हन्तवे।**
**तांस्ते यज्ञस्य मायया सर्वानवयजामहे।। ३।।**

हे मृत्यो ये ते तवैकशतं पाशा मर्त्यस्य हन्तवे हननाय, तांस्तव सम्बन्धिनः सर्वान् अवयजामहे यज्ञकर्मणापनयामो यज्ञस्य मायया यज्ञनिर्माणेन।। ३।।

**देवीमहं निर्ऋतिं बाधमानः पितेव पुत्रं दमये वचोभिः।**
**या जायमानस्य जायमानस्य शिरो देवी प्रति सूरिर्विचष्टे।। ४।।**

यस्माद्यो जायते जन्तुस्तस्य सर्वस्य देवी निर्ऋतिः शिरः प्रतिविचष्टे प्रतिकूलं वीक्षते अयं मया संहर्तव्य इति। अत एवंभूतां निर्ऋतिं देवीमहं दमयेऽनुशास्मि वचोभिर्वैदिकमन्त्रैरपसारयाम्यकार्यात्। पितेव पुत्रं बाधमानः, यथा पिता पुत्रं वचोभिर्निवारयन्ननुशास्ति, तथा। नचैवं निवारणेनानुशिष्यमाणा देवी कोपं कर्तुमर्हति यतः सा सूरिः पण्डिता।। ४।।

**शं नो देवीरित्युपस्पृश्य।। ९।।**

'शं नो देवीर्' इत्यनया उदकोपस्पर्शनं कुर्युः सर्वे। 'शं नो देवीर्' इति व्याख्याता।। ९।।

**प्रतीपमायान्तः पदानि लोभयन्ते नडैर्वेतसशाखया वा मृत्योः पदं लोभयन्त इति।। १०।।**

ततो भस्मकटसीसप्रदेशात् प्रतीपमायान्तः प्रत्यावर्तमानाः पदानि लोभयन्ते सर्वे पादप्रतिबिम्बानि नाशयन्ति लोपयन्त्युत्पुंसयन्ति। कैः। नडैर्दीर्घैर्बहुभिः, वेतसशाखया वा द्राघीयस्या सपर्णया। सामर्थ्याच्चात्र सीसभस्मसांमुख्येन प्रत्यावर्तमानाः सप्ताष्टौ वा पदानीति गम्यते। 'मृत्योः पदं' इत्यादिर्मन्त्रप्रतीकः।। १०।।

**मृत्योः पदं लोभयन्तो यदीमो द्राघीय आयुःप्रतरं दधानाः।**
**आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवत यज्ञियासः।।**

यत्प्रसादान्मृत्योः पदं लोभयन्तो लोपयन्तः ईमो गच्छामः, अतिशयेन दीर्घमायुषः प्रतरं विस्तारं दधानाः कुर्वन्त इत्यर्थः। तस्मात् हे ऋत्विक्प्रभृतयः शुद्धाः पूता भवत, तथा यज्ञियासो यज्ञार्हाश्च भवत। किं कुर्वाणाः। प्रजया धनेन चाप्यायमानाः वर्धमानाः।।

**अत्रैव शाखां निदध्युः।। ११।।**

अनन्तरं वेतसशाखां नडमुष्टींश्च अत्रैव प्रकृते सीसभस्मकटे निदध्युः प्रक्षिपेयुः।। ११।।

**अनड्वाहं पुरस्कृत्य व्रजन्त्यनड्वाहं प्लवमिति।। १२।।**

अनयर्चा।

**अनड्वाहं प्लवमन्वारभध्वं स वो निवक्षद्दुरितानि विश्वा।**
**आरोहत सवितुर्नावं हिरण्मयीं षड्भिरूर्मिभिरमृतत्वं तरेम।।**

हे बन्धुप्रभृतयः अनड्वाहं प्लवं संसारतरणोपायमन्वारभध्वं तदनुगमनरूपां प्राप्तिं यात स्पृशत वेत्यर्थः। स चानड्वान् वो युष्माकं विश्वानि सर्वाणि दुरितानि पापानि निवक्षत् निर्हरतु निःशेषेण वाहयतु अपसारयतु। किञ्च सवितुः सम्बन्धिनीं नावं तत्त्वबुद्धिं विद्यामारोहत। सविता आदित्यः प्रजापतिः सर्वकार्याणां सविता। हिरण्मयीं निर्मलामविद्ययाऽनुपप्लविताम्। यतः षड्भिरूर्मिभिराकुलिता वयमतस्तानुलङ्घ्यामृतत्वं तरेम परब्रह्मरूपं संसारसागरपारं प्राप्नुयामेत्यर्थः। रागद्वेषसुखदुःखमोहमदाः षडूर्मयः, षडिन्द्रियाणि वा कणादगदितानि, विषया वा रूपरसगन्धस्पर्शशब्दसुखाद्याः। षडूर्मयः सबुद्धयः अविद्यास्मितारागद्वेषाभिनिवेशाः।। १२।।

**प्रत्यागतानक्षतधूममुपस्पृश्य गवाग्निना च प्रदक्षिणमग्निं त्रिः परियन्ति परीमे गामनेषतेति।। १३।।**

प्रत्यागतान् गृहप्राप्तान् बान्धवादीन् ये च गृहे स्थितास्तानपि अक्षतधूममनवहतयवादिबीजधूममुपस्पर्शयन्ते। ये भस्मकटेन सहागताः ते स्वयं चोपस्पृशन्ति। उपस्पृश्य च हस्तेऽग्निमादाय प्रकृतेन गवा सह यत्राग्नौ भूमिष्ठोऽक्षतधूमः कृतः, तं प्रदक्षिणं यथा भवति तथा त्रिः परियन्ति पर्यावृत्य भ्रमन्ति 'परीमे गामनेषत' इत्यादिकया ऋचा।

**परीमे गामनेषत पर्यग्निमहृषत।**

**देवेष्वक्रत श्रवः क इमाँ आदधर्षति।।**

परीमे गामनेषत, पर्यग्निमहृषत, अग्निं परिहृतवन्तः। देवेषु अक्रत श्रवः, श्रवोऽन्नं हविस्तद्देवेषु कृतवन्तः। अतः क इमान् आदधर्षति अभिभवितुं प्रभवति।

**उदपात्रेऽश्मानं हिरण्यं चावधायाथैनानभिमर्शयन्ते - अश्मन्वती रीयते संरभध्वमुत्तिष्ठत प्रचरता सखायः। अत्राजहाम ये असन्नशेवाः शिवान् वयमुत्तरेमाभिवाजानिति।। १४।।**

उदकेन पूर्णे पात्रेऽश्मानं हिरण्यं सर्वबीजानि वा आचारान्निधायानन्तरमेनान् ज्ञात्यादीन् संस्पर्शयन्ति, स्वं च स्पृशन्ति 'अश्मन्वती रीयते' इति त्रिष्टुभा।

इयमश्मन्वती रीयते, 'लीङ्-श्लेषणे' अश्मादियुक्ता जलमूर्तिः, अतो हे सखायो ज्ञात्यादय उत्तिष्ठत, संरभध्वं ससंरम्भाः सोद्यमा भवत, प्रचरत जपहोमयागादीनि कर्माणि कुरुत। जलस्पर्शपवित्रिततनवः सन्तः अत्राजहाम ये असन्नशेवाः येऽविद्यमानान्नाः, तान्वयमाजहाम त्यजामः, शिवान् वयमुत्तरेमाभिवाजान्, अभिवाजान् अभिमुखान्नान् अभिमुखानेव मार्गान् वयं शिवत्वादुत्तरेम गच्छेम प्राप्नुयाम।। १४।।

**।। इति पञ्चचत्वारिंशी काण्डिका।। ४५।।**



## ।। अथ षट्चत्वारिंशी काण्डिका ।।

एकाग्नित्यागे -

**शुचिर्भूतः पितृभ्यो दद्यात् ।। १ ।।**

परमेष्ठिप्रमयनिमित्ते ब्राह्मणादीनां दशरात्रादिना यथास्वमशौचे शुद्धे सति परमेष्ठिने श्राद्धं कुर्यादग्निं साधयेदिति तात्पर्यार्थः। यद्यपि च परमेष्ठिनः श्राद्धं मासिकाद्येकोद्दिष्टं, तथाऽप्यऽमावस्यादिश्राद्धमनेकोद्दिष्टं तत्रैवाग्नौ कर्तव्यं तस्याग्नेस्त्या गाभावादिति तदभिप्रायं पितृभ्य इति बहुवचनम्। सर्वं हि पाकयज्ञादिकमुच्यते। अभार्येणापि वाग्निरुत्पादनीयः श्राद्धादिसंसिद्ध्यर्थम्। ततश्च तेन विवाहः कर्तव्योऽवश्यकर्तव्यसिद्धये। एवं तावदादित्यदर्शनप्रभृतयो व्यवस्थिताः। प्रायेण त्वार्यावर्तनिवासिनामविवाहानां प्रमृतपितृकादीनां लौकिकाग्नावेव प्रथमश्राद्धानि विधाय सपिण्डीकरणादूर्ध्वं विवाहं विधायाऽग्निपरिग्रहे त्वरा निरीक्ष्यते, तत्राप्यनादरं न विदधति सन्तः।। १।।

सिद्धवदग्नौ श्राद्धकर्तव्यतामुक्त्वौपसदाग्न्याधानमाह -

**औपवस्त्रं भुक्त्वा कुतश्चिदग्निमानीय तं जागरयीतोपशयीत च ।। २ ।।**

उपवस्तुरशनमौपवस्त्रं तत् पुनर्व्रत्यं हविष्यान्नं शाकमाषलवणमांसादिवर्जं व्रीहियवपयोघृतप्रभृतिभिर्भुक्त्वा स चासद्द्वितीयः कुतश्चिदनिषिद्धाच्छावादिव्यतिरिक्तादग्निं लौकिकमानीय समिन्धेदिन्धनविशेषैः। औपवस्त्रभोजनं तु दशम्यामेव ह्येकादश्यां श्राद्धं भवति। एकादश्यां त्वौपवस्त्रे द्वादश्यां श्राद्धं स्यात्। तं जागरयीत नैशान्तं रक्षेदित्यर्थः। उपशयीत च ऋत्विक्बान्धवसहितस्तत्समीपे शयीतेत्यर्थः। च शब्दाद् गार्हपत्यगर्तोपलेपनार्थोपढौकितपार्थिवसम्भारशब्दवाच्योषशर्करावराहविहितवाल्मीक वपासिकतानां पयसा मिश्रीकरणं समुच्चीयते।। २।।

**उपकाश उपशान्ते भस्मोद्धृत्य ।। ३ ।।**

उपकाशे प्रकाशनकालेऽल्पे प्रकाशे रजन्यन्ते, उपशान्ते तस्मिन्नेवाग्नौ ततोऽग्न्यागारात् गार्हपत्यसदृशगर्तात् भस्मन उद्धरणमपसारणं कृत्वा।। ३।।

**पार्थिवान्सम्भारान्पूर्वया न्युप्य।। ४।।**

ऊषादीन् सिकतापर्यन्तान् पार्थिवसम्भारान् न्युप्य गर्ते प्रक्षिप्य पूर्वया ऋचा, सप्त हि पठिताः, तासां या पूर्वा 'उत्समुद्रात्' इति तया।। ४।।

**उत्तरया व्यूह्य।। ५।।**

षडुत्तरा भवति। तत्राविशेषेऽपि सर्वान्त्या मन्त्रवर्णाद् गृह्यते 'यत्पृथिव्या अनामृतम्' इत्यादिका, 'इयत्यग्र आसीत्' इत्यादिरुत्तरा, - इत्यन्ये।। ५।।

**तमपरेण यथोत्पादितमुत्पाद्य।। ६।।**

तस्य गर्तस्यापरेण पश्चार्धे यथोत्पादितमुत्पाद्य गार्हपत्यवदुत्पाद्येत्यर्थः, करणेतिकर्तव्यतामन्त्रैस्तैरेवोत्पाद्येत्यर्थः। यथैव आश्वत्थीभ्यां शमीगर्भाभ्यामरणीभ्यां मन्त्रविशेषादिभिश्च गार्हपत्य उत्पाद्यते तथैवायमौपसदो गृह्याग्निरावसथ्यः।। ६।।

**जानुदघ्नं धारयित्वादधाति भूर्भुवःस्वरङ्गिरसामिति पूर्वेण, सुगार्हपत्यो विनुदन्नरातीरुषामुषां श्रेयसीं श्रेयसीन्नः। दीर्घायुत्वाय शतशारदायाधीयस्व महते सौभगायेति।। ७।।**

तमरणिनिर्मथनोत्पन्नं समिद्धमग्निं जानुपरिमाणं धारयित्वा भूर्भुवःस्वरित्याधानमन्त्राणामायोगपठितत्वादाद्येन 'सुगार्हपत्य' इत्यनेन वा आदधातीत्यर्थः। जानुदघ्नं संक्षिप्य धारयित्वादधातीति यावत्।। ७।।

**हिरण्यवानस्पत्याः समिध आदाय।। ८।।**

हिरण्यशल्कवानस्पत्याश्च समिधः पृथक् पृथगादाय। उदुम्बराश्वत्थशमीपलाश विहिततरूणामत्र सत्वचः समिधः। 'स त्वमग्न' इति मन्त्रः।। ८।।

**तुल्येन पूर्णाहुती हुत्वा।। ९।।**

परिसमूह्य पर्युक्ष्य परिस्तीर्य 'सप्त ते अग्ने' इत्येकामाज्यपूर्णया स्रुचा, द्वितीयामन्नेन तण्डुलादिना प्रजापतये स्वाहेति जुहुयात् स्रुचा। तुल्यत्वमत्र हविषस्तन्नालिपूरणत्वम्। आहुतिद्वयं तु चतुर्गृहीतेन।। ९।।

**आग्नेयेन स्थालीपाकेन पशुना वा यजेत।। १०।।**

पशुना वेति अत्राग्नेयेन सम्बध्यते।। १०।।

**गौर्वासः कंसो हिरण्यं च दक्षिणा।। ११।।**

गौर्दक्षिणा वस्त्रादिकं च यथाशक्ति।। ११।।

अथाधानोपयोगिनो मन्त्रानुद्धृत्य यथोपयोगं व्याख्यास्यामः। तत्र 'यथोत्पादितमुत्पाद्य' (सू.६) इत्यनेनातिदेशेन सङ्गृहीता यथासम्भवमाधनप्रकरणानुसारेणानेतव्याः।

**सक्षेहि या ते यज्ञिया तनूस्तयारोह।**
**अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः।।**
**तं जानन्नग्न आरोह ततो नो वर्धया रयिम्।**
**यो अश्वत्थः शमीगर्भ आरुरोह त्वय्यपि।।**
**तं ते गृह्णामि यज्ञियैः केतुभिः सह।।**

यो अश्वत्थस्ततो ये सम्पादिते अरण्यौ, ते शमीवत्यौ। शम्या गर्भः शमीगर्भः इति हि तत्पुरुषोऽन्तोदात्तत्वात्, न तु बहुव्रीहिः। अग्निः सम्बोध्यते। हे सक्ष पचनसमये समवेत साक्षाच्छब्दस्य वा सक्षभावः। हे समवेत अर्थादरण्यौ एहि साक्षाद्वा आगच्छ। या ते यज्ञिया तनूः यज्ञार्हा तया अरण्यौ समारोह, अयं तव योनिः, ऋतुः प्राप्तोऽस्य ऋत्वियः, यतो विराजसे। अरोचथाः इति लकारव्यत्ययः। तं जानन्योनिं जानन्नारोह, ततोऽनन्तरमस्माकं रयिं धनं वर्धय।

**मयि गृह्णाम्यहमग्रे अग्निं रायस्पोषेण सह वर्चसेह देवाः।**
**मयि प्रजां मयि पुष्टिं दधामि मदेम शतहिमाः सुवीराः।।**

अनेनाध्वर्युररण्यावात्मन्यारोपयति। हे देवा अग्रे प्रथमतो मयि आत्मनि अग्निं गृह्णामि समारोपयामि, रायो धनस्य पोषेण पुष्ट्या वर्चसा दीप्त्या सह मयि आत्मनि प्रजां च पुष्टिं दधामि। मदेम हृष्टाः स्याम शतं हिमाः समाः, सुवीराः कल्याणवीराः सन्तः।

**यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो मर्त्यां आविवेश।**
**तमात्मनि परिगृह्णीमहे वयम्।।**

हे पितरः पालयितारः आध्यात्मिकाः प्राणप्रभृतयः, यो नोऽस्माकं हृदयेष्वन्तरग्निः परमात्मरूप आविष्टो वैश्वानरो विश्वेषु सर्वेषु नरेषु भवः, तमग्निमात्मनि वयं गृह्णीमहे।

**मैषो अस्मानवहाय परागान्मा वयमेतमवहाय परागाम।।**

अरणी यजमानाय प्रयच्छति। एषोऽग्निरस्मान् त्यक्त्वा मा परागात्। वयमपि एतमग्निं त्यक्त्वा मा परागाम।

**मही विश्पत्नी सदनी ऋतस्यार्वाची एतं धरुणो रयीणाम्।**
**अन्तर्वती जन्यं जातवेदसमध्वराणां जनयतं पुरोगाम्।।**

यजमानोऽरणी गृह्णाति। हे मही महत्यौ विश्वस्य पत्न्यौ सर्वस्य पालयित्र्यौ, सदनी सदन्यौ सीदत्यनयोरिति सदन्यौ। कस्य सदन्यौ। ऋतस्य यज्ञस्य सत्यस्य च तदधीनयज्ञे नानृतं वदेदिति अनृतप्रतिषेधात्। अर्वाची अर्वाग्गामिन्यावनुकूलचेष्टिते एतमागच्छतं हे धरुणे धारयित्र्यौ। केषाम्। रयीणां कर्मफलानाम्, अन्तर्वती अन्तर्वत्न्यौ अग्निगर्भेण गर्भिण्यौ जन्यमग्निं जातवेदसं जातप्रज्ञं जातधनं वा जनयतमुत्पादयतम्, अध्वराणां यज्ञानां पुरोगामग्रगामिनम्।

**उत्समुद्रान्मधुमाँ ऊर्मिरागात्साम्राज्याय प्रतरं दधानः।**
**अमी च ये मघवानो वयं चेषमूर्जं मधुमत्संभरेम।।**

समुद्रादूर्मिरुदागात् उद्गतः, मधुमान् मधुररसः, साम्राज्यस्य सम्यक्पालनाय प्रजानां प्रतरं दधानः प्रतीर्यत इति प्रतरो धनधान्यादिः, तं कुर्वन्। तत्प्रसादादेव ह्यमीपरिदृश्यमाना ये मघवानो धनवन्तः ऊर्जं बलमिषमन्नं मधुमन्मधुररसं बिभ्रति। वयं च सम्भरेम संबिभृमः पार्थिवान् सम्भारान् इषमूर्जं च।

**इयत्यग्र आसीरदो देवि प्रथमाना पृथग्यत्।**
**देवैर्नुत्ता व्यसर्पो महित्वा।।**

इयती एतत्प्रमाणा, अग्रे प्रथमं सर्गादौ प्रजापतिकर्तृकयज्ञारम्भसमये गार्हपत्याधाना खनिरासीत्। तथाच श्रुतिः - 'तस्य यावन्मुखमासीत्तावतीं मृदमुदहरत्सोऽयमभवत्' इति। अदः प्रथमाना पृथग्यत्, इदं प्रथमं या प्रथमाना विस्तरन्ती पृथग्भूता यत् यस्मात् हे देवि देवैर्नुत्ता प्रेरिता सती व्यसर्पः विसृप्तासि महित्वा महित्वेन, अतस्त्वं मया पुण्यवशात्प्राप्तेत्यर्थः।

इयमप्यत्र -

**अदृंहथाः शर्कराभिस्त्रिविष्टपेऽजयो लोकान्प्रदिशश्चतस्रः।**

हे खनि त्वं शर्कराभिर्दृढीभूता सर्वं जितवतीत्यर्थः, त्रिविष्टपे तृतीयस्थाने स्वर्गे वर्तमाना सती अजयस्त्वं लोकान्।

अधिमन्थनशल्केऽरणिं स्थापयति -

**उर्वश्यसि आयुरसि पुरूरवा असि।।**

पुरून् बहून् रावयति ऋग्यजुःसामानि यज्ञद्वारेण पाठयतीति पुरूरवाः आयुश्च भवसि, आयुः प्रजाकर्मसम्पादनद्वारेण।

शल्केऽवस्थाप्यानुमन्त्रयते -

**इत एव प्रथमं जज्ञे अग्निरेभ्यो योनिभ्यो अधि जातवेदाः।**
**स गायत्र्या त्रिष्टुभा जगत्यानुष्टुभा देवेभ्यो हव्यं वहतु प्रजानन्।।**

इत एव निर्मथ्यमानाभ्यामरणिभ्यां प्रथमं सर्गादौ अग्निर्जज्ञे जातः, आभ्यामेव योनिभ्यामरणिभ्यामिदानीं ममेति शेषः। जातवेदाः जातप्रज्ञानः सोऽग्निः गायत्र्यादिभिर्हव्यं वहतु, प्रजानन् प्रकर्षेण चेतयमानः। प्रातःसवने गायत्र्या, मध्यन्दिने त्रिष्टुभा, तृतीयसवने जगत्यानुष्टुभा च पर्यायेण।

सहाग्ने इति मथ्नाति -

**सहाग्ने अग्निना जायस्व सह रय्या सह पुष्ट्या सह प्रजया सह ब्रह्मवर्चसेन।।**

हे अग्ने अग्निना सहात्मना सह जायस्व, तथा रय्या धनेन सह, पुष्ट्या पोषेण सह, प्रजया सह, ब्रह्मवर्चसेन सह प्रजायस्व।

अजन्यग्निरिति जातमनुमन्त्रयते -

**अजन्यग्निर्होता पूर्वः पूर्वेभ्यः पवमानः पावकः शुचिरीड्यः।।**

मन्त्रेऽत्र देवगणस्यार्षम्। अयमग्निर्जातः, होता देवानामाह्वाता पूर्वेभ्योऽपि देवेभ्यः प्रथमः, पवमानस्तथा पावकः शुचिः, आभिस्तनूभिरुपलक्षितः सन्नीड्यः स्तुत्यः।

असुरसीति नासिकोष्मणाभिवृत्य -

**असुरसि प्रथमजा असुर्नामासुरुच्यसेऽसुरहमसुस्त्वं किमद्यासुरसुं करदसोरसुं प्रतीतन संजानीध्वम्।।**

प्राणस्यार्षम्। असुः प्राणोऽसि भवसि त्वं हे अग्ने प्रथमजा 'हिरण्यगर्भरूपः हिरण्यगर्भः समवर्तताग्रे' इति तस्यैव प्रथमजत्वात्। यतश्चासुरिति नाम ते अतोऽसुरुच्यते। असुरहमसुस्त्वम्। आद्यासुरसुं करत्, असुमग्निमहमद्य कृतवान्। अतः असोः सकाशादसुमग्निं प्रतीतन अवगच्छत।

उपविश्योद्दीप्याह -

**भूर्भुवःस्वरङ्गिरसां त्वा देवानां व्रतेनादध आदित्यानां त्वा देवानां व्रतेनादधे द्यौर्मह्नासि भूमिर्भूम्ना तस्यास्ते देव्यदित उपस्थेऽन्नादमन्नाद्यायान्नपत्यायादधे।।**

भूर्लोकस्य भुवर्लोकस्य अन्तरिक्षस्य च अधिष्ठात्र्यो या देवताः तासाम् अङ्गानि रसयन्तीत्यङ्गिरसः प्राणादयस्तेषां देवानां द्योतनादिधर्मकाणां तथादित्यानां व्रतेन कर्मणा व्यापारेण हे अग्ने त्वामहमादधे। हे देवि अदिते दैन्यशून्ये पृथिवि त्वं मह्ना महिम्ना द्यौरसि, भवसि, भूम्ना च भूमिः। अतस्तस्यास्तवोपस्थे उत्सङ्गेऽग्निमादधे। अग्निं कीदृशम्, अन्नादमन्नस्य देवपितृहविषोऽत्तारं भोक्तारम्। किमर्थम्। अन्नाद्यायाऽन्नार्थम्। अग्नेर्हि यागादिद्वारेणान्नं भवति अन्नपत्याय।

**आ यं गौः पृश्निरक्रमीदसदन्मातरं पुनः।**
**पितरं च प्रयन्त्स्वः।।**

**अग्ने गृहपतेऽहिर्बुध्न्य परिषद्य दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय पृथिव्या मूर्धन्सीद यज्ञिये लोके।।**

अयमग्निः पुरः पूर्वं गौरादित्यरूपो वाऽऽक्रमीत् ससार। क्रान्त्वा च मातरं निर्मातरं पितरं च पालयितारं प्रजापतिमसदत् उपसन्नो यजमानफलविशेषयोगयोग्यस्थानविशेषान्वेषणाय। किं ससार। लोकत्रयम्। पृश्निः पृच्छकः। प्रयन्त्स्वः, स्वः स्वर्गमग्निः प्रयन् गच्छन्। अतोऽद्यापि, हे अग्ने गृहपते अहिर्बुध्न्य परिषद्येति चत्वारि सम्बोधनानि, यजमानाय लोकं परिविन्द लभस्व बुध्यस्व वा लोकत्रयमध्ये यत् भद्रं फलं बुध्यसे, तद्यजमानाय प्रयच्छ लब्ध्वेत्यर्थः। पृथिव्या मूर्धनि यो दिव्यो लोकस्तत्र सीद। यज्ञिये यज्ञार्हे।

**यो नो अग्निर्निष्ट्यो यो अनिष्ट्योऽभिदासतीदमहं तं त्वयाभिनिदधामि।।**

यो नोऽस्माकमग्निर्निष्ट्यः संहत्य उत्पन्नोऽभिदासति आभिमुख्येनोपलक्षयति

स्वोत्पत्तये प्रेमत्वातिरेकं कारयति, तं त्वया सह अभिनिदधामि मन्त्रबलेन क्षिपाम्यग्न्याधाने।

**सुगार्हपत्यो विनुदन्नरातीरुषामुषां श्रेयसीं श्रेयसीं नः।**
**दीर्घायुत्वाय शतशारदायाभियस्व महते सौभगाय।।**

हे अग्ने सुगार्हपत्यः शोभनगार्हपत्यः सन् अभियस्वाहितो भव महते बृहते सौभगाय सप्रभावकर्मफलसिद्धये। किं कुर्वन्नाहितो भव। विनुदन्नरातीः, अपसारयन्नरातीः शत्रून्, रातिर्दानं, तन्निषेधेनारातिरदानं, कार्पण्यानि निवारयन्निति वार्थः। उषामुषां, रात्रिं रात्रिं श्रेयसीं श्रेयसीमतिशयेन प्रशस्तां कुरु अस्माकम्। दीर्घायुष्ट्वाय चाहितेऽस्माकं भव। दीर्घायुष्ट्वं विशिनष्टि, शतशारदाय संवत्सरशतपरिमाणायेत्यर्थः।

यास्ते शिवा इति हिरण्यशल्कमादधाति -

**यास्ते शिवास्तन्वो जातवेदो या अन्तरिक्षे दिवि याः पृथिव्याम्।**
**ताभिः सम्भूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्ने।।**

हे अग्ने हव्यं हवनीयं वह हिरण्यशल्कादिकं देवादिभ्यः प्रापय। हे जातवेदो जातप्रज्ञान सम्पन्नधन वा यास्ते तव क्षेमकारिण्यस्तन्वः शरीराणि, अन्तरिक्षे दिवि पृथिव्यां च याः स्थितास्ताभिर्वह हव्यं सम्भूय सर्वात्मीयतनुसङ्घातं कृत्वा। किं तनुसमुदायेनैव, नेत्याह सगणः सपरिवारः सन्, सजोषाः समानप्रीतिः सन् समं प्रविभजेत्यर्थः, तथा हिरण्ययोनिः सन् हिरण्यहेतुः सन् यजमानानाम्। अथवा हेतुगर्भः, यतस्त्वं हिरण्ययोनिर्ब्रह्मपुत्रोऽतो नैककः सन् वोढुं हविरर्हसि।

उदुम्बरादीनादधात्येकैकं मन्त्रावृत्त्या।

**स त्वमग्ने दिव्येन ज्योतिषा भाहि समन्तरिक्ष्येण सं पार्थिवेन। वैश्वानर्या समिधा दीदिही न ऊर्जस्वत्या वर्चस्वत्या भास्वत्या रश्मिमत्या ज्योतिष्मत्या।।**

दिवि भवं दिव्यं ज्योतिर्भानवीयम्, अन्तरिक्षे भवमान्तरिक्ष्यं विद्युदुल्कादिसम्बन्धि, पृथिव्या इदं पार्थिवं काष्ठादीन्धनजम्। हे अग्ने वैश्वानर्या समिधा सम्भाहि सम्यग्दीप्यस्व वैश्वानरो देवता यस्याः सा वैश्वानरी, दिव्यादिकेन ज्योतिषा भाहि समिज्जनितेनास्मान्दीदिहि प्रकाशय ऊर्जस्वत्याऽन्नवत्या उदुम्बरसम्बन्धिन्या ऊर्गौदुम्बर इत्यादिवचनात्, पक्वफलसम्बन्धात् यत ऊर्गन्नमुदुम्बरः। वर्चस्वत्या रूपवत्या, भास्वत्या

दीप्तिमत्या, रश्मिमत्येत्यादित्याद्यभिप्रायम्। अन्ये ऊर्जस्वत्या इहोदुम्बरे भास्वत्यादि-विशेषणचतुष्टयं शम्यादिवृक्षचतुष्टयापेक्षया किञ्चित्साधर्म्यमपेक्ष्य योजयन्ति।

**सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्त धाम प्रियाणि।**
**सप्त होत्रा अनुविद्वान्सप्तयोनीरापृणस्वा घृतेन स्वाहा।।**

कश्चिद्व्याचष्टे -

**घ्रेयं पेयं च दृश्यं च स्पृश्यं श्रोतव्यमेव।**
**मन्तव्यमथ बोद्धव्यं ताः सप्त समिधो मताः।।**
**चक्षुर्नासा च जिह्वा च त्वक् श्रोत्रं चैव पञ्चमम्।**
**मनो बुद्धिश्च सप्तैता जिह्वा वैश्वानरार्चिषः।।**

सप्तर्षयः - शीर्षजाः प्राणाः प्राणाद्याः पञ्चकर्मेन्द्रियवर्गो बुद्धीन्द्रियवर्गश्चेति सप्तर्षयः। सप्त धामानि स्थानानि प्रियाणि, ते तु सप्त लोका महाव्याहृतिवाच्या योगसारे व्याख्याताः। सप्त होत्रा होतार ऋत्विग्विशेषस्ताननुविद्वान् जानन्। एतास्ते तव हे अग्ने सप्त योनयः कारणानि। तास्ता आपृणस्व सन्तर्पय घृतेन स्वाहा सुहुतमस्तु। अध्यात्मिकज्योतिरपेक्षं चैतत्। प्रजापतये स्वाहा सुहुतमस्तु।

**।। इत्यग्न्याधानसरस्वती परिपूर्णा।।**

**।। इति षट्चत्वारिंशी काण्डिका।। ४६ ।।**



## ।। अथ सप्तचत्वारिंशी काण्डिका।।

विवर्तं परिणामं वा आहुर्यस्य जगत्त्रयम्।
तं प्रणम्य हरिं पाकयज्ञानां भाष्यमुच्यते।।

**एष औपसदोऽग्निर्वैवाहनो वा।। १।।**

एष अनन्तरोक्त आहवनीयधर्मक आहितो वैवाहनो वा दक्षिणाग्न्याकृतिः। उभयेऽप्यौपसदः। अन्वर्थसंज्ञेयम्, उपसीदन्त्यस्मिन्नित्युपसत् आवसथः, तत्र भवः औपसदः। वाशब्दो विकल्पार्थः, तेन समुच्चयाभावः। संव्यवहारार्था औपसदसंज्ञा। औपसदेऽग्नौ सायं प्रातरित्यादि। वैवाहनस्य विवाहकर्मण्येव संस्कारः, इतरस्य त्रेताया इवाधानम्। तत्र वैवाहने नष्टे दुष्टे वा पुनराज्यभागान्ते पावमानीभिर्होम-संस्कारो, नान्यो दम्पत्योः संस्कारत्वात् प्रासङ्गिकत्वादग्नेरितरस्य पुनराधानम्।। १।।

**तस्मिन्पाकयज्ञाः।। २।।**

भवन्तीति वाक्यशेषः। औपसदे प्रथमश्राद्धार्थमाहिते पाकयज्ञा न तु लौकिके गर्भाधानादिसंस्कारवत्। स्थालीपाकनिर्वर्त्या यज्ञाः पाकयज्ञा अष्टकाद्याः।। २।।

**तेषामुक्तमुपसमाधानम्।। ३।।**

यदुक्तमुपसमाधानं तदेव तेषां पाकयज्ञानाम्। किमुक्तम्। पञ्चदश्यामौपवस्त्रं भुक्त्वा व्रतचारिणौ स्याताम्, श्वोभूते प्रातर्होमं कृत्वा बर्हिः सन्नह्य समिधौ चोद्धतावोक्षितेऽग्निं साधयित्वा परिसमूह्य पर्युक्ष्य परिस्तीर्याग्नेरुपसमाधानं विभूरसी-त्यनुवाकेन। त्रिभिः स्तरैः परिस्तरणं वैश्रवणीये दर्शनात्। सर्वसम्भारढौकनमुप-समाधानमित्यपि व्याचक्षते। इष्टिविकारत्वादैष्टिको विध्यन्तः सन्निपत्योपकारकोऽ-भीष्टः, अन्वाधानं तु नेष्यते गृह्याग्नौ। प्रयाजानुयाजाश्चारादुपकारिणः। अन्वाधान-मुद्धारः। उपयामं कृत्वोत्तरतः संस्तीर्य पात्राणि प्रयुनक्ति कृष्णाजिनमुलूखलं स्थाली-मेक्षणमुपयामं स्रुवं स्रुचमाज्यधानीं हविष्यांश्चापरेणाग्निमासादयेत्। तांश्च निर्वपेत् अग्नये इन्द्राग्निभ्यामित्यमावस्यायाम्। सावित्रादिनिर्वपणमपि केचिदिच्छन्ति सावित्रा-दिहविर्निर्वपणं सर्वत्रेति वचनात् नह्यन्यत्रास्य वचनस्यावकाशोऽस्तीति। तदयुक्तम्,

यत्र हविर्निर्वपणं श्रूयते गम्यते वा चतुर्थ्या, तत्रैव सावित्रादिनिर्वापो युक्तो यथा गृहमेधीये मारुतेषु त्रैयम्बकेषु। तत्रैव च सूत्रस्यार्थवत्त्वम्। न च गृह्ये निर्वापशब्दोऽस्ति, कस्य सावित्रेण मन्त्रेणानुष्ठानम्। गृह्ये हि चत्वारि हवींष्यासादयेदित्यादिशब्दैर्हविर्निर्वापस्यैवाभावात्। तस्मादिदमस्मै देवतायै हविरित्येव सङ्कल्पनीयं हविः। अग्नये अग्नीषोमाभ्यामिति पौर्णमास्याम्, अग्नये इन्द्राग्निभ्यामित्यामावस्यायां सङ्कल्पमात्रेण मारुतं चरुम् इत्यादि दर्शनात्। गृह्ये हि तस्यै तस्यै देवतायै चतुरश्चतुरो मुष्टीर्निर्वपतीति दृश्यते। सर्वशाखाप्रत्ययवच्च सर्वदेवप्रत्ययं कर्मैकम्।। ३।।

'तेष्वावृदुपचारस्तूष्णीम्, दर्शपूर्णमासप्रकृतयः पाकयज्ञाः' (१३.७.८) इति चोक्तम्। तत्रामन्त्रकत्वस्य तूष्णींपदार्थस्य क्वचिदपवादमाह -

**यथाचरितं च पवित्रसंस्करणाज्यनिर्वपणग्रहणाधिश्रयणोत्पवनमवेक्षणं च ।। ४।।**

यथाचरितं मन्त्रवदित्यर्थः। अवेक्षणं पत्न्या अपि। तत्राच्छिन्नाग्रौ समौ प्रादेशमात्रौ दर्भौ पवित्रकम्। यथोक्तमुपसमाधानमिति तत्र तत्रोक्तम्। हविष्यान्ने चरुस्थलीं पूरयित्वा अमुष्मा इति सङ्कल्प्यावहत्य, निष्पूय चरौ पवित्रान्तर्हिता अपो निषिच्य, तण्डुलादिकं निक्षिप्यावधानेनास्रावितान्त ऊष्मपक्वं चरुं श्रपयित्वाऽभिघार्योद्वास्योदगभिघार्याघारसमिधावादधाति।

**विष्णोर्मनसा पूते स्थः।।**

भृग्वऽङ्गिरसामार्षम्। हे पवित्रे विष्णोर्व्यापकस्य परब्रह्मणो मनसा शुद्धसङ्कल्पितेन पूते भवथः।

**देवो यः सवितोत्पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः।।**

स्पष्टार्थः। पवित्राभ्यामुदकमुत्पूय, तेनैव तूष्णीं हविष्यान् पात्राणि च प्रोक्षति। आज्यधान्यां पवित्रान्तर्हितायामाज्यं निर्वपति।

**पृश्न्याः पयोऽसि तस्य तेऽक्षीयमाणस्य पिन्वमानस्य पिन्वमानं निर्वपामि।।**

सूर्यस्यार्षम्। हे आज्य असि त्वं पृश्न्याः पृथिव्याः दिवो गोर्वा पयः कार्ये कारणस्योपचारात्। संसृष्टा असंसृष्टा वा अपः पर्षति इति पृश्निः। दिवो हि जलं

पतति, ततस्तृणादिद्वारेण घृतम्। एवं पृथिव्यां योज्यम्। गौस्तु साक्षात्क्षीरेण संपृक्ता। तस्य तवाक्षीयमाणस्य प्रवाहरूपेणाविनश्यतो निदाननित्यत्वात् पिन्वमानस्य सिच्यमानस्य पिन्वमानमंशं निर्वपामि आज्यधान्यां प्रक्षिपामि।

देवेभ्य आज्यं निरुप्य गृह्णाति -

**पञ्चानां त्वा वातानां धर्त्राय गृह्णामि।।**

स्यूमरश्मिः सुरश्मिः पृथुरश्मिरिति त्रयो यतयः तेषामिहार्षम्। हे आज्य पञ्चानां प्राणादीनां वातानां जगत्सूत्रभूतानां धर्त्राय धारणार्थं त्वां गृह्णामि। धारणमेव धर्त्रम्।

**पञ्चानां त्वा सलिलानां धर्त्राय गृह्णामि।।**

आज्यकृताद्यज्ञाद्वृष्टिर्भवतीति कृत्वा पञ्चापि कूप्यप्रभृतीनि सलिलान्याज्येन धार्यन्ते, एवं जीवनहेतुत्वमाज्यस्य वृष्टिद्वारेणोक्तम्। अथवा सरणशीलाः सलिला वन्याः पशवः श्वापदादयः।

**पञ्चानां त्वा पृष्ठानां धर्त्राय गृह्णामि।।**

रथन्तरबृहद्वैरूपवैराजशक्वररैवतानि पञ्च पृष्ठानि।

पञ्चानां त्वा दिशां धर्त्राय गृह्णामि।

ऊर्ध्वात्र पञ्चमी दिक्, अधस्तु न गण्यते तस्या अधर्मधार्यत्वात्। यथोक्तम् - '............... गतिरधस्ताद्भवत्यधर्मेण।' इति।

**पञ्चानां त्वा पञ्चजनानां धर्त्राय गृह्णामि।।**

चत्वारो वर्णाः, अनुलोमजो रथकारप्रभृतिवर्गः पञ्चमः - इति पञ्चजनाः। पञ्चजनानामित्यत्र विस्तारवचनः पञ्चशब्दः, पञ्चानामित्यत्र संख्यावाची। विस्तारेण वर्गात्मकेन व्यवस्थितानां जनानां पञ्चानामित्यर्थः।

**भूरस्माकं हव्यं देवानामाशिषो यजमानस्य चरोस्त्वा पञ्चबिलस्य धर्त्राय गृह्णामि।।**

चरन्त्यमुष्मिंल्लोका इति चरुस्त्रिभुवनं, तस्य पञ्चदिशो बिलानि इमे वै लोकाश्चरुः पञ्चबिल इति अन्यार्थदर्शनात्। जगत्त्रयस्य धृत्यै त्वा गृह्णामि यतस्त्वमस्माकं भूः, यज्ञद्वारेण जन्मनिमित्तम्। ते च मद्व्यतिरिक्ता अहं च वयं, तेषामस्माकं हव्यं देवानां

देवानुद्दिश्य हवनात् आशिषो यजमानस्य आज्ये हुते यज्ञसम्पत्तौ यजमानस्याशिषः सम्पद्यन्ते यतः।

**धामासि प्रियं देवानामनाधृष्टं देवयजनं देवताभिस्त्वा देवताभ्यो गृह्णामि।।**

धीयते इति धाम। नामानि स्थानानि वीर्याणीति धामानि, हे आज्य त्वं धाम भवसि। केषाम्। देवानां द्योतमानानां यजमानप्रभृतीनाम्। प्रियं तर्पणं कान्तं च, अनाधृष्टमनभिभवनीयम्, देवा इज्यन्तेऽनेनेति देवयजनं देवताभिः शरीरस्थाभिः प्राणादिभिर्यज्ञदेवतार्थं त्वां गृह्णामि।

अधिश्रयति -

**इषे त्वा ।।**

इष्यत इतीट् अन्नं, तादर्थ्ये चतुर्थी 'सावेकाचस्तृतीयादिर्विभक्तिः' (६.१.१६८) इति, अन्तोदात्तः इति शेषः। अन्नार्थं त्वामधिश्रयामीत्यर्थः। यदापीट् विद्यतेऽस्यासौ इषः कामः 'अकारेकाररेफाश्च प्रत्ययाः' इत्यप्रत्ययान्त इषशब्दः, तथापि 'एकादेश उदात्तः' (८.२.५) इत्युदात्तत्वम्।।

**ऊर्ज इत्यपि तथैव।।**

इषऊर्जशब्दयोरकारान्तयोर्व्यत्ययेन सप्तमीति जिनेन्द्र (उक्तवान्) शब्दलक्षणे सस्मार।

अदब्धेनेति पत्न्यवेक्षते।

**अदब्धेन त्वा चक्षुषाऽवपश्यामि रायस्पोषाय सुप्रजास्त्वाय।।**

इन्द्राण्या आर्षम्। स्त्र्यवेक्षणे। इन्द्राण्या अदब्धेनानुपहिंसितेन चक्षुषा नयनेन, दृक्शक्तेरेकत्वादेकवतनं, हे आज्य त्वां पश्यामि अवलोकयामि। किमर्थम्। रायो धनस्य पोषाय पुष्ट्यर्थं, सुप्रजास्त्वाय शोभना प्रजा यस्याः सा सुप्रजाः, तस्या भावः सुप्रजास्त्वं, तदर्थम्।

ऊर्जे त्वेति अग्रा अधिश्रयति। ऊर्गन्नं तस्येट्शब्देनोक्तत्वात् बलायेति, इत्युक्तं भवति, अथवा लेह्यमन्नमूर्गिति, तस्मै ऊर्जे त्वाधिश्रयामि इति शेषः। यज्ञाद्धि अन्नं भवति।

अग्नेर्जिह्वेति पवित्रेणोत्पुनाति। केशकीटाद्यपनयति। ब्रह्मण आर्षं, देवानां वा।

**अग्नेर्जिह्वाऽसि सुपूर्देवेभ्यो धाम्ने धाम्ने त्वा यजुषे यजुषे।।**

हे आज्य अग्नेर्जिह्वा भवसि, अग्नेस्त्वयि हुते ज्वालोत्तिष्ठति, सैव जिह्वेव जिह्वा। जिह्वाकारणत्वात्त्वमेवाग्नेर्जिह्वा। सुपूर्भव शोभनं पूतमनुपहतं भव देवेभ्योऽग्न्यादिभ्यः, धाम्ने धाम्ने स्थाने स्थाने यत्र यत्र विनियुज्यते उपस्तराभिघारादिभिः, तथा यजुषे यजुषे यज्ञाय यज्ञाय त्वां पुनामीत्यध्याहारः।

हविरसीत्यनेनावेक्षये प्रकृतमाज्यम्।

**हविरसि वैश्वानरमुन्नीतशुष्मं सत्यौजाः सहो नामासि सहस्वारातिं सहस्व पृतनायतः सहस्रवीर्यमसि तन्माजिन्वाज्यस्याज्यमसि हविषो हविः सत्याभिघृतमसि सत्येन त्वाभिघारयामि सत्यं वै चक्षुः।।**

इन्द्रस्यार्षम्। हविरसि भवसि वैश्वानरं सर्वगामि सर्वयज्ञसाधनम्, उन्नीतशुष्ममुत्पादितबलमुपभुज्यमानमाज्यं बलमुत्पादयति, तथा सत्यौजास्त्वं सत्यमविसंवादि ओजो वीर्यं यस्य स सत्यौजाः। लिङ्गव्यत्ययश्छान्दसः। यस्मै कामाय हूयसे तमेवावश्यं जनयसि, सहो नामासि सह इति बलनाम, अभिभवितृ किल त्वम्, अतः किं कुरु। सहस्वाभिभवारातिं शत्रुं, तथा सहस्व पृतनायतः सङ्ग्रामकारिणः। पृतनामिच्छन्तीति क्यप्। ततः सहस्रवीर्यमसि सहस्रं वीर्याणां भवसि। त्वं तन्मा जिन्व प्रीणय कामैर्बलेन वा, आज्यस्य लौकिकस्य सकाशात् त्वमाज्यं श्रेष्ठं यज्ञोपयोगात् यथा देवानामपि दैवतमिति स्तुतिः। एवं हविषः पुरोडाशादिकात् त्वं हविरसि अयातयामत्वात् 'अयातयामं ह्येतत्प्राजापत्यं यदाज्यम्' इति। सत्यं चक्षुस्तेनाभिघृतं सत्यं वै चक्षुरिति मन्त्रः सत्याभिघृतमसि। सत्यस्य हविषः घृतेनाभिघारणं, त्वं पुनः सत्याभिघृतम्। सत्यं चक्षुरिति, यतः सत्याभिघृतमसि अतः सत्येन त्वाभिघारयामि चक्षुषा इत्यर्थः। अवेक्षणमेवाभिघारणम्। तथा सन्तमर्थं याति गमयतीति सत्यं चक्षुः। अवेक्षणं चेति योगविभागात्पत्न्या अप्यवेक्षणं ज्ञायते, अन्यथा एक एव योगोऽभविष्यत्। मैत्रायणीयानां च गृह्ये स्फुटमेवाभिहितं पत्न्यवेक्षणम्।

**प्रागाज्यभागाभ्यामुक्ता आघारौ।। ५।।**

स्रुक्स्रुवौ प्रतितप्य समुन्मृज्य, स्रुचि चतुर्गृहीतं गृहीत्वाऽऽघारसमिधावादाय चरुमभिघार्योदग्दर्भेषूद्वास्याभिघार्योपयामपाणिः प्रजापतये स्वाहेत्युत्तरार्धेऽग्नेः सन्ततं दीर्घं प्राञ्चं प्रज्वालितायां समिध्याघारयति।

**प्रजापतये स्वाहा।।**

प्रजापतये मनसा आत्मने सुहुतमस्तु स्रुवेण। तिष्ठंश्चतुर्गृहीतेन दक्षिणमाघार-माघारयति।

**ऊर्ध्वो अध्वरो दिवस्पृगह्रुतो यज्ञो यज्ञपतेरिन्द्रवान्बृहद्भाः स्वाहा।।**

देवानामार्षम्। अयमाघाराख्यो यज्ञो यज्ञपतेः सम्बन्धी ऊर्ध्व उत्पन्नः। अध्वरो 'ध्वृ-हूर्च्छने', 'हूर्च्छा-कौटिल्ये' अकुटिलः। दिवस्पृक् स्वर्गस्पर्शी स्वर्गप्रद इत्यर्थः। अह्रुतः 'ह्वृकौटिल्ये' अकुटिलः। पुनर्वचनमतिस्तुत्यर्थम्। इन्द्रवान् इन्द्रदैवत-त्वात्, अत एव मन्त्रवर्णात् इन्द्रो दक्षिणाघारे देवता। बृहद्भातीति बृहद्भाः, अति-शयेन प्रकाशमानः सन्तताज्यस्रावणेनाग्नेर्दीप्यमानतया।

तत उपविश्य -

**युक्तः पुरस्तादिति पञ्चभिराज्यस्य जुहोति।। ६।।**

आज्यस्येति द्वितीयार्थे षष्ठी, अवयवावयविसम्बन्धे वा, आज्यस्यांशं जुहोती-त्यर्थः। आज्यग्रहणात् पाकयज्ञेष्वन्यदप्यौषधिद्रव्यं प्रधानमस्तीति ज्ञापयति।

**युक्तः पुरस्ताद्वह हव्यमग्नेऽग्रे विद्धि क्रियमाणं मयेदम्।**
**त्वं भिषग्भेषजस्यासि गोप्ता त्वया प्रसूता गामश्वं पुरुषं सनेम स्वाहा।। १।।**

आग्नेय्यस्त्रिष्टुभिः सर्वाः। हे अग्ने युक्तोऽभियुक्तः सावधानः सन् हव्यं वह प्रापयान्यदेवताभ्यः, पुरस्तात् पूर्वस्यां दिशि या व्यवस्थितास्ताभ्यः। मम किमभिहितम्। यतो यत् किञ्चित् क्रियमाणं मयेदं कर्म, तदग्रे प्रथमं तवैवेति विद्धि बुध्यस्व, त्वन्मुखेनैवान्यदेवताभिरुपयुज्यमानत्वात्। त्वं हि सर्वकर्मणां भिषक् चिकित्सकः, विगुणकर्मणस्त्वत्प्रसादादेव परिपूर्तेः। भेषजस्य संसारदुःखनिवृत्तिहेतोर्यज्ञस्य त्वमेव गोप्ता भवसि। त्वयैव च प्रसूता अनुज्ञाताः सन्तो वयं गां स्वर्गं धेनुरूपं, तथा पुरुषं भृत्यादिकमश्वं च कर्मफलभूतं सनेम प्राप्स्यामोऽनुभविष्यामः।

**हृदा पूतं मनसा जातवेदो विश्वान्यग्ने वयुनानि विद्वान्।**
**सप्तास्यानि तव यान्यग्ने तेभ्यो जुहोमि स जुषस्व हव्यं स्वाहा।। २।।**

हे अग्ने हृदाऽन्तरात्मना मनसा च सत्यसङ्कल्पेन मानसेन पूतं पवित्रं हव्यं जुषस्व। हे जातवेदः उपजातप्रज्ञान विश्वानि सर्वाणि वयुनानि पराभिप्राय-प्रकाशकानि ज्ञानानि जानन् अन्तरात्मविवर्तवैश्वानररूपेण। हे अग्ने यानि तव सप्त आस्यानि मुखानि, तेभ्यो जुहोमि। अतस्त्वमेवं ज्ञात्वा जुषस्व। सप्तास्यानि, बाह्यानि बुद्धीन्द्रियाणि मनो बुद्धिश्च। अस्यति क्षिपति ह्येतैर्विषयेषु जीवात्मनो वैश्वानरः। तथाच प्राणप्रकरणे गीतासूक्तम् -

'तेषामन्योन्यभक्षाणां सर्वेषामेव देहिनाम्।
अग्निर्वैश्वानरो मध्ये सप्तधा निहितोऽन्तरा।।
घ्राणं जिह्वा च चक्षुश्च त्वक् छ्रोत्रं चैव पञ्चमम्।
मनो बुद्धिश्च सप्तैता जिह्वा वैश्वानरार्चिषः।।
घ्रेयं पेयं च दृश्यं च स्पृश्यं श्रव्यं तथैव च।
मन्तव्यमथ बोद्धव्यं ताः सप्त समिधः स्मृताः।।' इति।

आस्यानां भक्षणीया इत्यर्थः।

**यावन्तो देवास्त्वयि जातवेदस्तिर्यञ्चो घ्नन्ति पुरुषस्य कर्म।**
**तेभ्य एतद्भागधेयं जुहोमि ते मे तृप्ताः काममनु तर्पयन्तु स्वाहा।। ३।।**

जाते जाते विद्यते जातवेदाः परमात्मान्तर्यामी वैश्वानररूपः, तस्य सम्बोधनं हे जातवेदः यावन्तो देवा द्योतमानाश्चक्षुरादयस्त्वयि स्थिताः सप्त तिर्यञ्चस्तिरश्चीनाञ्चनाः विषयान् प्रति कुटिलगतयः, अत एव पुरुषस्य परापरपुरुषार्थफलं कर्म घ्नन्ति नाशयन्ति कर्तुमेव न ददति, कृतमपि वा प्रतिबध्नन्ति तीव्रपापवर्तनात्, तेभ्यस्तदधिष्ठातृदेवताभ्यो रविप्रभृतिभ्य एतद्भागधेयं जुहोमि। ते चानेन तृप्ताः प्रीताः सन्तो मम कामं काम्यमानं परापरपुरुषार्थं तर्पयन्तु साहाय्यमानुकूल्यं तत्राचरन्तु।

**अग्ना अग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः।**
**स नः सूनुः सयुजायुजा च मा देवानां रीरिषद्भागधेयं स्वाहा।। ४।।**

अग्नौ आहवनीयेऽग्निर्निर्मन्थ्यः प्रविष्टः सन् चरति हवींषि भक्षयति। ऋषीणा-

मृत्विजां पुत्रो जन्यस्तैर्निर्मन्थ्यारणिभ्यामुत्पादितत्वात्। एषोऽधिराजः, आधिक्येन राजमानः। सोऽग्निर्नोऽस्माकं सूनुर्जन्यः सयुजा सहयोगेनाहवनीये प्रविष्टत्वेन अयुजा च स्वरूपपृथक्त्वेन वर्तमानो देवानां भागधेयं यज्ञं मा रीरिषत् मा हिंसीत्। निर्मन्थ्यो गृह्याग्निराहवनीयकुण्डसादृश्यात् तत्र प्रविष्ट उपचर्यते, वैवाहने त्वात्यन्तिक उपचारः। यद्वा अन्तरात्मा ब्रह्मान्तर्यामी जाठरमग्निं प्रविष्टः स्वयमग्निर्वैश्वानरश्चरति पश्यति ऋषीणामवबोधधनानामिन्द्रियाणां पुत्रः पात्रं तदधिष्ठान एव तेषां स्वकार्यकरणात्, अधिराजः अधिष्ठातृत्वेन राजमानः स्वप्रकाशः, एष इति प्रत्यात्मं प्रत्यक्षनिर्देशः। सर्वो हि स्वयं चेतयते परमेश्वरपरतन्त्रोऽहमिति। यत उक्तम् - 'अज्ञो जन्तुरनीशोऽयम् ................।' इति। स नोऽस्माकं सूनुः सविता (सहचरिता) अनुज्ञाता वा, सयुजा सहयोगेन, अयुजा च पृथग्भावेन वर्तमानो जाठरोऽग्निर्देवताभागं मा रीरिषत् मा गात्, किं तर्हि परमात्मगामिन्यः सर्वा आहुतयः सम्पद्यन्ताम्। रिषिरिह गत्यर्थः। अथवा परमात्मैव भागधेयं विभागमविद्यापरिकल्पितं देवानाम् इन्द्रियाणां सम्बन्धि मा गात्, किं तर्हि स्वरूपे विमले विश्राम्यत्विति प्रकृतफलशंसनम्।

**प्रजापते नहि त्वदन्य एता विश्वा जातानि परि ता बभूव।**
**यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्।। ५।।**

हे प्रजापते परमात्मन् नहि त्वदन्य एतानि जातानि त्वत्तो विवृत्तानि परिणतानि वा हिरण्यगर्भादीनि कीटपर्यन्तानि विश्वानि सर्वाणि भूतानि परिबभूव परिभवति व्याप्नोति, अतस्त्वामेवाभ्यर्थयामहे - त्वमेवाविद्याजालं संहृत्य मोचयसि याज्ञिकान्। अतो यत्कामयमानास्तव होमं कुर्मस्तदस्माकं सम्पद्यताम्। वयं त्वदर्थयागसम्पत्तये रयीणां धनानां पतयः स्याम। स्वाहाकारनिर्देशेष्वऽर्थलुप्तो वषट्कारः। याज्या(ज्य)भावाच्च वषट्कारलोपः। याज्यभावोऽपि देवतामात्रनिर्देशात् चतुर्थ्यन्तेन स्वनाममात्रनिर्देशेन वा देवताप्रतीतेः। नहि तद्वत्त्वं विना विशेषेण देवता प्रतीयते, वार्त्रघ्नावाज्यभागावित्यादाविव।

**आयुषः प्राणमिति सन्तनीर्जुहोति।। ७।।**

**आयुषः प्राणं सन्तनु स्वाहा, प्राणाद्व्यानं सं०, व्यानादपानं सं०, अपानाच्चक्षुः सं०, चक्षुषः श्रोत्रं सं०, श्रोत्राद्वाचं सं०, वाच आत्मानं सं०, आत्मनः पृथिवीं सं०, पृथिव्या अन्तरिक्षं सं०, अन्तरिक्षाद्दिवं सं०, दिवः स्वः संतनु स्वाहा।।**

आयुषः प्राणमिति एकादश नाभेर्भौवनस्य वैखानसानां वा आर्षम्। आयुषो जीवनस्य प्राणं सम्बद्धं कुरु। प्राणादित्यादिपञ्चमी षष्ठ्यर्थे। सर्वत्र च योजना तुल्या। द्युशब्देन स्वर्गस्याभिहितत्वात् स्वःशब्देन ब्रह्मलोक उक्तः। अन्तरात्मनश्चैते प्रेष्याः। आभिराहुतिभिरनया प्राणाग्निकया ब्रह्मप्राप्तिः, मा पुनरत्र निमग्नो भूः येन कर्मणा इच्छेत्तत्र जयाञ्जुहुयादितीहापि विनियोगः। ते च त्रयोदश, तान्मन्त्रान् व्याख्यास्यामः।

**जयाभ्यातानान्।। ८।।**

त्रयोदश जयाः। अभ्यातानहोमश्चतुर्दश जयाश्च, अभ्यतानाश्च जयाभ्यातानाः, तान् जुहोतीत्यनुषङ्गः।

**आकूतं च स्वाहा। आकूतिश्च स्वाहा। आधीतं च स्वाहा। आधीतिश्च स्वाहा। विज्ञातं च स्वाहा। विज्ञातिश्च स्वाहा। चित्तं च स्वाहा। चित्तिश्च स्वाहा। नाम च स्वाहा। क्रतुश्च स्वाहा। दर्शश्च स्वाहा। पूर्णमासश्च स्वाहा।।**

जयानां देवानामार्षम्। क्वापि पूर्वकल्पे ये द्वादश आदित्या बभूवुस्ते त्वभिव्यक्तनित्यनिर्मलज्ञानानन्दा अपवर्गनगरद्वारवर्तिनो जाताः, तत एवात्र मन्त्रेषु देवताः। एतच्च ब्रह्माण्डपुराणे यथावदवस्थितम्। ब्राह्मणनिगमस्त्वन्यथा व्याचष्टे - सोऽनुस्त्रियते यथाविनियोगं तस्योपयोगादमीषां सर्वगत्वेन। यज्ञो वा आकूतं, दक्षिणा आकूतिः। आकूतं हि सङ्कल्पः तत्प्रभवत्वाद्यज्ञ आकूतम्, 'आकूताय वै प्रायो यज्ञः प्रयुज्यते' इति 'यज्ञः सङ्कल्पसम्भवः' इति। दक्षिणा आकूतिरित्यप्येवमेव। प्रजा वा आधीतं, पशव आधीतिः। प्रजां हि प्रति सर्वस्याध्यानं भवति, पशूंश्च सर्वो ध्यायति। साम वै विज्ञानम्, ऋग्विज्ञातिः। ऋक्सामयोः शब्दरूपत्वात्, शब्दस्य च विज्ञापनत्वादेवमुक्तम्। मनो वै चित्तं वाक् चित्तिः। प्रजापतिर्नाम वै ब्रह्मा क्रतुः। दर्शपूर्णमासौ कालविशेषौ प्रसिद्धौ।

**प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाजिषु।**
**तेभिर्वाजं वाजयन्तो जयेम तेनेमा विश्वाः पृतना अभिष्याम स्वाहा।।**

प्रजापतिर्जयानिन्द्राय प्रायच्छत् प्रादात्। कीदृशायेन्द्राय वृष्णे सेक्त्रे, वर्षति ददाति कामानिति वा वृषा, तस्मै वृष्णे। उग्रः समर्थः। कुत्र विषये प्रायच्छत् पृतनाजिषु सेनासङ्ग्रामेषु। स च तैर्जयैः पराः पृतना जितवानिन्द्रः। अतो वयमपि

तेभिस्तैर्जयैर्वाजमन्नं जयेम प्राप्नुयाम वाजयन्तो वाजमन्नमिच्छन्तः। तेन वाजेन प्रक्रान्तेन इमा विश्वाः समस्ताः परसेना अभिष्याम अभिभवेम।

**बृहस्पतिपुरोहिता देवा देवानां देवा देवाः प्रथमजा देवा देवेषु पराक्रमध्वं, प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु त्रिरेकादशास्त्रयस्त्रिंशा अनु व आरभ, इदं शकेयं यदिदं करोमि, ते माऽवत ते मा जिन्वतास्मिन्ब्रह्मण्यस्मिन्क्षेत्रेऽस्यामाशिष्यस्यां पुरोधायामस्यां देवहूत्यां स्वाहा।।**

अभ्यातानानां देवानामार्षम्। अभ्याताना देवा इन्द्रादय आभिमुख्येन यज्ञतननात्। हे देवा बृहस्पतिपुरोहिताः बृहस्पतिः पुरोहितो येषां ते बृहस्पतिपुरोहिताः यूयं देवानामपि द्योतमानानां साम्प्रतयज्ञिकानां भविष्यद्देव(देवता)भावानामन्येषां च यज्ञप्राप्त्या देवरूपाणां देवा उद्देश्याः कर्मसु, अतो देवेषु साम्प्रतयजमानेषु पराक्रमध्वं प्रक्रान्तयज्ञसिद्ध्यै समुद्योगं कुरुध्वम्। प्रथमा भूयिष्ठा द्वितीयेषु अन्तरिक्षस्थेषु पराक्रमध्वं, ये प्रथमास्ते द्वितीयान् सहायान् कुरुध्वमित्यर्थः। एवं द्वितीया अन्तरिक्षस्थास्तृतीयेषु सत्सु पराक्रमध्वम्। किं बहुना। त्रिरेकादशा यूयम्, अत एव त्रयस्त्रिंशाः, सर्वेषामेव युष्माकमिदं कर्माहमन्वारभे आरभे। तद्भवत्प्रसादाच्छकेयम् यत्करोमि। ते यूयं मामवत जिन्वत च मां त्रयस्त्रिंशद्देवाः, 'जिन्वतिः प्रीणनार्थः' अस्मिन् ब्रह्मणि वेदे विषयभूते मामवत। अस्मिन् क्षेत्रे वैदिके बले, अस्यां च वैदिक्यामाशिषि स्थितमस्यां च पुरोधायाम्, आशीर्विशेषणमेतत्, पुरोऽग्रे धीयमानायामाशिषि स्थितं मामवत युष्मत्प्रत्यक्षं विधीयमानायामित्यर्थः। देवहूत्यां देवाह्वाने च स्थितं मामवत।

**राष्ट्रभृतश्च।। ९।।**

अत्रापि जुहोतीत्यपेक्षते। राष्ट्रभृत्संज्ञया प्रसिद्धास्त्रयोदशाहुतयः। ता हि हुता राष्ट्रं त्रिलोकीलक्षणमपि बिभ्रति धारयन्ति पुष्णन्ति च, कैवासम्भावना परिमिताभिमतपुरुषार्थसिद्धौ।

'गन्धर्वाः षड्विधा ज्ञेया गन्धर्वाण्यस्तथैव च।
गन्धर्वा ब्रह्मपुत्राख्या ऋषिपुत्र्यश्च कन्यकाः।।'

**ऋताषाडृतधामाग्निर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट्।। १।।**

सर्वत्र राष्ट्रभृतां देवानामार्षम्। राष्ट्रभृतश्च आदित्याग्निचन्द्रवायुदिवसरात्रियज्ञ-दक्षिणात्मकाः, ये बोधप्रतिबोधेत्यनुवाके व्याख्याताः। अग्निरत्र देवता। ऋतं जलं सहते प्रसहतेऽभिभवति काष्ठसागरादिगतं दहति भौमबाडबादिको यतः, अत ऋताषाट् 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' (६.३.११६) इति दीर्घः। 'सहेः पृतनर्ताभ्यां च' (८.३.११९) इति षत्वम्। ऋतधामा धामशब्दस्य त्रयोऽर्थाः - नाम स्थानं तेजश्चेति, ऋतशब्दस्यापि - सत्यं जलं यज्ञस्तेजश्चेति चत्वारः। सत्यतेजाः उत्कटबलः, यज्ञस्थानः, जलस्थानश्च बडबाग्नौ दर्शनात् आर्द्रेन्धने च, स्थिरस्थितित्वात् सत्यनामा च। अङ्गति गच्छति सर्वानार्थानित्यग्निः, नहि अग्निशून्यं किञ्चिदस्ति सर्वत्र चोष्मदर्शनात्। अग्निरिति नामधेयमितरविशेषणनिवेशनिर्देशाय। गां स्वर्गं धारयति यज्ञसम्पत्तिद्वारेणेति गन्धर्वः। सोऽग्निर्नोऽस्माकं सम्बन्धि इदं प्रत्यक्षप्राप्तं ब्रह्म वर्धनं पश्वादिवेदसम्पदां चयनं क्षत्रं क्षरत्पातु रक्षतु। स्वाहेति निपातस्य सम्प्रदानार्थीयस्य सुहुतमस्तु इति सर्वत्र अर्थः। वडिति 'वी गति..........' इत्यस्य वर्णागमे वर्णविपर्यये च रूपम्, वहतेः क्विबन्तस्य वा, तेन वेतु वहतु वेत्यर्थः। सुहुतमस्तु, तच्चाग्निरश्नातु प्राप्नोतु वेत्यर्थः।। १।।

**तस्यौषधयोऽप्सरसो मुदा नाम ताभ्यः स्वाहा वट्।। २।।**

तस्याग्नेरोषधयः पत्न्य इत्यर्थः। अप्सरसोऽप्सु सरन्तीत्यप्सरसः रूपविशेषयुक्ता वा कान्तिमत्य इति वा। मुदा इति नाम्ना प्रसिद्धाः, मोदयन्ति व्याधिनिवृत्तिद्वारेण जनान्, स्वयं च मोदन्त इति मुदाः। ताभ्यः सुहुतमस्त्विति पूर्ववत्।। २।।

**सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट्।। ३।।**

सुम्नमिति सुखनामसु पठ्यते, सुसुखाः सूर्याद्रश्मयो यस्य स सूर्यरश्मिः। यथोक्तम् -

'अम्मयत्वेऽपि चन्द्रादेः सावित्रा एव रश्मयः।
प्राप्य प्रतिहतास्तत्र नेत्रसंसर्गभागिनः।।' इति।

चन्द्रमा इति नाम आह्लादननिमित्तम्। तुल्यमन्यत्।। ३।।

**तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ताभ्यः स्वाहा वट्।। ४।।**

तस्य चन्द्रमसः पल्यो भेकुरयो नाम नक्षत्ररूपाः। स्पष्टमन्यत्।। ४।।

**संहितो विश्वसामा सूर्यो गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वा०।। ५।।**

सूर्य इति नाम। विश्वसामा सर्वतेजाः। संहितः सम्यग्घितः, प्रजाभ्यः संहितः।। ५।।

**तस्य मरीचयोऽप्सरस आयुवो नाम ताभ्यः स्वाहा वट्।। ६।।**

तस्य सूर्यस्य मरीचयः पल्यः। आ समन्तात् यौति मिश्रीभवतीति आयुवः। मूलविभुजादित्वात् कः।। ६।।

**भुज्युः सुपर्णो यज्ञो गन्धर्वः स न इन्द्रं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट्।। ७।।**

यज्ञो यागः। सुपर्णः सुपतनः शोभनगमनः स्वर्गादावतिव्यवहितेऽपि फलारम्भात्। भोगो भुक् भुजमिच्छति भुज्युः 'क्याच्छन्दसि' (३.२.१७०) इत्युप्रत्ययः, स्वर्गादिफलद्वारेण।। ७।।

**तस्य दक्षिणा अप्सरसस्तवा नाम ताभ्यः स्वाहा वट्।। ८।।**

यज्ञस्य दक्षिणा पत्नी।। ८।।

**प्रजापतिर्विश्वकर्मा मनो गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट्।। ९।।**

विश्वं सर्वं यस्य कर्म कार्यं स विश्वकर्मा। मन्यते इति मनः।। ९।।

**तस्य ऋक्सामान्यप्सरस एष्टयो नाम ताभ्यः स्वाहा वट्।। १०।।**

एष्टयो नाम पत्न्यः। आ समन्तादिष्टय एष्टयः।। १०।।

**इषिरो विश्वव्यचा वातो गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट्।।**

'इषु-गतौ' इषिरो गमनशीलः। 'व्यच-सम्भवे' विश्वव्यचाः सर्वसम्भवहेतुर्वृष्ट्यादिद्वारेण।। ११।।

**तस्यापोऽप्सरस ऊर्जो नाम ताभ्यः स्वाहा वट्।। १२।।**

आपस्तस्य वायोः पत्न्य ऊर्जोऽन्नवत्यो बलवत्यश्च।। १२।।

एता द्वादशाहुतयो मिथुना उच्यन्ते पतिपत्नी युगलसम्प्रत्ययात्, तथा अग्निचयन एते मन्त्राः पठ्यन्ते। तत्र च 'एते राष्ट्रभृतः' इत्युपक्रम्य, 'मिथुना आहुतयः प्रजात्यै द्वादश' इति श्रूयते। ताश्चाग्नौ, त्रयोदशी तु रथमुखे।

**स नो भुवनस्य पते यस्य त उपरि गृहा विराट्पते।**
**अस्मै ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ स्वाहा।। १३।।**

प्रजापतिर्देवता यः सप्तरथः श्रुतः 'य एष सप्तरथः प्रजापतिरेवैष' इति। हे भुवनस्य भूरादिसत्यान्तस्य पते रक्षक। विराट्पते विराजः पते उत्पत्त्यादिहेतो। तथा च मनुः -

'द्विधा कृत्वाऽऽत्मनो देहमर्धेन पुरुषोऽभवत्।
अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः।।' इति।

स त्वं महि महत् शर्म सुखं यच्छ यजमानाय, अस्मै ब्रह्मणेऽस्मै च क्षत्राय, एतेभ्यो ब्राह्मणेभ्य एतेभ्यश्च क्षत्रियेभ्यः। यस्य ते उपरि गृहा यदाश्रिता लोका इत्यर्थः। एषा त्रयोदशी आहुती रथमुखे।। १३।।

**विश्वा आशा अप्सरसः प्रियास्ता न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा।। १४।।**

विश्वाः सर्वा आशाः कामना अविद्यावासनाः, ताः पत्न्यः ब्रह्मण आयत्तास्तत्त्वज्ञानांशेन, अविद्यांशेन तु भार्याः। इह पत्नीनां परिज्ञानमेव केवलं, न तु होमः आहुतित्वानवगमात्। यथा 'स नो भुवनस्य' इति पूर्णां स्रुचं जुहुयात्, एकैवाऽहुतिरुच्यते। यथा 'मिथुना आहुतयः प्रजात्यै द्वादश' इति द्वादशानां मिथुनत्वमुक्तं न तु त्रयोदश्याः। सूत्रमपि चतुर्दशमन्त्रस्य पत्नीपरिज्ञानमात्रपर्यवसायित्वं द्योतयति, एवमपि एषोऽपि रथाख्यो गन्धर्वः सपत्नीको विदितो भवति। रथः सप्तरथः।। १४।।

**वार्त्रघ्नावाज्यभागौ।। १०।।**

राष्ट्रभृदनन्तरं वार्त्रघ्नावाज्यभागौ जुहोति। उभयत्र चोभौ पौर्णमास्याममावास्यायां च। अन्येषु पाकयज्ञेषु आज्यमेव भागो ययोस्तौ आज्यभागौ अग्नीषोमौ। वृत्रहणौ वृणोति आवृणोति जीवात्मानं वृत्रं पापं तमश्च, तस्य हन्तारौ वृत्रहणावेव वार्त्रघ्नौ। आज्यशब्दोऽत्रापि धर्माणां ग्राहकः, तेन चतुर्गृहीतेन होमः। आग्नेयस्याग्नेयौ याज्यानुवाक्ये द्वितीयस्य सौम्ये। अन्ये त्वाहुः - न याज्यैवानुवाक्या भवितुमर्हति, अनुवाक्यया प्रैषः, याज्यया हविष्प्रक्षेपः। तत्र गायत्र्योऽनुवाक्यास्त्रिष्टुभो याज्या इति प्रायिकः, अत एवात्र वार्त्रघ्नशब्दोऽनुवाक्याया ग्राहक इत्याहुः। तथा चोक्तं, 'यत्र वृत्रस्तत्रानुवाक्या' इति।। १०।।

**अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपण्यया। समिद्धः शुक्र आहुतः स्वाहा।।**

ऋषिपुत्राणामार्षम्। अग्निराहुतः प्रक्षिप्तहविष्कः सन् वृत्राणि पापानि तमांसि शत्रूंश्च जङ्घनत् हन्ति, अर्थाद्यजमानस्य। समिद्धः प्रज्वलितः सन्, अत एव शुक्रो देदीप्यमानो द्रविणस्युर्द्रविणं धनम् इच्छति यजमानस्य द्रविणस्युः। कया विपण्यया विशिष्टस्तुत्या। यद्वा 'मन-ज्ञाने' इत्यस्य मवर्णस्य व्यत्यये विपर्यासे विशिष्टप्रज्ञया इत्यर्थः, अनेकार्थत्वाद्धातूनाम्।

**त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा। त्वं भद्रो असि क्रतुः स्वाहा।।**

हे सोम त्वं सत्पतिः सतां पतिः पालकोऽसि भवसि। त्वं राजा 'सोम ओषधीनां राजा' इति श्रुतेः। राजते दीप्यते इति राजा। उतेति तथार्थे। वृत्रहा च पापादेर्नाशकः, तथा त्वं भद्रो भन्दनीयः कल्याणः सुखकारी असि भवसि। क्रतुः क्रान्तदर्शनस्तथा त्वमेव। अथवा क्रतुर्यज्ञः सोमस्य प्रजापतिरूपत्वात् प्राजापत्यात्मकत्वाच्च यज्ञस्य। अग्नीषोमाविदं 'सर्वं यदन्नं चान्नादश्च' इति ब्रह्मणो द्वितीयस्याग्नीषोमात्मकत्वश्रवणात्, 'प्रजापतिर्वै यज्ञ' इति चाम्नानात्। एतदाज्यभागान्तं कर्मोपसमाधानशब्देनोच्यत इत्याहुः। 'अग्निमुपसमाधायाज्यभागान्तं हुत्वा', इत्यर्थात्।

**स्विष्टकृदाज्यभागा अन्तरेणावापः।। ११।।**

उक्तयोराज्यभागयोर्भविष्यतः स्विष्टकृतश्च मध्ये आवापः कर्तव्यः। आवापशब्देन स्थालीपाकयज्ञा आग्नेयादय उच्यन्ते द्रव्यदेवताविशेषयोगेन ये चोदिता व्यक्तचोदनिकाः। अथवा स्विष्टकृदाज्यभागा अन्तरेणावापः प्रधानकर्मणां कर्तव्य इत्याध्याहारेण पूरयितव्यम्।। ११।।

**नामधेयेन देवतां यजेत तद्देवतया वर्चा।। १२।।**

आग्नेयस्थालीपाकस्याऽग्नये स्वाहेति नामधेयेन जुहुयात्, पर्वणि स्थालीपाकस्याग्नये स्वाहा, अग्नीषोमाभ्यां स्वाहेति। तद्देवतया वा ऋचा इति पक्षान्तरम्। ऊहविधानादृक्पक्षोऽभिमततर इत्याहुः। ऋचमप्यनुवाक्यामेव क्वचिदाहुः। एवमेव हि स्वाहाकारान्तत्वमुपपद्यते। याज्यायां हि वषट्कारान्तत्वं भवेत्। याज्ययैव तु आर्यदेशेष्वनुष्ठानं दृश्यते। प्रायः कामचार इति तु व्याख्यातारः। तत्र 'अशनखादनदानलिङ्गकाः याज्याः, आह्वानलिङ्गकास्त्वनुवाक्याः' इति लक्षणमाहुः। यद्यपि चानुवाक्य-

यैव होमस्तत्र च स्वाहाकारान्तता, याज्ययैव यागस्तत्र च वषट्कारान्तता, 'याज्या अपि वषट्करोति' इति श्रुतेः, तथापि याज्यया यदा पाकयज्ञस्तदा दर्शपूर्णमासदेवताभ्यो जुहुयादिति चोदनया स्वाहाकारो भवतीत्याहुः।। १२।।

**आग्नेयीं वोहेदग्नीषोमीयामैन्द्राग्नीं वा द्विदेवतेषु, वैश्वदेवीं बहुदेवतेषु।।१३**

आग्नेये स्थालीपाके तावदाग्नेयी युक्ता, यदा न नामधेयेन यागः। देशकालकुलभेदेन नागविनायकग्रामयक्षप्रभृतीनां यागाः प्रसिद्धाः। यद्देवताभिधानसमर्था वेदे मन्त्रा नाऽम्नाताः, तेष्वपीष्टेषु दर्शपूर्णमासयोरिति नयेनातिदेशप्राप्ता आग्नेयादिमन्त्राः स्मार्तादिष्वेवोहनीयाः, तस्माद्दक्षु नोहेत् इति ऋक्षूहनिषेधाद्बहुवचनमर्थवत्। तत्रैकदेवतेष्वाग्नेयीमतिदेशप्राप्तामूहेत्। द्विदेवतेष्वग्नीषोमीयामैन्द्राग्नीं वा। प्रकृतावग्नीषोमीयमेकादशकपालं निर्वपेत्, ऐन्द्राग्नमेकादशकपालं निर्वपेत् पौर्णमास्यामिति च शाखाभेदेन पठ्यते। बहुदेवतेषु तु वैश्वदेवीं विश्वेदेवप्रकाशनसमर्थामतिदेशप्राप्तामृचमूहेत्। बहुदेवतानां वैश्वदेवप्रकृतित्वस्य न्याय्यत्वात्।। १३।।

**ऋतुतिथिनक्षत्रदेवताश्च यजेत।। १४।।**

ऋतवो वसन्ताद्यास्तांस्तदधिष्ठातृभूताश्च देवता नामधेयेन यजेत। एवं तिथीस्तदधिष्ठातृभूताश्च देवता यजेत। तथा नक्षत्राण्यश्विन्यादीनि, तद्देवताश्च। ताश्च शान्तिविमोकमन्त्रेषु पठिताः, व्याख्याताश्च। प्रधानदेशा वा प्राधान्यमिति विज्ञेयम्। स्विष्टकृदाज्यभागमध्यं हि प्रधानस्थानम्, प्राचीनार्वाचीनवर्गौ च साधारणौ। प्रयाजानुयाजास्तु गृहमेधत्वेन पाकयज्ञेषु निषिद्धाः। 'गृहमेधो वै पाकयज्ञो न प्रयाजानुयाजा इज्यन्ते, नानुयाजसामिधेनीरन्वाह' इति श्रुतिः।। १४।।

**प्राक् स्विष्टकृत उपहोमाः।। १५।।**

इह गाव इत्यादय उपहोमाः, तेषां स्विष्टकृतः पूर्वत्वं नियम्यते तद्भक्तत्वप्रदर्शनाय। कथं नु नाम स्विष्टकृन्निषेधेन निषेधः उत्कर्षाच्चोत्कर्षः स्यादिति।। १५।।

**इह गावोऽयं यज्ञ आ नः प्रजां धूर्भिरुपधूर्भिश्च हुत्वेडामग्न इति स्विष्टकृतम्।। १६।।**

यजेतेत्यनुषङ्गः। इह गाव इत्यादीनुपहोमान् हुत्वा, मध्यात्पूर्वार्धाच्चावदाय, स्विष्टकृतं यजेत इडामग्न इति मन्त्रेण।। १६।।

**त्वं नो अग्न इति द्वाभ्यां जुहुयात्।। १७।।**

तत एतदाहुतिद्वयं जुहुयादित्यर्थः।। १७।।

**अया भूरिति च[1]।। १८।।**

जुहुयादित्यनुषज्यते।। १८।।

**परिस्तरणान्यनुप्रहरेन्नानुप्रहरेदित्येके।। १९।।**

सूक्तवाक्येन प्रस्तरं प्रहरतीति प्रकृतावाम्नातम्। तत्पाकयज्ञेषु केचिदिच्छन्ति, केचिन्नेच्छन्तीत्यर्थः।। १९।।

**एवं सर्वा देवताश्चेज्यानि च।। २०।।**

सर्वा देवताः साधारणनाम्ना यजेत। इज्यानि च यष्टव्यानि यज्ञा इत्यर्थः। सर्वदेवताभ्यः स्वाहा, यज्ञेभ्यः स्वाहेति। इज्यानि हविष्यद्रव्याणि सर्वाणि सर्वदेवतोद्देशेन प्रक्षिपेदित्यपि केचिद्व्याचक्षते।। २०।।

इदानीं यथेष्टप्रयोगानुसारेण याज्यानुवाक्यामन्त्रानुदाहरणार्थं कतिचिद्व्याख्यास्यामः, अशक्या हि आग्नेयादयो मन्त्रा विकल्पयोग्याः सर्वे ग्रन्थैकदेशेऽनुसर्तुमतिवैतत्यप्रसङ्गात् तत्र प्रधानमन्त्रोक्तावाग्नेयोदाहरणभाष्यं तावत्।

**अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वति।।**

आग्नेयी। गायत्री। त्रिलोकगतोऽग्निर्वैश्वानर आदित्यवैद्युतभौमतेजोरूपेण स्थितोऽत्र स्तूयते। अयमग्निर्मूर्धा दिवो मूर्धेव मूर्धा, यथा सर्वत्र गात्रे मूर्धा प्रधानम्, तथैषोऽग्निर्दिवो द्युस्थानदेवतानाम्। अत्राग्निरिति सम्बध्यते, अन्तरिक्षस्य चाध्याह्रियते। अग्निरन्तरिक्षस्य ककुदिव विद्युदादिरूपेण अवस्थितः। दर्पद्योतनत्वेन ककुत्त्वम्। पतिः पृथिव्या अयम्, अयं भौमाग्निः पृथिव्याः पतिः पालयिता पाकाद्युपकारेण। अपां रेतांसि जिन्वति। रेतांसि प्रजननशक्तयः, ता अग्निर्जिन्वति प्रीणात्युपचिनोतीत्यर्थः। स हि यज्ञाद्वृष्टिप्रणालिकयाङ्कुरादिजनिकाः शक्तीरभिव्यनक्ति।

**भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः।**

**दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम्।।**

---

१. चशब्दात् सर्वप्रायश्चित्तानि मनोज्योतिरिति सुप्तप्रायश्चित्तानि प्राक् संस्थितयजुषो दृष्टानि। इत्यादित्यदर्शनम्।

हे अग्ने भुवः पृथिवीलोकात् यज्ञस्य यज्ञजनितस्य अपूर्वस्य त्वं नेता प्रापयिता, रजसश्च रससारस्य। कुत्र नेता। यत्र नियुद्भिर्वायुभिः सचसे 'षच-समवाये' सम्बध्यसेऽन्तरिक्षादावित्यर्थः। वायुसहायो ह्यग्निः सूक्ष्मतेजोरूपेणापूर्व रसादिकं स्वर्गादिके वर्तयतीत्यर्थः। शिवाभिरिति नियुद्विशेषणम्, लोकहितकारिणीभिरित्यर्थः। त्वं हि दिवि स्वर्गे मूर्धानमादित्यरूपं दधिषे धारयसे, तथा स्वर्षां जिह्वां चकृषे हव्यवाहम्, तव हि जिह्वा ज्वालारूपा हव्यं वहति, स्वर्गादिस्थान्देवादीन् प्रापयति। तादर्थ्येन च तां जिह्वां स्वर्षां स्वर्गसम्बन्धयोग्यामतिदीर्घां चकृषे करोषि। स्वर्गं सीदति गच्छति इति स्वर्षा, स्वःशब्दे रेफस्य प्रकृतिभावः, षत्वं च सीदतिसकारस्य, स्वश्च सुपां पत्य इति।

आग्नेयाग्नीषोमयोरन्तरालेऽजामित्वायोपांशुयाज आज्येन क्रियते। तत्र 'विष्णुरुपांशु यष्टव्योऽजामित्वाय' इति वाक्यशेषाद्विष्ण्वाद्या देवता गम्यन्ते। तद्देवतामन्त्रा उदाहरणार्थं व्याख्यायन्ते।

**अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम्।**
**प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः।।**

हे अग्नीषोमौ इमं मम सम्बन्धिनं हवमाह्वानं सुशृणुतं सुष्ठु आकर्णयतम्। हे वृषणौ काम्यमानार्थप्राप्त्या सेक्तारौ वृष्टिदायिनौ वा, 'तावेव वर्षतः' इति श्रुतिः। 'अग्नीषोमाविदं सर्वं (स्वर्ग) यदन्नं चान्नादश्च सोमोऽन्नमग्निरन्नादः' इति, अग्नेरन्नकृता वृष्टिर्यज्ञद्वारेण। वृषणेति 'सुपां सुलुक्' इति द्विवचनस्याकारादेशः। तथा सूक्तानि प्रतिहर्यतमभिनन्दतम्। किञ्च दाशुषे दानशीलाय यजमानाय मयः सुखं भवतं सुखकरौ यजमानाय भवतमित्यर्थः।

**आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः।**
**अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकं स्वाहा।।**

अग्नीषोमयोरेकमन्यं मातरिश्वा वायुर्दिवः स्वर्गादादित्यादाजभार आहृतवान्। 'हृग्रहोर्भश्छन्दसि' (पा.वा.) इति हस्य भत्वम्। तथा च लिङ्गदर्शनम् 'आ दूतो अग्निमभवद्विवस्वतो वैश्वानरं मातरिश्वा परावतः' इति। अन्यं सोमम् अद्रेर्मेघात् मन्दरगिरेर्वा श्येन इन्द्रः परि समन्तादामथ्नात् मथित्वोत्पादितवान्। अम्मयत्वाद्धि

सोमो मेघाज्ज्ञातः, अम्मयत्वं च सोमस्य भारते ख्यातम्। अथवा 'अमृतादुत्थितः सोमः' इति लिङ्गात्समुद्रनिर्मथनादुत्पन्नः सोमः। हे अग्नीषोमौ युवां ब्रह्मणा वेदेनाऽन्नेन च वावृधानौ वृद्धिं गतौ तेनोरुं महान्तं फलविशेषं यज्ञाय यजमानाय चक्रथुः कृतवन्तौ, उ लोकं च स्वर्गादिकं फलविशेषोपभोगाय चक्रथुः।

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे।।**

इदं त्रिलोकीरूपं विष्णुर्व्यापकत्वाद्विचक्रमे विशेषेणाक्रान्तवान् विजिग्ये, त्रेधा त्रिषु स्थानेषु दिवि अन्तरिक्षे क्षितौ पदं निहितवान्, चतुर्थं पदं पांसवो विद्यन्ते यत्र तत् पांसुरं तत्र समूढमज्ञानयोग्यं सञ्जातम्, अविद्यारजसि निमग्नमित्यर्थः। वैखरी, मध्यमा, पश्यन्ती, सूक्ष्मा चेति चत्वारश्चरणाः शब्दब्रह्मात्मनो विष्णोः। तत्राविद्याकल्पितविभागरूपेण वैखर्यादयः प्रतिभान्ति अविदुषां, न सूक्ष्मात्मकश्चतुर्थः।

**प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः।**
**यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा।।**

विष्णुः प्रजापतिस्तत्सर्वं कर्म जगद्वा प्रस्तवते प्रस्तौति, विकरणस्यात्रालुक् 'बहुलं छन्दसि' इति बाहुलकत्वात्, आरभते इत्यर्थः। वीर्येण सामर्थ्येन। न शब्द इवार्थे, मृग इव भीमः प्रसह्य करोति सिंहादिवदित्यर्थः। कौ चरति, क्व वा न चरतीति कुचरः। गिरिषु तिष्ठतीति गिरिष्ठा व्यापकत्वादेव। यस्योरुषु महत्सु विक्रमणेषु विश्वानि सर्वाणि भुवनान्यधिक्षियन्ति उपरि निवसन्ति, तं यजामहे इति शेषः। विश्वेति 'शेश्छन्दसि बहुलम्' इति शेर्लुक्।

**अग्नीषोमा सवेदसा सहूती वनतं गिरः। सं देवत्रा बभूवथुः।।**

हे अग्नीषोमौ सवेदसौ समानधनौ तुल्यहविष्कौ, सहूती समानाह्वानौ च सन्तौ वनतं भजतं गिरः स्तुतिरूपा वाचः। सं देवत्रा बभूवथुः। देवत्रा सम्भवतं सम्भावयतम्। देव एव देवत्रा 'पुरुदेवमनुष्येभ्यस्त्रा' यथा यजमानो देवो भवति, तथा कुरुतमित्यर्थः।

**युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम्।**
**युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतं स्वाहा।।**

हे सोम त्वमग्निश्च द्वौ युवां दिवि स्वर्गे रोचनानि ज्योतींषि व्यधत्तमाहितवन्तौ

युष्मत्साधनकर्मणः स्वर्गसम्पत्तेः। कीदृशौ युवाम्। सक्रतू अनुभूयमानकर्माणौ समानयज्ञौ वा। किञ्च हे अग्नीषोमौ युवामेव सिन्धून् स्यन्दनानि अमुञ्चतं वृष्टिं सम्पादयतम्। कुतः। अभिशस्तेरवद्यात्। अभिशासोऽभिशस्तिः अवद्यं चोद्यं, तदाश्रयत्वान्मेघाभिशस्तिरवद्यं मेघस्थितानामपामनुजीवित्वादेवमुक्तम्। अथवा अवदानीयः खण्डनीयो वायुर्मेघोऽवद्यः स चाभिशस्त इत्युक्तम्। अतो हविर्गृहीतं, तच्च सुहुतमस्तु।

**इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः। तद्वां चेति प्र वीर्यम्॥**

हे इन्द्राग्नी दिवः स्वर्गस्य प्ररोचनौ दीपनौ येन वीर्येण वाजेषु सङ्ग्रामेषु परिभूषथः परिभवितुमिच्छथः शत्रून्। तद्वीर्यं वां युवयोः सम्बन्धि प्रचेति, लोडर्थे लेट्, प्रकर्षेण नो यज्ञं चिनोतु वर्धयतु रक्षत्वित्यर्थः।

**उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै।**
**उभा दातारविषां रयीणामुभा वाजस्य सातये हुवे वाम्॥**

त्रिष्टुप्। हे इन्द्राग्नी वां युवामुभौ द्वावाह्वयामीति शेषः। किमर्थम्। आहुवध्यै आह्वातुम्, युवाभ्यामाहूताभ्यां होमं सम्पादयिष्यामीति बुद्ध्या। किञ्च उभावपि सहभूतौ राधसो मादयध्यै आह्वयामि हविर्लक्षणस्य मादयितुम्। उभावपि दातारौ इषामन्नानां रयीणां च धनानाम्, उभावपि वाजस्य सातये दानाय हुवे आह्वयामि। 'षणु-दाने' इत्यस्य क्तिनि 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (३.३.९७) इत्यन्तोदात्तो निपातितः।

'ऋतुतिथिनक्षत्रदेवताश्च, यजेत' (१३ सू.) इति व्याख्यातम्। ऋत्वादिदेवतानां ज्योतिःशास्त्रादिकान्निश्चयः कार्यः। अत्र स्थाने ऋतूनामित्यादिको ग्रन्थोऽमा वस्याश्राद्धभाष्यात्परमस्ति, ऋतुतिथिनक्षत्रदेवताश्च ऋत्वादीनामेव सान्निध्यात्। सापेक्षत्वे वाऽपि दोषः प्रधानस्य। तथाच मैत्रायणीयानामाम्नायः - ऋतुमिष्ट्वा ऋतुदेवतां यजेत, तिथिमिष्ट्वा तिथिदेवतां यजेत, नक्षत्रमिष्ट्वा नक्षत्रदेवतां यजेत। इह च सूत्रे जुहोत्यर्थो यजतिशब्दो यागस्य होमार्थत्वात्।

**इह गावः प्रजायध्वमिहाऽश्वा इह पूरुषाः।**
**इहो सहस्रदक्षिणो रायस्पोषः प्रजायताम्॥**

इहोत्तरस्यां च शिशुशैशवयोरार्षम्। हे गाव इह यजमाने प्रजायध्वम्। एवं

हे अश्वाः हे पुरुषा इति समानम्। इह उ इति निपातस्तथाशब्दस्यार्थे। तथा इह यजमाने रायस्पोषो धनपुष्टिः प्रजायताम्। कीदृशः। सहस्रदक्षिणः सहस्रयज्ञसम्पत्तियोग्यः, यावता सहस्रदक्षिणाः क्रतवः सम्पद्यन्ते, तत्प्रमाणः।

**अयं यज्ञो वर्धतां गोभिरश्वैरियं वेदिः स्वपत्या सुवीरा।**
**इदं बर्हिरति बर्हींष्यन्येमं यज्ञं विश्वे अवन्तु देवाः।।**

अयं प्रस्तुतो यज्ञो गोभिरश्वैश्च वर्धतां यजमानद्वारेण, तथा इयं वेदिः स्वपत्या शोभनपुत्रा यजमानद्वारेण, तथा सुवीरा विक्रमयुक्तपुत्रयुतेत्यर्थः। विस्तीर्णं बर्हिस्तदन्यानि बर्हींष्यतिक्रम्य वर्तताम्। इमं यज्ञं विश्वे सर्वे देवा अवन्तु रक्षन्तु आगच्छन्तु प्रीणयन्तु वा।

**आ नः प्रजां जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः।**
**संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु।।**

ऋषिपुत्राणामार्षम्। 'आ' इत्युपसर्गस्य दधात्वित्यनेन सम्बन्धः। धाता प्रजामस्माकमादधातु, गर्भाधानं धाता करोतु। प्रजापतिश्च प्रजां पुत्रादिकं जनयतु। सुमनस्यमान इत्युभयत्रापि सम्बध्यते प्रसन्नमनाः सन्। संवत्सरश्च मयि अस्मासु पुष्टिं पोषं वृद्धिं दधातु करोतु वा। किं कुर्वाणः। ऋतुभिर्वसन्तादिभिश्चाक्लृपानः क्रतुरूपेण विवर्तमानः परिणतो वा। चाक्लृपान इति लिटः कानजादेशो द्विर्वचनं च। यस्मादसौ पुष्टिपतिस्तदधीना स्थावरजङ्गमानां पुष्टिः, स ह्यार्तवैः स्वभावैः पुष्णाति जगत्।

धूर्भिरूपधूर्भिश्चोक्तम्। तत्र धुर इति अग्निर्मूर्धेति चतसृणामेव ब्राह्मणविदिता सङ्ख्या, तथाच ब्राह्मणं 'यासौ धुरं गायति' इति। उपधुर इत्युपशब्दयोगात् उपप्रयन्त इत्याद्याश्चतस्रो याज्ञिक्याः ख्याताः। उभा वामिति त्रिष्टुबपि कृतभाष्या।

**अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः।**
**यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विशे।।**

आग्नेयी, जगती। अयमग्निरस्मिन् लोके धातृभिः प्रजापतिभिर्धायि आहितः प्रतिष्ठापितः, प्रथमः सर्गादिसमये। धायीति 'बहलं छन्दसि' इत्यमाङ्योगेऽप्यडागमाभावः। अग्न्युपस्थाने चास्यार्थवादोऽस्ति 'अयमिह प्रथमो धायीति गर्भमेवैतं

दधाति' इति। कीदृशोऽग्निः। होता 'अग्निर्वै देवानाम्' इति श्रुतेः, होता ऋत्विग्विशेषः आह्वाता वा, अतिशयेन यष्टा यजिष्ठः। 'तुरिष्ठेमेयःसु' (६.४.१५४) इति तृचो लोपः। अध्वरेषु यागेष्वीड्यः स्तुत्यः। यमग्निमप्रवानप्रभृतय ऋषयो भृगुगोत्रसम्भूता विरुरुचुर्विशेषेण रोचितवन्तः प्रदीपितवन्तः। कुत्र विरुरुचुः। वनेषु पानीयेषु समुद्र-मध्य इत्यर्थः। चित्रं चायनीयं दर्शनीयं वाऽऽश्चर्यभूतं, विभ्वं व्यापकम्। यतो विशे विशे पुरुषे पुरुषे स्थितोऽसौ जाठरवह्निरूपेण। अत्रोत्तरार्धचर्चार्थोपपादनार्थः इतिहास उपावर्ण्यते - हे हया नाम क्षत्रिया बभूवुः, भृगुगोत्रजाश्चाप्नवानप्रभृतयो ब्राह्मणाः। ते चोभयेऽपि कृतान्योन्यापराधाः प्रवृद्धवैराः। तत्र भृगवो यमनियमप्रधानाः कृश-शरीरा अतिप्रवृद्धैर्निस्त्रिंशैर्हेहयैरस्त्रशस्त्रैर्निपातिताः, गर्भिणीनां च गर्भा व्यापादिताः, तत्र कयापि भार्गवपत्न्या योगव्याप्त्या गर्भो गोपनाय निजजठरादूरुमवदार्य रक्षितः। गते च भूयसि काले विस्मृतवैरेषु हेहयेषु ऊरुं विदार्य प्रकटितोऽतिप्रवृद्धतेजा औौर्वभृगुसंज्ञको भानुसमानतेजाः, तेन च निजगोत्रक्षयकारिणो वैरिणो हेहयान्वि-नाशयितुं महान्कोपाग्निरुत्थापितः, ततः स्वर्गतैरप्रवानप्रभृतिभिः प्रत्यक्षीभूय, निवारितोऽ-सावौर्वः 'भगवन्मा तपःक्षतिं कृथा हेहयवधेन, न चैतैर्वराकैः किञ्चिदस्माकं कृतं, निमित्तमात्रमेते यतः स्वकर्मफलेनैव वयं जीर्णशरीराणि वासांसीव विहाय, स्वर्गं भोक्तुं परित्यक्तमानुषशरीराः सञ्जाताः।' ततो हेहयेभ्यो निवारितोऽसौ वह्निः प्रलयाग्नि-निर्विशेषस्त्रिलोकीं दग्धुं प्रवृत्तः, अनन्तरं भृगुभिः सागरे प्रक्षिप्तो वडवाग्निमुखोऽ-सावद्ययावज्जलधिजलं प्रलयीकुर्वन्नास्ते इति। स एव च दधिक्रावा प्रसिद्ध ऋगन्तरेषु। अन्यापि च ऋगस्ति - 'और्वभृगुवच्छुचिमप्रवानवदाहुवे। अग्निं समुद्रवाससम्' इति।

**अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः।**
**तं जानन्नग्न आरोह ततो नो वर्धया रयिम्।।**

हे अग्ने तवायं योनिः पृथिवीलक्षणोऽरणिरूपो वा अस्मत्प्रत्यक्षगम्यो योनिः कारणम्। अयमिति लिङ्गव्यत्ययः, यद्वा पुंस्यपि योनिशब्दः क्वचिद्दृश्यते। ऋतुः प्राप्तोऽस्य ऋत्वियः, योनिर्हि ऋतौ गर्भं गृह्णाति स्त्र्याद्युदरे। यतो योनेर्जातः सन् अरोचथा विशेषेण रोचसे दीप्यसे प्रीयसे हविषा सन्तर्प्यमाणः, अतो हे अग्ने त्वं योनिं जानन् बुद्ध्यमान आरौह, आरुह्य, चारणिं पृथिवीं वा ततोऽनन्तरं नोऽस्माकं रयिं धनं वर्धय।

**उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये। आरे अस्मे च शृण्वते।।**

चतसृणामप्युपधुरां देवानामार्षम्। वयमग्नये मन्त्रं वोचेम वदामः। किं कुर्वन्तः। अध्वरं यज्ञमुपप्रयन्त उपगच्छन्तोऽग्निद्वारेण। कीदृशायाग्नये। अस्माकं सम्बन्धिनं मन्त्रमारे निकटे वर्तमानानां शृण्वते।

**अस्य प्रत्नामनुद्युतं शुक्रं दुदुह्रे अह्रयः। पयः सहस्रसामृषिम्।।**

होमधेनुदोहेऽपीयं विनियुक्तेति गम्यते 'ऊध एवैतया करोति' इत्यर्थवादात्। अस्याग्नेरुपयोगार्थे शुक्रं शुक्लं पयः क्षीरं दुदुह्रे दुहन्ति। प्रत्नां पुराणमनुद्युतं द्योतमानं 'तेजो वै घृतम्' इत्यर्थवादात्। के दुहन्ति। अह्रयः न विद्यते ह्रीर्लज्जा येषां तेऽह्रयः, नित्यसत्कर्मप्रवृत्त्या येषां न कदाचिदपि लोके कुकर्मकृतिनिबन्धना लज्जा भवति, ते वेदार्थावगमानुष्ठानयुक्ता इत्यर्थः। कीदृशं पयः। सहस्रसां 'वन-षण-सम्भक्तौ' सहस्रशो विभज्यमानम्। 'ऋ गतौ' इयर्तीति ऋषिः, गन्तारं लिङ्गव्यत्ययेन।

**कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे।**
**उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते।।**

ऐन्द्री। बृहती। द्वितीया तु गायत्री वक्ष्यमाणा। अग्नेरार्षम्। हे इन्द्र त्वं कदाचिदपि स्तरीः हिंसकः सन् न दाशुषे दानशीलाय यजमानाय सश्चसि गच्छसि। उपोपेति समीपार्थो निपातसमुदायः। समीपं हिंस्रः सन् न गच्छसि यजमानस्य। शिष्टा निपाताः पादपूरणार्थाः। इत् नु इति अभ्यस्तौ। यतश्च हिंस्रः सन् न यजमानमुपसर्पसि, ततस्तव देवस्यान्यविलक्षणस्य भूयो बहु दानं यजमानेन दीयमानं पृच्यते, 'पृची-सम्पर्के', सम्पृच्यते युज्यते त्वया सङ्गच्छते, भूयो भूयः पुनः पुनरिति वीप्सार्थो वा द्रष्टव्यः।

**परि ते दूडभो रथोऽस्माँ अश्नोतु विश्वतः। येन रक्षसि दाशुषः।।**

हे इन्द्र ते तव यो दूडभो रथो, रंहणाद्रथः, दुष्टान् दभ्नाति हिनस्ति, दुःखेन वा दभ्यते परैरिति दूडभः। डश्च ऋतदामेषु इत्युपसंख्यानाद्दस्य डत्वं पूर्वस्य च दीर्घः। सोऽस्मान् पर्यश्नोतु सर्वतो व्याप्नोतु रक्षार्थम्। विश्वतः सर्वतो येन रथेन दाशुषो यजमानान् रक्षसि।

इडामग्न इति स्विष्टकृतं जुहोति।

**इडामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध।**
**स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूदस्मे।।**

हे अग्ने इडामन्नं साध साधय। कस्मै। हवमानाय होममाह्वानं च कुर्वाणाय जयमानाय। कीदृशीमिडाम्। पुरुदंसम्। पुरुशब्दो बहुपर्यायः, दंसस्शब्दः कर्मनाय, बहुकर्माणं बहुसिद्धियोग्यामित्यर्थः। सनिं गोः 'वन-षण-सम्भक्तौ' गवां सम्विभागस्य कर्त्रीम्। शश्वदतिशयेन भवतीति शश्वत्तममविच्छिन्नाम्। किञ्च स्यान्नः सूनुस्तनयो विजावा, अस्माकं सूनुः पुत्रो भवतु। विजाययते इति विजावा क्वनिप्। पुनस्तनयग्रहणं बहुपुत्रार्थम्, विजावेत्यविच्छिन्नसन्तानार्थम्। हे अग्ने सा ते तव शोभना मतिः भूत् भवत्वस्मेऽस्मासु, ययाऽन्नादिकं साधयसि। पुरुदंसमिति छान्दसो वर्णलोपः। गोरिति व्यत्ययेनैकवचनम्। भूदिति तिङ्व्यत्ययः। 'बहुलं छन्दस्यमाङ्योगेऽपी'त्यडागमाभावः। अस्मे इति सुपां सुलुगिति शे आदेशः।

[१]**त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेलोऽवयासिसीष्ठाः।**
**यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मे।।**

द्वे अप्याग्निवारुण्यौ त्रिष्टुभौ। हे अग्ने नोऽस्माकं कर्मवैगुण्यात् यो वरुणस्य हेलोऽनादरः कोपः सम्भाव्यते, तं त्वमवयासिसीष्ठा अपसारय। देवस्य द्योतनादि-गुणकस्य। त्वं हि विद्वानभिज्ञस्तथा यजिष्ठो यष्टृतमो वह्नितमो वोढृतमो हविषाम्। शोशुचानो देदीप्यमानोऽतो विश्वा विश्वानि द्वेषांसि पापानि प्रमुमुग्धि मोचयाऽ-पसारयाऽस्मे अस्मत्।

**स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ।**
**अवयक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न एधि।।**

छन्दोदेवते पूर्ववत्। हे अग्ने स त्वं नोऽस्माकम् अवमो निकटवर्ती रक्षिता वा भव। ऊती ऊत्यै रक्षार्थम्। अवतेः क्तिनि वकारस्योठि निपातित ऊतिशब्दः, अवनमूतिः 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (३.३.९७) इति सूत्रेण। नेदिष्ठोऽति-शयेन निकटः। अस्या उषसो रात्रेर्व्युष्टौ विनाशसमये[२] प्रभाते रक्षार्थम् अवयक्ष्व

१. त्वं नो अग्ने इति द्वाभ्यां जुहुयादया भूरिति च।
२. ये अयोनामाग्नेस्तनुः तस्य होमः प्रभाते।

अपसारय चास्माकं वरुणं पापं यदस्मानावृणोति आच्छादयति, रराणो ददत् गवादिकं, रममाणो वा। वीहि पिब आज्यं मृडीकं 'मृड-सुखने'। सुहवो न एधि, अस्माकं सुखाह्वानः सुखहोमश्च भव। अस्तेर्लोटि हौ 'घ्वसोरेद्धावभ्यासलोपश्च' (६.४.११९) इत्येकारादेशे 'हुझल्भ्यो हेर्धिः' (६.४.१०१) इति धित्वे एधीति रूपम्।

**अयाश्चाग्नेऽस्यनभिशस्तिश्च सत्यमित्त्वमया असि।**

**अयासा मनसा कृतोऽयाः सन् हव्यमूहिषेऽया नो धेहि भेषजम्।।**

आग्नेयी। विष्टारत्रिष्टुप्। हे (अयतीत्यायः, हे) अग्ने अयोनामाऽसि अनभिशस्तिः अभिशासोऽभिशस्तिः पापं, तत्प्रतिषेधोऽनभिशस्तिः अपापस्त्वमया असि भवसि इत्येतत्सत्यं, यतस्त्वमयासा गत्यतिशययुक्तेन मनसा प्रजापतिना कृतो जनितः। किञ्च त्वमयाः सन् हव्यमूहिषे हविर्वहसि देवानां प्रापयसि हविः। नह्यगतियुक्तस्य हविःप्रापणमुपपद्यते। तस्मादया भवसीत्यर्थः। अतोऽयाः सन् अस्मभ्यं धेहि भेषजं, कर्मवैगुण्यापसारेण यदौषधं तद्देहीत्यर्थः।

**ओं भूः स्वाहा, ओं भुवः स्वाहा, ओं स्वः स्वाहा, ओं भूर्भुवःस्वः स्वाहा।।**

प्रजापतेरार्षम्। भूरित्यनेन भूस्तदधिष्ठानाः सर्वा देवताः कथ्यन्ते। एवं भुव इत्यनेनान्तरिक्षाश्रया वाय्वाद्याः, स्वरित्यनेन स्वर्गाधारा आदित्याद्याः। भूर्भुवःस्व-रित्यनेन समुदिताः। 'अया भूरिति च' इत्यत्र भूरादीनामितिशब्देन प्रतीकः। तत्रेयमपि सम्भवति - त्वं नो अग्ने वरुणस्य विद्वान्। व्याख्यातेयम्।

**न्यूनमतिरिक्ते जुहोमि स्वाहा। अतिरिक्तं न्यूने जुहोमि स्वाहा। समं समे जुहोमि स्वाहा।।**

यन्न्यूनं मया कृतं कर्म, तस्यातिरिक्तेऽतिरिक्तत्वनिमित्तं पूर्णत्वनिमित्तं जुहोमि। यत्त्वतिरिक्तं कृतं, तस्य न्यूने न्यूनत्वनिमित्तं साम्यनिमित्तं जुहोमि। यत्समं कृतं, तस्यापि साम्यस्थितये विप्लवनिवारणाय जुहोमि।

**अनाज्ञातं यदाज्ञातं यद्यज्ञे क्रियते मिथः।**

**सर्वं तदग्ने कल्पय त्वं हि वेत्थ यथायथम्।।**

आ समन्तात् ज्ञातमाज्ञातं, तत्प्रतिषेधेनानाज्ञातं सर्वथा न बुद्धमित्यर्थः। आज्ञातं त्वीषज्ज्ञातं यन्मया क्रियते मिथः एकान्ततः, हे अग्ने तत्सर्वं त्वं कल्पय

पूरय, यस्मात् त्वमेव वेत्थ जानासि यथायथं यथास्वम्। यथास्वे यथायथम्। त्वमेव हि प्रधानं कारकमतस्त्वदीयेनैव कृतेन कृतकृत्यत्वात् क्वास्मदादिगतं ज्ञातमुपयुज्यते इत्यर्थः। अथवा आज्ञातमनाज्ञातं वा गुरुणेति योज्यम्। अधीतवेदेन गुर्वनुज्ञातेनैव क्रियाः कर्तव्याः यतः, तत्र चानाज्ञातमित्यनवक्लृप्त्योक्तं तव दोषाभावेन समाधानाय न्याय्यत्वात्।

**स्विष्टिश्च दुरिष्टिश्च ये यज्ञमभिरक्षतः।**
**प्रयाजानन्याः नः पातु यज्ञमन्याभिरक्षतु।।**

शोभना इष्टिः स्विष्टिः। दुष्टा इष्टिर्दुरिष्टिः। अस्यां यज्ञादिरक्षायाम् असामर्थ्यात्समाधानार्था प्रायश्चित्तेष्टिः दुरिष्टिरिष्टा। स्विष्टिर्यज्ञमभिरक्षतु दुरिष्टिश्च। अपरथा व्याख्या शोभना - इष्टिर्यस्याः सा स्विष्टिः देवता, एवं दुरिष्टिः, सा यज्ञं रक्षतु सर्वथा यज्ञरक्षां करोतु, अपराधं मा ग्रहीदित्यर्थः। एवं स्वरान्यत्वं प्रसज्यते, तस्मात् स्विष्टिदुरिष्टियोगाद्देवताप्रतिपत्तिः समर्थनीया। पूर्वव्याख्याने हीष्टिरिष्टिं रक्षत्वित्यर्थः स्यात्, नैतत् युज्यते। अथवा सोऽप्युपपादनीयः यज्ञो वै प्रजापतिः इति प्रजापतिरेव ज्ञेयः। आत्मनैवात्मानं रक्षति प्रजापतिरविद्यायाः सकाशाद्विद्यारूपत्वात्। प्रयाजानन्या पातु, तयोर्मध्यादेका प्रयाजान् रक्षतु। अन्या यज्ञमवतु।

अत्रावसरेऽनाम्नाताः प्रायश्चित्तमन्त्राः सप्त साधु प्रसिद्धाः सन्ति, 'मनो ज्योतिः' इत्यादयः।

**मनो ज्योतिर्जुषतामाज्यस्यारिष्टं यज्ञं समिमं तनोतु।**
**इमं यज्ञं सप्ततन्तुं ततं न आ देवा यन्तु सुमनस्यमानाः।। स्वाहा।**

मनः प्रजापतिर्ज्योतिः स्वप्रकाशरूपम् आज्यं जुषताम्। आज्यस्येति व्यत्ययेन षष्ठी, आज्यस्यांशमिति वाऽवयवावयविसम्बन्धे। इमं यज्ञं सन्तनोतु। कीदृशं यज्ञं सन्तनोतु। अरिष्टं रिशतिर्हिंसार्थोऽहिंसितम्। किञ्च इमं यज्ञं देवा आयान्तु ततं विस्तारितं, सप्ततन्तुं सप्त छन्दांसि तन्तव इव होत्रा वा। सुमनस्यमानाः प्रसन्नमनसः।

**त्रयस्त्रिंशत्तन्तवो यान्वितन्वत इमं यज्ञं स्वधया ये ददन्ते।**
**तेषां च्छिद्रं प्रति दध्मो यदत्र स्वाहाऽयं यज्ञो अप्येतु देवान्।। स्वाहा।**

स्वाहाकारः सर्वहोमेषु स्थितः स्वाहाकारप्रधानत्वाज्जुहोत्यर्थस्येति स्वाहा-

कारमध्यप्रवेशेन गम्यते। त्रयस्त्रिंशत्तन्तवो देवाः, ते हि देवा यज्ञं तन्वन्ति। अत एवाऽऽह - इमं यज्ञं स्वधयाऽन्नेन ये ददन्ते वितन्वते, तेषां देवानां यदत्र यज्ञे छिद्रं यज्ञविध्वंसकारिणां प्रवेशस्थानं सम्यग्विधानवैगुण्यात् तत्प्रतिविदध्महे निवारयामो वयम्। केन। स्वाहा स्वाहाकारेण। अनया निर्दिष्टविशिष्टप्रायश्चित्तेष्ट्याऽतो निवारित-विघ्नोऽयं यज्ञो देवानप्येतु आगच्छतु, अपिशब्दान्मां शुभफलं प्रापयतु पूर्वः सन्।

**यन्मे मनसश्छिद्रं यद्वाचो यच्च मे हृदः।**
**अयं देवो बृहस्पतिः सं तत्सिञ्चतु राधसा।। स्वाहा।**

यन्मे मम मनसश्च छिद्रं वैगुण्यं, यच्च वाचो मन्त्ररूपायाः, यच्च हृदो जीवा-त्मनः, तत्सर्वमयं बृहस्पतिर्देवो राधसा अन्नेनाऽऽज्यलक्षणेन संसिञ्चतु निवारयतु प्रक्षालयतु।

**विश्वकर्मा हविरिदं जुषाणः सन्तानैर्यज्ञं समिमं तनोतु।**
**या व्युष्टा उषसो याश्च निम्रुचस्ताः संदधातु हविषा घृतेन।।**

विश्वकर्मा प्रजापतिरिमं यज्ञं संतनोतु विस्तारयतु सम्यक्, इदं हविराज्य-लक्षणं सन्तानैः प्रवाहैर्जुषाणः सेवमानः पिबन् वा। या उषसो रात्रि पश्चिमभागा व्युष्टाः, 'उष-दाहे' अतीताः, याश्च निम्रुचो 'म्रुच म्लुच गतौ' आगन्त्र्यः, ता घृतेन हविषा संदधातु, तत्स्थानि कर्माणि विगुणान्यपि पूर्णानि करोत्वित्यर्थः। कः। प्रकृतो बृहस्पतिरेव।

अयाश्चाग्न इति व्याख्याता। 'त्वं नो अग्ने' इतीयमपि कृतभाष्या, 'स त्वं नो अग्ने' इत्यपि विवृता।

**आश्रावितमत्याश्रावितं वषट्कृतमवषट्कृतमननूक्तमत्यननूक्तं च यज्ञेऽतिरिक्तं कर्मणो यच्च हीनमग्निष्टानि प्रविदन्नेतु कल्पयन्।।**

इमामष्टमीं सर्वान्ते जुह्वति प्रायः, केचित्तु सप्तभ्यः प्राक्। आश्रावितमीषत्स्रावितं न्यूनं हुतमित्यर्थः। यच्चात्याश्रावितमतिरिक्तं स्रावितं पात्रातिरेकात्। वषट्कृतमित्यत्रा-पीषदर्थ आकारोऽपेक्षणीयः। यदीषत् वषट्कृतम्। अतिशब्दश्चापेक्षणीयः, यच्चाति-वषट्कृतं, तथा यन्न वषट्कृतम्। अननूक्तमनुवाक्याविहीनम्, यच्चातिरिक्तं कर्मणो

यच्च हीनम्, तानि सर्वाणि वैगुण्यान्यग्निः प्रकल्पयन् समादधत् एतु, आगच्छतु। प्रविदन् जानन्।।

।। इति पाकयज्ञवृत्तिः।।

धनं घनं देहि पुनीहि मह्यं लुनीहि पापेन्धनसञ्चयं च।
अकारणं वैरपराननार्याञ् शत्रून्समस्ताञ्जहि जातवेदः।।

**।। इति सप्तचत्वारिंशी काण्डिका।।४७।।**



## ।। अथ अष्टचत्वारिंशी काण्डिका।।

अथ पुत्रेष्टिः -

**षडाहुतं प्रतिपदि पुत्रकामो ब्रह्मणाग्निः संविदान इति षड्भिराज्यस्य जुहोति उत्तराभिः षड्भिः स्थालीपाकस्य सौविष्टकृते त्रयोदशीम्।। १।।**

'तस्मिन्पाकयज्ञाः' (४७.२) इत्युक्तम्, द्विविधाश्च नित्यकाम्यभेदेन पाकयज्ञाः। तत्र नित्याः पूर्वमुक्ता नियतकरणीयत्वात्, काम्यास्त्वधुनोच्यन्ते नियमकार्यत्वाभावात्। कामनानिमित्ता हि काम्याः। न च कामना नियमेन भवति सर्वस्य सर्वदा। षडाहुतयः आज्येन आदौ, षट् स्थालीपाकेनास्मिन्नित्यन्वर्थसंज्ञा षडाहुतमिति। तच्च प्रतिपद्येव कुर्यात् न जातुचित्पञ्चदश्याम्। पुत्रकाम इत्यधिकारिनिर्देशः। ब्रह्मणाग्निः संविदान इति षड्भिर्ऋग्भिः। ये ते घ्नन्त्यप्सरस इत्यादिभिः स्थालीपाकेन जुहुयात्। सौविष्टकृते कर्मणि पुनस्त्रयोदशीमाहुतिं जुहुयात्। विशेषस्त्वत्र सौविष्टकृतमन्त्रस्य 'नेजमेष परापत' इति मन्त्रो न तु 'इडामग्ने' इति।

**ब्रह्मणाग्निः संविदानो रक्षोहा बाधतामितः।**
**अमीवा यस्ते गर्भं दुर्णामा योनिमाशये।। १।।**

अनुष्टुप्। ब्रह्मण आर्षम्। रक्षोहा अग्निर्देवता। पुत्रकामनार्थे विनियोगः। स्त्री भण्यते - यस्ते तवाऽमीवा व्याधिः रोगो दुर्नामा दुष्टसंज्ञः कीटादिविशेषात्मको योनिं ग्रहणीम् आशये आगत्य शेते तिष्ठति गर्भविनाशाय, तमग्निर्बाध्यतामितो गर्भग्रहणस्थानादाकृष्य। कीदृशः। रक्षोहा रक्षसां हन्ता, संविदानो जानन् ब्रह्मणा सह वर्तमानः, हविर्वा ब्रह्मा।

**यस्ते गर्भममीवा दुर्णामा योनिमाशये।**
**अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत्।। २।।**

अग्निस्तं निरनीनशत् निःशेषेण नाशयतु। क्रव्यमाममांसमत्ति इति क्रव्यात्।

**यस्त ऊरू विहरत्यन्तरा दम्पती शये।**
**योनिं योऽन्तरा रेढि तमितो नाशयामसि।। ३।।**

हे पुत्रकामे यस्तवोरू अन्तरा ऊर्वोर्मध्ये विहरति स्वप्रादौ रक्त कामादिसंज्ञको ग्रहविशेषस्तथा दम्पती अन्तरा शये जायायाः पत्युश्च मध्ये शेते, यश्चान्तरा मध्ये योनिं रेढि गर्भबीजं पिबति, तमितः पुत्रकामायाः सकाशादपकृष्य नाशयामः।

**यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते।**
**आशां यस्ते जिघांसति तमितो नाशयामसि।। ४।।**

स्वप्नरूपेण तमसाऽज्ञानेन वा यस्त्वां मोहयित्वा, तन्निराकृतौ निरुत्साहां सम्पाद्य, नितान्तं पतति उपभुङ्क्ते, यश्च तव पुत्राशां जिघांसति, तमस्मात् स्थानादपकृष्य दूरं नीत्वा, नाशयामो होमैः।

**यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते।**
**प्रजां यस्ते जिघांसति तमितो नाशयामसि।। ५।।**

पतिरूपतां भ्रातृरूपतां जाररूपतामपरो मायया कृत्वा यो निपद्यते, तमितो नाशयामः।

**यस्ते हन्ति पतयन्तं निषत्स्नुं यः सरीसृपम्।**
**जातं यस्ते जिघांसति तमितो नाशयामसि।। ६।।**

पतयन्तं पतन्तं गर्भग्रहण्यभिमुखमागच्छन्तं गर्भं यो हन्ति, यश्च निषण्णं तत्र हन्ति, तथा सरीसृपं सर्पन्तं हन्ति, तं नाशयामः।

एवमाद्येन षट्केन गर्भग्रहान् नानारूपान्विनाश्य, उत्तरेण सुतलाभमभ्यर्थयन्ते -

**ये ते घ्नत्यप्सरसो गन्धर्वा गोष्ठ्या गेह्याश्च ये।**
**क्रव्यादमुत देविनं तमितो नाशयामसि।। १।।**

अप्सु सरन्तीत्यप्सरसो जलचारिणः, गां धारयन्ते ये ते गन्धर्वाः, गोष्ठे भवा गोष्ठ्याः, गेहे भवा गेह्याः गर्भघ्नास्तान् सर्वान्नाशयामि। अन्यमपि कञ्चन क्रव्यादं, देविनं विजिगीषणशीलं नाशयामि। उतेति अप्यर्थे।।

**अभिन्नाण्डा वृद्धगर्भा अरिष्टजीवसूवरी।**
**विजायतां प्रजायतामियं भवतु तोकिनी।। २।।**

अभिन्नाण्डा अविनाशिततोका सती प्रवृद्धगर्भा च विजायतामियं विविधान् पुत्रान् च प्रसूताम्। प्रसूता च सती तोकिनी पुत्रिणी भवतु। अरिष्टजीवसूवरी, 'रुष-

रिष-हिंसार्थः रिष्टं हिंसितं, न विद्यते रिष्टं येषां तेऽरिष्टाः जीवन्तीति जीवाः, अरिष्टान् जीवान् च सूते तच्छीला अरिष्टजीवसूवरी। 'अन्येभ्योऽपि दृश्यते' (३.२.७५) इति क्वनिप्।

**विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु।**
**आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते।। ३।।**

विष्णुः प्रजापतिर्यज्ञस्तव योनिं कल्पयतु गर्भग्रहणयोग्यां सम्पादयतु। त्वष्टा आदित्यो रूपाणि लावण्यानि कान्तीः पिंशतु पिनष्टु, सञ्चूर्ण्य लावण्यानि त्वयि प्रयच्छतु, लावण्यरसनिर्भरां त्वां सम्पादयतु। तथा प्रजापतिर्विश्वकर्मा आसिञ्चतु रेतः। धाता च गर्भं दधातु सम्पादयतु ते तव।

**गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके।**
**गर्भं ते अश्विनौ देवा आधत्तां पुष्करस्रजम्।। ४।।**

हे सिनीवालि देवपत्नि गर्भं देहि, पृथ्वी स्तुतिर्यस्या सा पृथुष्टुका सरस्वती, पृथुष्टके सरस्वति गर्भं विधेहि, हे पुत्रकामे तवाश्विनौ देवभिषजौ चन्द्रादित्यौ गर्भं विधत्तम्। कीदृशम्। पुष्करस्रजं पद्ममालिनम्।

**हिरण्ययी अरणी यं निर्मन्थतो अश्विनौ।**
**तं ते गर्भं हवामहे दशमे मासि सूतवे।। ५।।**

वयं तं गर्भं हवामहे आह्वयामः। किमर्थम्। दशमे मासि सूतवे सोतुम्। तुमर्थे तवेङ्। यमश्विनौ चन्द्रादित्यौ त्वरितरथाश्वयोगिनौ हिरण्यमय्याविवारण्यौ द्यावापृथिव्यौ निर्मथ्नीतः निर्मथ्योत्पादयतः, ताभ्यां हि सूर्याचन्द्रमसौ रसं तेजश्चाकृष्य जगज्जनयतः।

**परं मृत्यो अनुपरेहि पन्थां यस्ते स्व इतरो देवयानात्।**
**चक्षुष्मते शृण्वते ते ब्रवीमि माऽस्याः प्रजां रीरिषो मोतवीरान्।। ६।।**

त्रिष्टुप्। हे मृत्यो अस्याः स्त्रियः प्रजां मा रीरिषः, मा च वीरान् हिंसीरिति अहं ब्रवीमि। चक्षुष्मते शृण्वते, यतस्त्वं चक्षुष्मान् कर्णयुक्तश्चाऽतो ब्रवीमि इत्यर्थः। अतश्चाहिंसार्थं परं दूरं पन्थानम् अनुपरेहि परागच्छ। यस्ते स्वः पन्थाः। कश्चासौ।

इतरो देवयानात्, पितृमार्गः। तत्रैव हि मृत्युः प्रभवति, न देवपथे तस्य मोक्षपात्रत्वात्। प्रजा दुहित्रादिकाऽत्र वीराः पुत्राः। उतेति तथार्थे।

सौविष्टकृते त्रयोदशीमाहुतिं जुहोति -

**नेजमेष परापत सपुत्रः पुनरापत।**
**अस्यै मे पुत्रकामायै गर्भमाधेहि यः पुमान्।।**

सावित्रस्यार्षम्। हे नेजमेष अग्रे परापत परागच्छ दूरं व्रज, गत्वा च पुनरापत आयाहि सपुत्रः पुत्रेण सह, दूरमपि गत्वा काम्यमानं पुत्रमादायाऽगच्छेत्यर्थः। ततोऽस्यै पुत्रकामायै गर्भमाधेहि आनीय, गर्भरूपतां पुत्रं ग्राहयेत्यर्थः। यस्तु पुमान् गर्भो भविष्यति, न तु स्त्री।।

**।। इति पुत्रेष्टौ षडाहुतम्।।**

**।। इत्यष्टचत्वारिंशी काण्डिका।। ४८।।**



## ।। अथ एकोनपञ्चाशी काण्डिका।।

अथ नक्षत्रेष्टिः -

**नक्षत्रयज्ञेषु नक्षत्रदेवतानामृचस्ताभिर्यजेताग्निर्मूर्धा हिरण्यगर्भो मरुतो यन्मृडानो रुद्र सुत्रामाणं तव श्रिये नमोस्तु सर्पेभ्य आहं पितॄन्सदा सुगो ये तेऽर्यमंस्तत्सवितुर्य इमे द्यावापृथिवी वायुरग्रेगा इन्द्राग्नी रोचना मित्रो जनानिन्द्रः सुत्रामा यं ते देवी शं नो देवीर्विश्वे देवा ब्रह्म जज्ञानं वषट् ते विष्णु आ मे ग्रहा इमं मे वरुणोपप्रागादहिरिव भोगैः पूषा गा अन्वेतु नः प्रवां दंसांसि यमो दाधारेति प्रत्यृचम्।। १।।**

इहाधिकफलविशेषान्तराश्रयणाद्विधिप्रत्ययमात्रश्रुतेश्च नित्यत्वं केचिन्नक्षत्रदेवतायज्ञानां वदन्ति, प्रतिपदि चानुष्ठानम्। अन्ये तु फलवत्सन्निधौ यदफलं तदङ्गमिति फलवतो विवाहस्यानतिदूरे सूत्रकृता कर्तव्यतया प्रतिपादितत्वाद्गृहीतगर्भाया वध्वा उपकारकत्वेनाङ्गत्वमाहुः। अन्येऽन्यथा कथयन्ति - सन्ति नक्षत्रेष्टयः आहवनीयसाध्या वेदे काम्याः, कार्तिकामावस्यायां कृत्तिकास्वग्नये कृत्तिकाभ्योऽष्टाकपालमित्याद्याः। तत्र च युगपत्सर्वकामानवाप्नुयात् इति सर्वकामसिद्धिफलत्वेनाम्नाता एव गृह्याग्नावपि काम्यकर्मप्रस्तावेनोक्ताः। पुरोडाशानां स्थानेऽत्र चरवो व्रीहिमया यवमया वा। अनिर्दिष्टद्रव्यविशेषे व्रीहियवशास्त्रस्य सर्वत्रोपस्थानात्। तथा गृह्यान्तरं 'तस्यै तस्यै चरवः' इति। अत एव काम्या अपीष्टये गृह्याग्नौ कार्या ज्ञायन्ते तुल्यन्यायतया। अयं सूत्रार्थः - अष्टाविंशतिर्नक्षत्रदेवताः, वक्ष्यमाणाष्टाविंशल्लिङ्गिका ऋचः, ताभिर्नक्षत्रयज्ञेषु यजेत। कथम्। प्रत्यृचम् ऋचम् ऋचमिति, तेन यागभेदो द्रव्यदेवतासम्बन्धभेदानां भिन्नत्वात्। उक्तः पाकयज्ञ इहापि भवति। या ऋचोऽन्यत्र व्याख्यातास्ता इह न व्याख्यायिष्यन्ते।

**अग्निर्मूर्धा दिवः ककुत्पतिः०।। कृ०।। हिरण्यगर्भः समवर्तत०।। रो०।।**

व्याख्याते।

**मरुतो यद्ध वो दिवः सुम्नायन्तो हवामहे। आ तू न उपगन्तन।। मृ०।।**

हे मरुतो यत् यदर्थं यस्मै कामाय। हशब्दोऽवधारणे भिन्नक्रमः। वो युष्मान् हवामहे आह्वयामो यदर्थं, तदर्थमेव तूर्णमागन्तन आगच्छत, कुतः स्थानात् युष्मान् आह्वयामः। दिवः स्वर्गात्। किं कुर्वन्तः सुम्नायन्तः सुखायन्तः सुम्नं सुखमिच्छन्तः। आगत्य च कामानस्माकं कामं साधयतेति शेषः। आ इति निपातः, तूर्णमिति छान्दसो वर्णलोपः। नोऽस्मान्।

**मृडानो रुद्र०।। आ०।।**

**सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम्।**
**देवीं नावं स्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये।। पु०।।**

सोमयागवेद्यां कृष्णाजिनमनया आरोहयन्ति इहापि अग्निभूमिः स्तूयते। अहं पृथिवीमारुहेम आरोहामि। सुत्रामाणं, सुष्ठु त्रायते पालयति सुत्रामा ताम्। द्यां द्योतमानां विजिगीषुं क्रीडन्तीं वा। अनेहसमकोपनाम्, अह इति कोपनाम। सुशर्माणं शर्मेति सुखनाम सुसुखाम्। अदितिं दैन्यशून्याम्। सुप्रणीतिं शोभनं प्रणयनं व्रीह्यादिफलप्रापणं यस्यां ताम्। दैवीं दिव्याम्। नावं दुःखसागरतरणोपायम्। स्वरित्रा मरिभ्यो रागादिदोषेभ्यः सुष्ठु त्रायते स्वरित्रा ताम्। अनागसमनपराधामदोषां वा। अस्रवन्तीमच्छिद्राम्। स्वस्तयेऽविनाशाय।

**तव श्रिये व्यजिहीत पर्वतो गवां गोत्रमुदसृजो यदङ्गिरः।**
**इन्द्रेण युजा तमसा परीवृतं बृहस्पते निरपामौब्जो अर्णवम्।। ति०।।**

बृहस्पतिर्वैद्युतोऽग्निरादित्यो वा। हे बृहस्पते तव श्रिये शोभायै पर्वतो मेघो व्यजिहीत ऊर्ध्वं व्यगच्छत्, वृष्ट्यर्थं मेघ उद्धावतीत्यर्थः। 'अर्व-मर्व-पर्वपूरणे', पूरयति वृष्ट्यादिना जगन्ति पर्वतः। कस्मान्मेघ उद्धावति वैद्युतस्याग्नेः श्रीः शोभा भवतीति चेत् तत्राऽह - यस्मात् हे अङ्गिरः बृहस्पते तस्मिन् सति गवामपां गोत्रं, समूहमुदसृजः उत्कर्षेण सृष्टवानसि सृजसि वा। अङ्गानि रसयतीत्यङ्गिरा अग्निः, स चेह वैद्युत एव। किञ्च हे बृहस्पते त्वमपामर्णवं स्थानं निरौब्जः 'उब्ज-आर्जवे' आदित्यो यदोर्ध्वकिरणो गगनसमुद्राभिमुख्येन तिष्ठति, तदा मेघो वर्षति। श्रूयते हि 'असावादित्योऽवाग्रश्मिः पर्यावर्ततेऽथ वर्षति' इति। इन्द्रेण युजा इन्द्रेण सह, तमसा परीवृतमावृतमिति समुद्रविशेषणम्।

**नमो अस्तु सर्पेभ्यो० ।। अश्ले० ।।**

**आहं पितॄन्सुविदत्राँ अवित्सि नपातं च विक्रमणं च विष्णोः ।**
**बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ।। म० ।।**

अहं पितॄन् आ अवित्सि समन्ताद्वेद्मि। कीदृशान्। सुविदत्रान् सुष्ठु विन्दन्तीति सुविदत्राः। तथा विष्णोर्यज्ञस्य विक्रमणं पराक्रमं वेद्मि, नपातं च नप्तारं पौत्रम्। यज्ञस्य हि पुत्रस्थानीयमपूर्वं, पौत्रस्थानं स्वर्गादिफलम्। अतो बर्हिषदः बर्हिषि वेद्यां सीदन्ति, त इहाऽऽगमिष्ठा आगच्छन्तु। कीदृशाः। ये सुतस्य अभिषुतस्य सोमस्य पित्वः पितुनोऽन्नस्य, अथवा सुतस्य पुत्रस्य सम्बन्धिनः पितुनोऽन्नस्य भागं ये स्वधां भजन्ते त इहाऽऽगच्छन्तु।

**सदा सुगः पितुमाम् अस्तु पन्था मध्वा देवा ओषधीः संपिपृक्त। भगो मे अग्ने सख्ये न मृध्या उद्रायो अस्यां सदनं पुरुक्षोः ।। पूर्वा फा० ।।**

**ये ते अर्यमन्बहवो देवयानाः पन्थानो राजन्दिव आचरन्ति। तेभिर्नो अद्य पथिभिः सुगेभिः रक्षा च नो अधि च ब्रूहि देव ।। उत्तरफा० ।।**

**ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ।। ह० ।।**

**य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा।**
**तमद्य होतरिषितो यजीयान्देवं त्वष्टारमिह यक्षि विद्वान् ।। चि० ।।**

प्रजापतेरार्षम्। त्वाष्ट्री। त्रिष्टुप्। यस्त्वष्टा प्रजापतिर्विश्वकर्मा द्यावापृथिव्यौ जनित्री जनित्र्यौ कार्यविशेषाणां, रूपैर्विकारभेदैर्घटादिभिरपिंशत् संस्कृतवान्। अथवाऽत्यल्पमिदमुच्यते द्यावापृथिवीति। भुवनानि विश्वा योऽपिंशत्, समस्तानि भुवनानि त्रीणि सप्त चतुर्दश वा यः संस्करोति रूपैः नानाभूतैः। हे होतः अग्ने तं त्वष्टारमद्यास्मिन्नहनि त्वमिषितः प्रेषितः सन् यजसि। जानन् विद्वान्। यजीयानतिशयेन यष्टा। 'तुरिष्ठेमेयस्सु' इति तृचो लोपः ।।

**वायुरग्रेगा यज्ञप्रीः साकंगन्मनसा यज्ञम्।**
**शिवो नियुद्भिः शिवाभिः ।। स्वा० ।।**

वायुरग्रेगाः सर्वस्मात्सातिशयवेग इत्यर्थः। यज्ञं प्रीणाति यज्ञेन वा प्रीयते यज्ञप्रीः। साकं गच्छति साकंगत् मनसा यज्ञं, मनसा ग्रहयज्ञं गच्छतीत्यर्थः, सङ्कल्पि-

तमात्रं यज्ञं प्रापयतीत्यर्थः। शिवः श्रेयस्करः सर्वेषाम्। कैरग्रेगाः। नियुद्भिरश्वाभिः। कीदृशीभिः। शिवाभिः सुशिक्षिताभिः सुखकारिणीभिः।

**इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः। तद्वां चेति प्र वीर्यम्।। वि०।।**

**मित्रो जनान्यातयति ब्रुवाणो मित्रे दाधार पृथिवीमुतद्याम्। मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवद्विधेम।। अनू०।।**

मित्र आदित्यो जनान् यातयति यतमानान् प्रयुङ्क्ते, चेष्टाः कारयति ब्रुवाण इव गुर्वादिवत्। तथा मित्रः पृथिवीं धारयते, तथा द्यां दिवम्। किञ्च मित्रः कृष्टीर्मनुष्यान् अनिमिषितदृष्टिरभिचष्टे अभिमुखेन पश्यति, कः सुकृतं दुष्कृतं वा करोति फलेन योजयामीति। अतो मित्राय हव्यं हविर्विधेम दध्मः। कीदृक्। घृतवत्, अभिघारोपस्तरणाभ्यां हि चरोर्घृतवत्त्वम्।

**इन्द्रः सुत्रामा स्ववाँ अवोभिः सुमृडीको भवतु विश्ववेदाः।**
**बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम।। ज्ये०।।**

इन्द्रः परमेश्वरः प्रजापतिः, सुत्रामा सुष्ठु त्राता पालयिता, स्ववान् धनवान्, अवनमवोऽवोभिः रक्षणैर्नानाप्रकारैः सुमृडीकः सुसुखो भवतु सम्पद्यताम्। विश्ववेदाः सर्वधनः सर्वस्य वेदिता वा। बाधतां द्वेषः द्विष्टिः, 'द्विषोऽसुन्', शत्रुकर्म बाधताम्। बाधयित्वा, चास्माकमभयं कृणोतु। त्वत्प्रसादाच्च वयं सुवीर्यस्य शोभनस्य बलस्य पतयः स्वामिनः स्याम भूयास्म। भूयोऽर्थावबोधनानुष्ठानादिशक्तिर्वीर्यम्।

**यं ते देवी निर्ऋतिराबबन्ध प्राशं ग्रीवास्वविचर्त्यम्।**
**तं ते विष्याम्यायुषो न मुध्येथा विपितः पितुमद्धि प्रमुक्तः।। मू०।।**

निर्ऋतेरार्षम्, नैऋती, त्रिष्टुप्। यजमान उच्यते - हे यजमान ते तव निर्ऋतिर्दानवमाता ग्रीवासु गलेषु यं पाशं जरामरणप्रबन्धरूपसंस्कारात्मकम् आबबन्ध बद्धवती। कीदृशम्। अविचर्त्यं 'चृती च्छेदने' अच्छेद्यं, तं ते तव विष्यामि 'षिञ् बन्धने' विगतबन्धनं करोमि अनयाऽऽहुत्या। आयुषो नु मध्ये। नुरवधारणे। आयुषो मध्ये जीवित एवेत्यर्थः। क्षिप्रार्थो वा नुशब्दः निश्चयार्थो वा। अथ पाशविमुक्त्यनन्तरं विषितः विगतपाशबन्धनः सन् पितुमद्धि अन्नं नित्यानन्दात्मकं भुङ्क्ष्व, विशेषेण मुक्तः सन्।

**शं नो देवीरभीष्टय आपो भवन्तु पीतये।**
**शंय्योरभिस्रवन्तु नः।। पूर्वाषा०।।**
**विश्वेदेवा ऋतावृध ऋतुभिर्हवनश्रुतः।**
**जुषन्तां युज्यं पयः।। उत्तराषा०।।**

**ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः।**
**स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः।। अभि०।।**

गविष्ठिरस्यात्रेयस्यार्षं, ब्राह्मी, त्रिष्टुप्। हिरण्योपधाने विनियुक्ता। ब्रह्म जज्ञानं प्रथमं पुरस्तादिति ह रुक्ममुपदधातीति, इह तु नक्षत्रदेवतेष्टौ विनियोगः। ब्रह्मा आदित्यो वा तद्विवर्तो ब्रह्मात्रोच्यते। ब्रह्म आदित्यरूपं जज्ञानं जायमानं पुरस्तात् पूर्वदिनादौ विसीमतो निर्मर्यादं सुरुचः शोभनदीप्तीन् चन्द्रादीन् आवः 'वृञ्-आवरणे' आवृतवान् अभिभूतवान्। वेनः कान्तः। ब्रह्मण्यपि विवर्तपरिणामोपक्रमापेक्षया-ऽऽयोज्यम्। अत्र सुरुचो जीवात्मानः, तान् आवृतवान्। स ब्रह्मा आदित्यो वा सत उत्कृष्टस्य, असतश्च हीनस्य योनिं धर्माधर्मरूपं विवः विवृतवान्, उत्तममध्यमहीनं कार्यकारणजातं प्रकाशितवानित्यर्थः। तथा बुध्न्या उपमा विवः, बुध्ने अन्तरिक्षे भवा बुध्न्या आपो विवृतवान् आदित्य उपमा उत्कृष्टाः, तथाऽस्य लोकस्य विष्ठा विविधमवस्थिता दिशो विवृतवान्। ब्रह्मण्यप्येवं योज्यम्।

**वषट् ते विष्ण आस आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्।**
**वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः।।**

**आ मे ग्रहो भवत्वा मे भवतु पुरोरुक्।**
**आ मे विशतां स्तोत्रशस्त्रे समीची।। श्र०।।**

आभवतु मम यज्ञे ग्रह ऐन्द्रवायवादिः, आभवतु मम च पुरोरुक् ग्रहग्रहणार्थो मन्त्र 'आवायो' इत्यादिकः, आविशतां च स्तोत्रशस्त्रे। कीदृशी। समीची संमुखे सहाञ्चने वा।

**आ मे गृहा भवन्त्वा प्रजा म आ मा यज्ञो विशतु वीर्यवान्। आपो देवीर्यज्ञिया माविशन्तु सहस्रस्य मा भूमा मा प्रहासीत्।। ध०।।**

मे मम गृहा आ भवन्तु, तथा प्रजाः पुत्राद्याः आ भवन्तु, मम यज्ञश्च

मामाविशतु वीर्यवान् शक्तिमान्, तथा आपो देव्यो यज्ञं मदीयमाविशन्तु स्वकार्य-व्रीह्यादिद्वारेण स्वरूपेण च प्रणीतादिद्वारेण। किञ्च सहस्रस्य भूमा मां मा प्रहासीत् सहस्रसंख्यस्य गोसुवर्णादेर्यो भूमा सहस्रादपि यदधिकं लक्षादिसङ्ख्यं सुवर्णादिकं, तन्मां मा त्याक्षीत्।

**इमं मे वरुण श्रुधी हवमद्या च मृडय।**
**त्वामवस्युराचके।। श०।।**

हे वरुण इमं हवमाह्वानं मम श्रुधि शृणु, अद्य चास्मिन्नेवाहनि मृडय च सुखय च मां, यत्त्वामवस्युराचके, अवनमवः अवमिच्छन्नवस्युः त्वत्तो रक्षणमिच्छन्नहं त्वामाचके पश्यामि।

**उपप्रागाच्छसनं वाज्यर्वा देवद्रीचा मनसा दीध्यानः।**
**अजः पुरो नीयते नाभिरस्यानु पश्चात्कवयो यन्ति रेभाः।। पूर्वभा०।।**

अश्वमेधेऽधिगम्यमानस्याश्वस्य स्तुतिरियम्, इहापि भक्त्या चरोरुदिता। अश्वो ह्यश्नोतेर्व्याप्तिकर्मणः, अशनं व्यापनं वीर्यविशेषस्य तत्प्रभ(भा)वत्वात्। वाजी अश्वः शसनं विशसनमुपप्रागात्, विशसितोऽश्व इत्यर्थः। कीदृशो वाजी। इयर्तीत्यर्वा वेगवान्। अन्यच्च, कीदृशः देवद्रीचा देवप्रापकेण देवाना मायत्तेन मनसा दीध्यानो दीप्यमानः प्रकाशमानः शोभमान इति यावत्। यज्ञविशेषोपयोगेन ह्यश्वस्य देवत्व-प्राप्तिर्भवति। स्मर्यते हि -

'यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा।
यज्ञाय निधनं प्राप्ताः संप्रयान्त्युच्छ्रितीः पराः।।' (मनु.५.३९) इति।

अजः पुरो नीयते नाभिरस्य, अस्याश्वस्य पुरोऽग्रे अजो नीयते विशस्यते नाभिरिव, यथा नाभिरस्य जीवादुत्खिन्नवपारूपेण पूर्वं नीयते तथाऽज इत्यर्थः। अनु पश्चात् कवयो यन्ति रेभाः, अस्याश्वस्य विनाशात्पश्चाद्रेभा ऋत्विजोऽनुयन्ति गच्छन्ति प्रचरन्ति। कीदृशा रेभाः। कवयः क्रान्तदर्शनाः पाठकाश्च याज्यादेः।

**अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः।**
**हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान् पुमांसं परिपातु विश्वतः।। उत्तराभा०।।**

अश्वमेधे बद्धगोधाङ्गुलित्राणो गृहीताधिज्यधनुरनेनोच्यते, इहाप्यनेन होमे

अदृष्टाऽपूर्वविशेषद्वारेण यथाभिमतकामसिद्धिर्भवति। गोधासंज्ञकं बाहुत्राणं बाहुं पर्येति वेष्टयति अहिरिव भोगैः शिरोभिः। किं कुर्वाणो बाहुत्रः बाहुं पर्येति ज्याया गुणस्य हेतिमभिघातं परिबाधमानो निवारयन्। अयं च हस्तघ्नो गुणः पुमांसं यजमानं परिपातु विश्वतः सर्वस्मात्। कीदृशः। विश्वा वयुनानि विद्वान्, सर्वाणि वयुनानि प्रज्ञानानि तन्निमित्तानि कर्माणि वा जानन्।

**पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः।**
**पूषा वाजं सनोतु नः।। रे०।।**

**प्र वां दंसांस्यश्विनाववोचमस्य पतिः स्यां सुगवः सुवीरः।**
**उत पश्यन्नश्नुवं दीर्घमायुरस्तमिवेज्जरिमाणं जगम्याम्।। अ०।।**

हे अश्विनौ वां युवयोः सम्बन्धीनि दंसांसि कर्माणि अहं प्रावोचं भणामि। किम्। अस्य जगतः पतिः स्वामी अहं स्यां भूयासं युष्मत्प्रसादात्, तथा सुगवः शोभना गावो यस्य स सुगुरिति प्राप्ते सुगवश्छान्दसः, सुवीरः शोभनपुत्रयुक्तः, उत अपि च पश्यन् अविकलेन्द्रियः सन् दीर्घमायुरश्नुवं प्राप्नुयाम्। जरिमाणं जगम्यां जराजर्जरितत्वं च प्राप्नुयात्। इच्छब्दः पादपूरणार्थः। यथाऽऽदित्यः परिपूरितावधिरेवास्तं गच्छति, नासमये, तथा ममाऽयुर्भूयादित्यर्थः।

**यमो दाधार पृथिवीं यमो द्यामुत सूर्यम्।**
**यमाय सर्वमित्तस्थे यत्प्राणद्वायुरक्षितम्।। भ०।।**

यमो वैवस्वतः पृथिवीं दाधार दध्रे उत अपि च द्यां स्वर्गं सूर्यं चान्तरिक्षं लोकं दध्रे। यमाय सर्वमित्तस्थे यमस्य वशे सर्वमेव स्थितम्। किं तत्। यत्प्राणद्वायुरक्षितं, प्राणादिरूपेण वायुना यद्रक्षितं जीवरूपमित्यर्थः।।

**सर्वैः स्वजन्मदिवसे स्नातैर्माङ्गल्यपाणिभिः।**
**गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः।।**
**स्वनक्षत्रं च पितरस्तथा देवः प्रजापतिः।**
**प्रतिसंवत्सरं यत्नात्कर्तव्यः स महोत्सवः।।**

**।। इति नक्षत्रयज्ञो व्याख्यातः।।**

**।। इत्येकोनपञ्चाशी काण्डिका।। ४९।।**

## ।। अथ पञ्चाशी काण्डिका।।

**अथोपहाराः।। १।। यथाचरितमन्नं साधयित्वा सावित्रेण देवतायै बलिं हरेत् ।। २।। यथाचारं जपाः।। ३।। उक्तः शेषः।। ४।।**

अथशब्द आनन्तर्ये। हुतपाकयज्ञविधिरुक्तः, अनन्तरमहुतपाकयज्ञेषु वक्तव्येषु सर्वाहुतपाकयज्ञप्रकृतिभूता उपहारा उच्यन्ते इत्यर्थः। वैश्रवणीये ह्युपहारा दृष्टास्ते अन्येषां प्रकृतयः। तथा चाचारतोऽपि देशविशेषादिषु यथायथं प्रसिद्धाः। अतो यथाचारं यथादेवतं चान्नं पायसकृसरापूपादिकं साधयित्वा दीपपुष्पधूपादिपूर्वकं सवितृदेवताकेनोहितचतुर्थ्यन्ताभिमतदेवतानामान्तेन 'विनायकायोपहारम्' इत्याद्यूहकल्पनया बलिमुपहरेत्। आचारानतिक्रमेण जपाः, यस्यै देवतायै बलिरुपह्रियते, तद्दैवतैर्मन्त्रैर्जपाः कर्तव्या इत्यर्थः। अभिमतदेवतालिङ्गकमन्त्रालाभे तु लौकिकेन श्लोकादिनोपहारः कर्तव्यः। उक्तः शेष इति उपहृतशेषेण ब्राह्मणान् भोजयेत्, आद्याश्चेत्यादिः शेषः।। १-४।।

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याममुकदेवतायै बलिमुपहरामि।।**

व्याख्यातम्।।

**।। इति पञ्चाशी काण्डिका।। ५०।।**



## ।। अथ एकपञ्चाशी काण्डिका ।।

**अथ पशुकल्प उक्तः।। १ ।।**

कल्पनं कल्पो विधिः, पशोः कल्पः पशुकल्पः। स उक्तः। क्व उक्तः। आधाने 'आग्रेयेन स्थालीपाकेन पशुना वा यजेत' (४६.१०) इति। सोऽयं नित्यः पशूपहारः उक्तः। यथैव हि नवान्नेनाग्रायणमकृत्वा तद्भोजनमनुपपन्नं, तथा मांसेनानिष्ट्वा मांसभक्षणमप्ययुक्तमित्याहुः। अथशब्द आनन्तर्ये। तस्येतिकर्तव्यतां वक्ष्याम इत्यध्याहारः। तेनायं समूहार्थः - हविष्यकल्पश्चोक्त एवाग्र्याधाने, तत्रेष्टिविकाराणां हविष्कल्पानां प्रकार उक्तः, अनन्तरं पशुविकारस्य पशुकल्पस्य प्रकारं वक्ष्यामः।। १।।

**पूर्वेण शाखां निहत्य।। २ ।।**

पूर्वेण मूलमन्त्राणामुक्तः स उक्त एवेह यथोक्तः पूर्वेणाधिकारवाक्येन तत्र तत्र यथा नवेनानर्चिता ह्यस्य पशुना वाग्रय इति अतोऽसौ मत्स्यपशुना यजेतेति। तथेत्याद्युक्तम् अग्नये पशुना यजेत पुनः पूर्वेण शाखां निहत्येति सूत्रभेदो यथान्यैः कृतः यथा पूर्वस्मिन्पक्षे कस्य पूर्वेणेति संशयः स्यात्, पूर्वेणाग्निमिति च नाधीतम्। न चोपयुज्यते उक्तः पूर्वेणेति सर्वस्य सिद्धत्वात्। पशुग्रहणाच्छाग एव। शाखावचनात्तक्षणादयो यूपधर्मा न भवन्ति तत्स्थाने प्रयुक्तायाः शब्दान्यत्वात्।। २ ।।

**तस्मिंस्तूष्णीं सर्वम्।। ३ ।।**

तस्मिन् पशौ तद्वद्विक्रियमाणेऽपि यदुच्यते तत्तूष्णीं सर्वं भवति। सर्वं यत्कर्तव्यं तत्तूष्णीममन्त्रकं कुर्यात्।। ३ ।।

**यन्न लुप्तार्थम्।। ४ ।।**

लुप्तार्थं तत्तूष्णीमपि न भवति। यथा शाखायां तक्षणम्।। ४ ।।

विकारेषु चोदितमिति वचनात्सर्वं तूष्णीं प्राप्तमित्यपवादमाह -

**देवताहोमवर्जमिति।। ५ ।।**

यद्देवतासम्बद्धं तत्समन्त्रकं देवतानाम्ना वा कर्तव्यं, होमश्चेत्यर्थः।। ५ ।।

**प्रागाज्यभागाभ्यां दर्भेषु पशुमुपाकरोति प्रोक्षति पाययति पर्यग्निं करोति।। ६ ।।**

परिसमूहनादिराष्ट्रभृदन्तं कृत्वा प्रागाज्यभागाभ्यां दर्भेण पशुमुपाकरोति तूष्णीं प्रोक्षति च तथा पाययति पयः। पर्यग्निं च करोति पशुम्। दर्भग्रहणं शाखा-निवृत्त्यर्थम्। प्रागाज्यभागाभ्यामुपाकरणीयहोमौ, प्रजापतेर्जायमान इति द्वाभ्यां कर्तव्यौ। ततो दर्भेण पशूपाकरणम्। शाखान्ते प्रत्यङ्मुखं पशुमुपस्थाप्य रशनादानं तूष्णीम्। 'ऋतस्य त्वा' इत्यादिना, 'अग्नये जुष्टं बध्नामि' इति पूरितेन दक्षिणेऽर्धशिरसि पशुं बध्नाति, शाखायां तूष्णीं पशुं बध्नाति छागम्।। ६।।

**घृतमवघ्राप्यापाव्या जुहोति।। ७ ।।**

पशुं घृतमाघ्राप्य अपाव्यसमाख्याता आहुतीर्जुहोति। तेनैव घृतेन 'प्रजा-नन्त' इति पञ्चभिः।। ७ ।।

**उल्मुकं हरति।। ८ ।।**

येन पर्यग्निकरणं कृतं तदेवोल्मुकं हरति पानार्थम्।। ८ ।।

**दर्भमास्तृणाति।। ९ ।।**

दर्भास्तरणं तूष्णीं करोति।। ९ ।।

**तस्मिन्यथोक्तं संज्ञपयन्ति।। १० ।।**

तस्मिन्दर्भे संज्ञपयन्ति मारयन्ति। बहुवचनेन नासिकादिग्रहणादिना प्रत्य-क्शिरसमुदक्पादमित्यादि ज्ञायते।। १० ।।

**संज्ञप्ते यथोक्तमद्भिः प्राणायतनानि स्नापयति।। ११ ।।**

प्रमापिते सति प्राणस्य शरीरस्य वायोर्यान्यायतनानि मुखादीनि, तानि स्नापयति। यथोक्तग्रहणात् पत्न्या स्नापनं ज्ञायते।। ११ ।।

**उत्खिद्य वपां शाखां विशाखां च प्रच्छाद्य चरमेऽङ्गारे वपां निगृह्यान्तरा शाखाग्नी हृत्वाऽभिघार्य श्रपयति।। १२ ।।**

ततो नाभिक्रोडयोर्मध्याद्वपामुत्खिन्दति खड्गेन देवताभिधानत्वात् 'अग्नये त्वा जुष्टमवकृन्ता' इति मन्त्रेण। उत्खिद्य च वपाश्रपण्यौ शाखया प्रच्छादयति,

ततश्चरमेऽङ्गारे वपां निगृह्णाति, उत्तरभागे सर्वान्ते योऽवस्थितोऽङ्गारस्तत्र निदधातीत्यर्थः। ततस्तां शाखाया अग्रेश्च मध्येनाहरति दक्षिणं भागमानयतीत्यर्थः। ततो दक्षिणभागमानीयोदङ्मुखोऽभिघार्य श्रपयति।। १२।।

**शृतां दर्भेषूदगग्रेषु निधायाज्यभागपरिवप्यौ हुत्वा वपां देवताया उपनामयेत्।। १३ ।।**

ततः श्रृतां वपामुदगग्रेषु दर्भेषु निदधाति तदनन्तरमाज्यभागौ जुहोति ततः परिवप्यसंज्ञकावन्वर्थकौ होमौ जुहोति। तत्र जातवेदो वपया गच्छेत्येकः, देवेभ्यः स्वाहा इति द्वितीयः स्रुवेणाज्येन। तदनन्तरं वपां देवताया उपनामयेत्। अयमर्थः - जुह्वा वपामुपस्तीर्य दक्षिणतोऽसिना सकृदवदाय देवतायै दद्यात् तन्नामधेयेन, तद्देवतया वर्चा।। १३ ।।

**उप्यपरिवप्यौ हुत्वा सदर्भे वपाश्रपण्यावग्रा अनुप्रहृत्यापोहिष्ठीयाभिर्मार्जयित्वोक्तान्यवदानानि प्राक्स्विष्टकृतो देवतायै बलिमुपहरेत्।। १४।।**

उप्यो नाम होमः, परिवप्यश्च दर्शितो 'जातवेदो वपया गच्छ' इति, 'देवेभ्यः स्वाहा' इति। तौ हुत्वा प्रतिपत्त्यर्थं वपाश्रपणार्थदर्भसहिते वपाश्रपण्यावग्रौ क्षिपति तूष्णीम्। तत आपोहिष्ठीयाभिर्मार्जनं तत्रैव करोति चत्वालस्य लुप्तार्थत्वे पात्राभावात्। तदनन्तरं प्रकृतौ यथाचोदितानि हृदयादीन्यवदानानि स्विष्टकृतः पूर्वं बलिमुपहरेत्। तत्र हृदयस्य शूलेपाकः, शिष्टानां स्थाल्याम्। द्विर्द्विरवदाय होमो हृदयादिभ्यः। तानि तु हृदयजिह्वाक्रोडमध्यदक्षिणबाहुपार्श्वद्वयगुदश्रोणिमेदोमध्यानि। ततः पशुपुरोडाशस्थाने यथादैवतमुपहारेषु चरुमोदकादीनामन्यतमः कार्यः।। १४ ।।

**यथाचारं जप उक्तः शेषः।। १५ ।।**

गतार्थम्।। १५ ।।

अथ मन्त्रविवृतिः। तत्रोपाकरणीयहोममन्त्रौ -

**प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः।**
**ता अस्मै प्रतिवेदय चिकित्वाँ अनुमन्यताम्।।**

उपाकर्त्रोच्यते - प्रजापतेः सकाशात् जायमानाः इमा वर्तमानाः प्रजाः, याश्च जाता अतीतोत्पत्तिक्रियाः, ताः सर्वा अस्मै पशवे प्रतिवेदय बोधय, यस्य यादर्थ्ये-

नोत्पत्तिस्तं तथा प्रतिपादय यज्ञार्थं पशवः सृष्टाः इत्यादिरूपेण। त्वं हि चिकित्वान् जानानोऽभिज्ञः। त्वया च बोधितं पशुं मन्यमानमनुमन्यतां प्रजापतिः सत्यमनुजानात्वित्यर्थः।

**पशुपतेः पशवो विरूपा सरूपा उत।**
**तेषां यं वव्रिरे देवास्तं स्वराडनुमन्यताम्।।**

पशुपते रुद्रस्य सरूपा विरूपाश्च पशवः यागे योग्याश्चायोग्याश्चेत्यर्थः, उतशब्दश्चार्थे, तेषां मध्ये यं छागादिकं पशुं देवा वव्रिरे वृण्वन्ति प्रार्थयन्ते तमेव स्वराट्, स्वयं राजते इति स्वराट्, प्रजापती रुद्रोऽनुमन्यतामभ्युपागच्छतु।

अपाव्या जुहोति -

**प्रजानन्तः प्रतिगृह्णन्ति पूर्वे प्राणमङ्गेभ्यो अधिनिश्चरन्तम्।**
**हुतो याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः।।**

अपाव्यानां देवानामार्षम्। पशूनां यज्ञेषूपयुक्तानां स्वर्गतिरिह प्रशस्यते। पूर्वे देवाः प्रकृतस्य आलब्धस्य पशोः प्राणमङ्गेभ्योऽवयवेभ्यो निश्चरन्तमेव निर्गच्छन्तमेव प्रतिगृह्णन्ति स्वीकुर्वन्ति। कीदृशाः पूर्वे। प्रजानन्तः अस्मदर्थं प्रजानन्तः अस्मदर्थमालब्धोऽयमिति मन्यमानाः। अतः पशुरुच्यते - इदानीं हुतोऽग्नौ प्रक्षिप्तावदानः सन् स्वर्गं याहि पथिभिर्मार्गैः। कीदृशैः। देवयानैर्यैर्देवा यजमानानायान्ति, त्यक्तप्राणैश्च शरीरैः शरीरावयवैः प्रतितिष्ठ।

**ये बध्यमानमनुबध्यमाना अन्वैक्षन्त मनसा चक्षुषा च।**
**अग्निष्टाँ अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संविदानः।।**

ये पशवो बध्यमानमनुबध्यमाना लक्षणीकृत्य पश्चाद्बध्यमानाः सन्तः अन्वैक्षन्त पश्यन्ति चक्षुषा मनसा च, तानप्यग्रे प्रथममग्निः प्रमुमोक्तु दुःखान्मोचयतु देवत्वमापादयतु मुक्तिं वा। एतदुक्तं भवति - यज्ञपरम्परया मम यजमानस्य स्वर्गतिर्भवतीत्येतावद्वेदादव्याहतसिद्धम्। इदं त्वभ्यर्थयामहे अस्मदर्थेन क्लेशमनुभवन्ती पशुपरम्परा स्वर्गतिमनुभवतु सम्पन्नदिव्यदर्शना सती अग्निप्रसादात्। कीदृशोऽग्निः, प्रजापतिः प्रजानां पाता, दुःखविमोचनं च प्रजानां पालनम्। अन्यच्च कीदृशः। प्रजया संविदानः, 'विद्ऌ-लाभे' प्रजया जनितरक्षया प्रजापतित्वं लभमानः।

**य आरण्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः।**

**वायुष्टाँ अग्रे प्रमुमोक्तु देवो विश्वकर्मा प्रजया संरराणः।।**

ये आरण्याः पशवः सिंहादयो विश्वरूपाः सर्वरूपाः, विरूपा विविधरूपाः सन्तो बहुधैकरूपा बहुधा नानाप्रकारेण हरिणत्वाद्यवान्तरजातिभेदेनैकरूपा अनुगताकाराः, अथवा बहुधा सिंहहरिणादिरूपेण विरूपा अपि सन्तः पशुत्वेनैकरूपाः, तान्सर्वानपि अग्रे प्रथमं प्रमुमोक्तु तज्ज्ञातेरुपकारकत्वात्। विश्वं कर्तव्यं यस्य स विश्वकर्मा प्रजापतिरूप इत्यर्थः। प्रजया संरराणः सम्यग्रममाणः क्रीडन् प्रजासर्गस्थिति-प्रलयैः, तेन प्रजापतेः सृष्ट्यादिना किं प्रयोजनमित्यपर्यनुयोगः।

**येषामीशे पशुपतिः पशूनां चतुष्पद उत ये द्विपदः।**

**निष्क्रीतास्ते यज्ञियं भागयन्तु रायस्पोषा यजमानं विशन्तु।।**

ये चतुष्पदः पशवोऽजादयः, उत तथा द्विपदः कपिञ्जलादयः निष्क्रीताः क्रीतनिश्चयं सम्प्राप्ताः ते, यज्ञमर्हति यज्ञियस्तं भागयन्तु यज्ञार्हाऽवदानानि भागरूपतां प्रापयन्तु, रायस्पोषाः धनपुष्टियुक्ताः सन्तः यजमानं विशन्तु। के ते पशवः। येषां पशूनां पशुपती रुद्र ईशे प्रभवति।

**प्रमुञ्चमाना भुवनस्य रेतो गातुं धत्त यजमानाय देवाः।**

**उपाकृतं शंसमानं यदस्थात्प्रियं देवानामप्येतु पाथः।।**

हे देवा ऋत्विजः प्रमुञ्चमानाः पशूनां दुःखविमोकं कुर्वन्तः यजमानाय गातुं यज्ञं धत्त विधत्त। ददत वा। कीदृशं यज्ञं धत्त। भुवनस्य लोकत्रयस्य रेतो बीजं कर्म-यज्ञं धत्त विधत्त। ददत वा। कीदृशं यज्ञं धत्त। भुवनस्य लोकत्रयस्य रेतो बीजं कर्म-जन्यत्वात् जगताम्। यज्ञे च क्रियामाणे देवानामपि प्रियं पाथोऽन्नं पशुलक्षणं देवा-नामेतु देवान्प्राप्नोतु। कीदृशं पाथः। उपाकृतं यदस्थात्, यूपसमीपमानीय यत्तिष्ठति, शंसमानं देवतासम्बन्धमभिशंसत् प्रार्थयमानम्।

वपां जुहोति -

**त्वामु त्ये दधिरे प्रथमं विचक्ष्यं शृतकर्तारमुत यज्ञियं च।**

**अग्ने सदक्षः सतनूर्हि भूत्वाऽथ वह हव्यं देवेभ्यो जातवेदः।।**

हे जातवेदः जातप्रज्ञान जातधन वा, वेदो ज्ञानं धनं वा, देवेभ्यो हव्यं वह। किं कृत्वा। सदक्षः सतनूश्च भूत्वा, सह दक्षेण दाक्षिण्येन वर्तते इति सदक्षः, सह

तन्वा वर्तते इति सतनूर्देवहवि:प्रापणसमर्थशरीरविशेषयुक्तः सन्नित्यर्थः। अथानन्तरं यतस्त्वामु त्वामेव त्ये ते यजमाना दधिरे धारयन्ते प्रथमं विचक्ष्यं दर्शनीयं, तथा शृतस्य पाकस्य कर्तारं, यज्ञियं च यज्ञार्हं च।

**जातवेदो वपया गच्छ देवांस्त्वं हि होता प्रथमो बभूव।**
**घृतस्याग्ने तन्वा संभवस्व सत्याः सन्तु यजमानस्य कामाः।।**

हे जातवेदः अग्ने देवान् गच्छ वपया सह वपां गृहीत्वा। त्वं हि होता आह्वाता देवानां दाता वा बभूव भवसि। हे अग्ने घृतस्य तन्वा ज्वालया सम्भवस्व सम्बध्यस्व। एतया च वपया देवप्रापितया यजमानस्य कामाः सत्याः सन्तु।

**।। इति पशुकल्पः ।।**

**।। इत्येकपञ्चाशी काण्डिका।। ५१।।**



## ।। अथ द्विपञ्चाशी काण्डिका ।।

**अथ शूलगवः।। १ ।।**

अथशब्दो नित्यात्पशुकल्पाद्विवक्षितस्य काम्यस्यानन्तर्यमाह, नित्यं पशुतन्त्रमुक्तम्, अनन्तरं काम्यं वक्ष्याम इत्यर्थः। शूलगव इति कर्मनाम। शूले सर्वाण्यवदानानि पच्यन्ते। अत्र गौरपिच पशोरन्वर्थकं नाम। अवदानहोमान्तं च च्छागपक्ष एव, गोः पुनरुत्सर्ग एव लोकविरोधात्।। १ ।।

**सर्वेभ्यः कामेभ्यः।। २ ।।**

काम्यन्ते इति कामाः स्वर्गादिफलविशेषाः, तादर्थ्ये चतुर्थी। पर्यायेण सर्व-कामसिद्धिर्न समुच्चयेनेति योगसिद्ध्यधिकरणे व्यवस्थितम्।। २ ।।

**शरदि वसन्ते वा।। ३ ।।**

कालविकल्पार्थमेतत्।। ३ ।।

**नियमः स्यादित्येके। अनियमः स्यादित्येके।। ४ ।।**

एके पुनः कालनियमं नानुमन्यन्ते। तेन यदाकदाचित्कर्तव्यः शूलगवः।।

**गवां मध्य उत्तरतो ग्रामस्य वेद्याकृतिं कृत्वा शाखाभिः परिवार्यातष्टं यूपं तूष्णीमुच्छ्रयन्ति।। ५ ।।**

ग्रामस्योत्तरे देशे गवां मध्ये वेद्याकृतिं कृत्वा, पाशुकीमेव वेदिं चतुरस्रां कृत्वेत्यर्थः, तां वेदिं वृक्षशाखाभिः परिवृत्य अतष्टं तक्षणरहितं यूपमुच्छ्रयन्ति। यूप-शब्दस्य संस्कारशब्दत्वान्मन्त्रे प्राप्ते तदपवादस्तूष्णीमिति। उच्छ्रयन्तीति बहुवचने-नोच्छ्रयणस्यानियतकर्तृत्वमाह।। ५।।

**तमपरेण यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा, भवाय शर्वाये-शानायेश्वराय पशुपतयेऽधिपतय इति गामुपाकरोति पशुं वा।। ६ ।।**

तं यूपमाश्रित्यापरेण पश्चिमे भागे यथोक्तमुपसमाधानादिकमाज्यभागान्तं कृत्वा, जयप्रभृतिभिर्हुत्वेति स्थालीपाकतन्त्रमत्र राष्ट्रभृत्पर्यन्तमुपलक्षयति। भवाय

त्वामुपाकरोमि, शर्वाय त्वामुपाकरोमीत्यादिना मन्त्रषट्केनोपकल्पयामीत्यन्तेन गामुपाकरोति पशुं वा च्छागम्।। ६ ।।

**प्रतिनाम प्रतिद्रव्यं प्रत्यनुवाकमिति।। ७ ।।**

नामानि भवाय शर्वायेत्यादीनि। नाम नाम प्रतिनाम, द्रव्यं वपाऽवदानादि, द्रव्यं द्रव्यं प्रतिद्रव्यम्। अनुवाकाः षट् रुद्राभिधानाः पूर्वव्याख्याताः 'नमस्ते रुद्र मन्यवे' इत्याद्याः। अनुवाकम् अनुवाकं प्रत्यनुवाकम्। इतिशब्दोऽधिकरणप्रधानः। इह यद्वपाऽवदानादिकं कर्म प्रधानं, तत्प्रतिद्रव्यं क्रियमाणं प्रतिनाम प्रत्यनुवाकं च कर्तव्यम्। तथा षड्भिरनुवाकैर्यथासंख्यमेकैकेन भवादिनामशब्देन युक्तैर्विपर्यया: षट् होमाः। हृदयादिभ्य एकैकस्माद्द्विर्द्विरवदाय समुदायं कृत्वैव देयाः षडुपहाराः।।

**षट् पुरोडाशानेककपालांस्तूष्णीमुपचरिताञ्श्रपयित्वा प्राक्स्विष्टकृतः षड्लोहितबलीन्पात्रेषु दर्भेषु वा कल्पयित्वा 'नमस्ते रुद्र मन्यव' इति षड्भिरनुवाकैरुपतिष्ठते।। ८ ।।**

एकैकस्मिन्कपाले निर्वृत्तान् षट् पशुपुरोडाशांस्तूष्णीं मन्त्रव्यतिरेकेण निर्मितान् श्रपयित्वा स्विष्टकृतः पूर्वं बलिषट्कमेकैकेन पुरोडाशेन भिन्नभिन्नपात्रस्थेन भिन्नभिन्नदर्भस्थेन वा पशुलोहितलिप्तेन कल्पयेत्। 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां भवाय जुष्टं कल्पयामि' इत्यादयः कल्पने षट् मन्त्राः। कल्पयित्वा च 'नमस्ते रुद्र मन्यवे' इति षड्भिरनुवाकैरुपस्थानं कृत्वा बलिमुपहरति।।

**ईशानं त्वा शुश्रुमेति च सर्वत्रानुषजति।। ९ ।।**

ईशानं त्वेति वाक्यशेषमनुवाकषट्केन सम्बन्धयतीत्यर्थः। ततस्त्रिभ्योऽङ्गेभ्यो मध्यसव्यश्रोणिदक्षिणबाहुभ्यः सकृदवदाय 'अग्नये स्वाहेति' स्विष्टकृतं यजति। पूर्वोक्तमन्त्रेणेत्येके। अनेनैव च समाप्तिः। ततो वपाश्रपणीं सदर्भां पूर्ववदग्नौ प्रहरति प्रोक्षति चापोहिष्ठीयाभिः।। ९।।

**प्रभूतन्ब्राह्मणान्भोजयन्ति।। १० ।।**

यथाशक्ति ब्राह्मणान् मांसेन भोजयन्ति।। १० ।।

**नापक्वं ग्रामं प्रवेशयन्ति।। ११ ।।**

अपक्वमपि ग्रामं न प्रवेशयन्ति, का वार्ता पक्वस्येति केचित्। अपरे तु पक्वस्य ग्रामप्रवेशनमिच्छन्ति कदाचित्।। ११ ।।

**शिष्टं भूमावर्पयन्ति सचर्म।। १२ ।।**

मुच्यमानं पक्वमपक्वं भूमौ प्रक्षिपन्तीत्यर्थः। सचर्म चर्मणा सह।। १२ ।।

**अनवेक्षमाणा आयान्ति।। १३ ।।**

यज्ञभूमिमपश्यन्तो ग्राममागच्छन्तीत्यर्थः।। १३ ।।

व्याख्यातं सूत्रजातम्। मन्त्रान्व्याख्यास्यामः। तत्र रुद्रा व्याख्याताः।।

**ईशानं त्वा शुश्रुमा वयं धनानां धनपते।**
**गोमदग्ने अश्ववद्भूरि पुष्टं हिरण्यवदन्नवद्धेहि मह्यम्।।**

आस्तारपङ्क्तिः(पाङ्क्तिः)। भूतानाम्। ईशस्यार्षम्। अग्निरेव रुद्रः। हे अग्ने त्वां वयं धनानामीशानं प्रभुं शुश्रुम श्रुतवन्तः। अतो हे धनपते भूरि बहुपुष्टं परिपूर्णं मह्यं धेहि। कीदृशम्। गोमत् गोयुक्तम्। एवमश्ववद्धिरण्यवदन्नवदिति योज्यम्।

**दुहां ते द्यौः पृथिवी पयोऽजगरस्त्वा सोदको विसर्पतु।**
**प्रजापतिनाऽऽत्मानमाप्रीणेऽरिक्तो म आत्मा।।**

नष्टरूपा पङ्क्तिः। हे प्रजापते रुद्राग्ने तव सम्बन्धिनी द्यौः पयो दुग्धां जलं मुञ्चतु। कीदृशी द्यौः। पृथिवी पृथ्वी महती। अजं जलं, तद्गिरति मुञ्चति अजगरो मेघः त्वां सोदकः उदकसहितो विसर्पतु। प्रजापतिना साध्यपाकादिना अहमात्मानमाप्रीणे तर्पयामि पूरयामि, अतः स ममात्मा अरिक्तः परिपूर्णो भवतु।

**यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु।**
**यो रुद्रो विश्वा भुवनाविविशे तस्मै रुद्राय नमो अस्तु देवाः।।**

हे देवा ऋत्विजः, तस्मै रुद्राय नमोऽस्तु यो अग्नौ अप्सु ओषधीषु वनस्पतिषु च स्थितः। अथऽवात्यल्पमिदमुच्यते यो विश्वा विश्वानि भुवनानि आविवेश येन सर्वाणि भुवनानि व्याप्तानि।

**।। इति शूलगवः।।**

**।। इति द्विपञ्चाशी काण्डिका।। ५२ ।।**

## ।। अथ त्रिपञ्चाशी काण्डिका ।।

**औपसदेऽग्नौ सायंप्रातरग्निहोत्रदेवताभ्यो जुहुयात्।। १ ।।**

औपसदोऽग्निरुक्तः 'एष औपसदोऽग्निर्वैवाहनो वा, तस्मिन्पाकयज्ञाः' (४७.१-२) इति। स च गार्हपत्यधर्मेत्यग्निहोत्रादिसदृशैस्तत्र कर्मभिर्युक्तं भवितुम्। अतस्तस्य जागरणायाग्निहोत्रादिसदृशानि कर्माणि तत्रोच्यन्ते, न तु तान्येवैतानीति भ्रमणीयं देवताग्रहणात्कालाभिधानाच्च। अग्निहोत्रादिके सति तद्रूपाकृष्टत्वादेव देवताकालयोः व्यर्थं तदुपादानं तस्मिन्नग्निहोत्रं जुहुयादित्येतावता सिद्धेः। देवताग्रहणादेव च नामधेयेन होतव्यं, न मन्त्रेण। अग्निहोत्रदेवतास्त्वग्निसूर्यप्रजापतयः। 'अग्नये स्वाहे'ति सायं, 'सूर्याय स्वाहे'ति प्रातः, 'प्रजापतये स्वाहे'त्युभयत्र मनसा। अर्थाक्षिप्तं तु द्रव्यं सादृश्याद्दधि-घृतपयोयवादीनामन्यतमं, तदभावे तण्डुलाः।। १ ।।

**पर्वणि भार्यामुपवास्य दर्शपूर्णमासदेवताभ्यो जुहुयात्।। २ ।।**

दर्शपूर्णमासदेवताभ्योऽग्निविष्णुप्रजापत्यग्नीषोमेन्द्रेभ्यो जुहुयादेकस्मात्स्थाली-पाकात्प्रतिदेवतं चतुरावर्तेन। उपांशुयाज्यं त्वाज्येनैव जुहुयात्। सान्नाय्यं त्वपीतसोमस्य दर्शपूर्णमासयोरेव नास्ति, का वार्तासदृशेषु पाकयज्ञेषु। पर्वणीति कालविशेषविधिः। भार्यामुपवास्येत्युक्ते दण्डापूपिकया यजमानस्याप्युपवासः प्रतीयते। अपरेऽपरथा व्याचक्षते भार्यामुप समीपे वासयित्वा संनिधाप्य जुहुयादिति। दर्विहोमवदपूर्वत्वादत्र पूर्वत्र च परतन्त्राभावः।। २ ।।

**नवस्याग्रायणदेवताभ्योऽज्यानीभिरभिजुहुयात्।। ३ ।।**

पर्वणीत्यनुवर्तते। नवस्यान्नस्यांशं जुहुयात्। काभ्यः। आग्रायणदेवताभ्यः। या आग्रायणे वैदिके देवताः, ताभ्य एव गृह्याग्रावपि जुहुयात्। ताः पुनरग्नीन्द्रौ विश्वे देवा द्यावापृथिव्याविति। यवास्तु हविः। अज्यानीभिरिति मन्त्रनिर्देशः। तास्तु षट्। प्रत्यृचं होमश्चतुरावर्तेन स्रुवेणाभिघृतेन। पूर्वत्रापि तुल्यमेतत्।। ३ ।।

**स्विष्टकृदनुमन्त्रणमुक्तम्।। ४ ।।**

अग्निः प्राश्नात्विति हुतस्यानुमन्त्रणम्।। ४ ।।

**प्राशनं च।। ५ ।।**

उक्तमित्यनुषङ्गः। आग्रायणोक्तमेव प्राशनं ग्राह्यं स्विष्टकृत्कालकम्। भद्रान्न इति व्रीहिश्यामाकानां भक्षणे मन्त्रः, एतमु त्यमिति यवानाम्।। ५ ।।

अथ मन्त्रविवृतिः। याज्यया अनुवाक्यया वा होमः। तत्र आम्नाये अग्निमित्याद्या यथालिङ्गं याज्यानुवाक्याः। त्वमिमा इति द्वे सोमदैवत्ये त्रिष्टुभौ सौम्यश्यामाकस्य याज्यानुवाक्ये।

**त्वमिमा ओषधीस्सोम विश्वास्त्वमपो अजयस्त्वं गाः।**
**त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ।।**

देवपुत्राणां ब्रह्मणो वाऽऽर्षम्। अनुवाक्येयं, उत्तरा तु याज्या। उत्तरत्राप्येवम्। हे सोम इमा विश्वाः सर्वा ओषधीः त्वमेवाजयः, नकारलोपश्छान्दसः, अजनयः जनितवानसि। बह्वृचे त्वजनय इति नकारः पठ्यते। एवमपो विश्वास्त्वमजयः, तथा गाः औस्रेयास्त्वमेव जनितवान्। किंच उरु विततमन्तरिक्षं त्वमेव आततन्थ आततवान् विस्तारितवान्। त्वमेव च ज्योतिषा तमो विववर्थ विशेषेणान्धकारं वृतवान्।

**या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु।**
**तेभिर्नो विश्वैस्सुमना अहेडन्राजन्सोम प्रति हव्या गृभाय।।**

राजा सोमः 'सोमो वा ओषधीनां राजा' इति श्रुतेः। हे राजन् सोम हव्या हव्यानि प्रतिगृभाय प्रतिगृहाण। 'हलः श्नः शानज्झौ',' छन्दसि शायजपि' 'हृग्रहोर्भश्छन्दसि' इति हस्य भत्वम्। 'व्यवहिताश्च' इति व्यवहितस्य प्रतेरुपसर्गस्य प्रयोगः। 'शेश्छन्दसि बहुलम्' इति हव्येत्यत्र शेर्लुक्। किं कुर्वन् हव्यानि गृहाण। अहेडन् 'हेड़-अनादरे' अनादरमकुर्वन्। सुमनाः शोबनचित्तः सन्। कैर्गृहाण। तेभिस्तैर्विश्वैः सर्वैर्नामभिः। कैः। यानि ते तव दिवि धामानि तेजांसि, यानि च पृथिव्यां, यानि च पर्वतेषु, ओषधीषु व्रीह्यादिषु, तथाप्सु, तैः सर्वैः।

**सदा सुगः पितुमाँ अस्तु पन्था मध्वा देवा ओषधीस्संपिपृक्त।**
**भगो मे अग्ने सख्ये न मृध्या उद्रायो अश्याँ सदनं पुरुक्षोः।।**
**स्वदस्व हव्या समिषो दिदीह्यस्मद्र्यक्संमिमीहि श्रवाँसि।**
**विश्वाँ अग्ने पृत्सु ताञ्जेषि शत्रूँरहा विस्वा सुमना दीदिही नः।।**

राजसूये सौम्यः श्यामाकश्चरुः बभ्रुः पिङ्गलो दक्षिणेति श्यामाकेष्टिराम्नाता। तस्याः क्रमे एते याज्यानुवाक्ये पठ्येते। अत्र स्विष्टकृदग्निर्देवता सापीहेष्टिर्युक्तेति व्याख्यायते मन्त्रद्वयम्। अग्निः सोमः, हे अग्ने सर्वकालं सुगः सुखगमनः पन्थाः मार्गः दृष्टादृष्टपुरुषार्थप्राप्त्युपायोऽस्माकमस्तु। कीदृशः। पितुमान्, अन्नवान्। हे देवा द्योतमानाः रविरश्मयः ओषधीर्व्रीह्याद्याः मध्वा मधुरसेन जलेन संपिपृक्त 'पृची-सम्पर्के' सम्पृक्ताः सिक्ताः सम्पादयत। तथा भगो बन्ध्वादिभ्यो विभज्यमानमन्नं मे ममास्तु। किं च हे अग्ने मम तथा भव यथा न मृध्याः 'मृधु-हिंसायाम्' अहिंसको भवेत्यर्थः, सख्ये वर्तमानः। उद्रायो अश्यां सदनं पुरुक्षोः, रायो धनानि उदश्यामुत्कर्षेणाश्नुयां व्याप्नुयां प्राप्नुयामहम्। सदनं पुरुक्षोः यानि धनानि भवन्ति, सीदन्त्यस्मिन्निति सदनं स्थानमास्पदं, पुरु इति बहुनाम, 'रु-क्षु-शब्दे' बह्व्याः प्रसिद्धेः स्थानमित्यर्थः।

स्वदस्व हव्या इति। हे अग्ने हव्या हव्यानि हवींषि स्वदस्व स्वादय। समिषो दिदीहि इषोऽन्नानि सम्यग्देहि दानार्थं संमानपरिच्छेदहानायेति। किं च विश्वान् सर्वान् शत्रून् जेषि जय। कुत्र। पृत्सु संग्रामेषु। तथा अहा अहानि विश्वा विश्वानि सुमनाः सुचित्तः सन् दीदिहि देदीप्यमानान्यनवरतयज्ञार्थं हविः प्रज्वालनेन कुरु नोऽस्माकम्।

आग्रायणदेवताभ्यो जुहुयादित्युक्तम्। तत्राग्रायणदेवतालिङ्गा मन्त्रा व्याख्यायन्ते।

**आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्।**
**येषामिन्द्रो युवा सखा।।**

गायत्री। घा इति पादपूरणो वर्णागम इति। उपसर्गः स्तृणातिना सम्बध्यते। येषामिति तेषामित्यस्य प्रसङ्गे व्यत्ययेन। ये अग्निमिन्धते तथा बर्हिरास्तृणन्ति। कीदृशम्। आनुषक्, आ समन्तादनुषजत इत्यानुषक् कर्मानुषक्तं, तेषामिन्द्रो युवा, विश्वस्तरुणो वा, सखा समानख्यानो भवति।

**सुकर्माणस्सुरुचो देवयन्तोऽयो न देवा जनिमा धमन्तः।**
**शुचन्तो अग्निं ववृधन्त इन्द्रमूर्वं गव्यं परिषदन्तो अग्मन्।।**

त्रिष्टुप्। युगलानां पूर्वा गायत्री, परा त्रिष्टुप्। देवा द्योतमानाः सूर्यरश्मयः। राजन्त इत्यध्याहारः। कीदृशाः। सुकर्माणः शोभनं प्रकाशनादिकं कर्म येषां,

सुरुचः सुदीप्तयः, देवयन्तः देवान् यजमानप्रभृतीनिच्छन्तः कामयमानाः। अयो न जनिमा धमन्तः, नकार उपमार्थीयः, जनिमा जनिमानं जननं व्रीहिप्रभृतीनां धमन्तः प्रकाशयन्तः उत्पादयन्तः। किंवत्। अयो न, यथा लोहकारः शस्त्रं धमति। शुचन्तो अग्निम्, अग्निमिन्धनशोषणद्वारेण दीपयन्तः। ववृधन्त इन्द्रम्, इन्द्रं स्तुतिभिर्वर्धयन्तः। ऊर्वं गव्यं, गोः स्वर्गस्यावयवं परिषदन्तः परिषीदन्तो गच्छन्ति। कीदृशाः। सुकर्माणः। देवत्वं चाऽत्मन इच्छन्तः। जन्म च धमन्तः, कुत्सितं जगद्धमन्तो नित्यनैमित्तिक-कर्मानुष्ठानेन ज्ञानेन च अयोवत्।

**इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः।**
**अभ्राद्वृष्टिरिवाजनि।।**

हे इन्द्राग्नी इयं स्तुतिर्वां युवयोरजनि जाता अस्य मन्मनोऽन्नस्य सकाशात्। कीदृशी। पूर्व्या पूर्वभवा चासौ स्तुतिः पूर्व्यस्तुतिः। कस्मादिवका। अभ्राद्वृष्टिरिव, अन्नाद्धि वाक्प्रवर्तते मेघादिव वृष्टिः।

**शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम्।**
**उभा हि वाँ सुहवा जोहवीमि ता वाजँ सद्य उशते धेष्ठा।।**

हे इन्द्राग्नी नवजातं नवान्नं जुषेथां सेवेथां भक्षयतम्। हे वृत्रहणौ तमसः पापस्य हन्तारौ। कीदृशं नवजातम्। शुचिं मन्त्रपूतं, स्तोमं स्तोमैः स्तुतिभिर्युक्तम्। अद्यास्मिन्नहनि। यतः उभौ वां युवां सुहवौ सुखाह्वानौ सुहोतव्यौ वा, ता तौ तस्माद्वा जोहवीमि आह्वयामि जुहोमि वा। आह्वानमपि हि होमार्थम्। वाजमन्नं सद्योऽचिरात् उशते कामयमानाय धेष्ठा पिवतम्।

**विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुतः।**
**जुषन्तां युज्यं पयः।।**

विश्वे सर्वे देवा जुषन्ताम्। किम्। पयः पायसम्। कीदृशम्। युज्यं युक्तं देवतायोग्यमित्यर्थः। कीदृशा विश्वे देवाः। ऋतावृधः ऋतस्य सत्यस्य यज्ञस्य च वर्धयितारः। कैः। ऋतुभिः। वसन्तादौ हि यज्ञक्रियाः क्रियन्ते, ज्ञानं च। हवनमाह्वानं शृण्वन्तीति हवनश्रुतः। प्राय आह्वानलिङ्गा अनुवाक्या, प्रधानलिङ्गा तु याज्या।

**ये के च ज्मा महिनो अहिमाया दिवो जज्ञिरे अपां सधस्थे।**
**ते अस्मभ्यमिषये विस्वमायुः क्षप उस्रा वरिवस्यन्तु देवाः।।**

हे देवाः विश्वे देवाः, रश्मयः अस्मभ्यं विश्वं सर्वमायुर्वरिवस्यन्तु ददतु इषये इषया स्वरसप्रवृत्तादरेणेत्यर्थः। कीदृशाः। क्षपः क्षपमाणाः, आपदां विनाशका इत्यर्थः। उस्रा उस्राविणो वृष्टिकारिण इत्यर्थः। ये के च ज्मा महिनः, ज्मा पृथिवी, तस्या महिनः पूजकाः उपकारकाः, पृथिव्या अपि वा महान्तः ये केचित्साकल्येनेत्यर्थः। अहिमायाः, रश्मिरूपा हि मेघाः, रश्मय एव यतो मेघरूपा भूत्वा वर्षन्ति, तेन मेघानां स्वरूपेण परिच्छेदकत्वादहिमाया रश्मयः। ये च दिवो जज्ञिरे, स्वर्गादादित्याद्वा तत्स्थत्वात् जाताः। अपां सधस्थे समानस्थाने गगनसमुद्र इत्यर्थः। गगने ह्यवश्यायपातेन सूक्ष्मः समुद्रोऽनुमीयते।

**मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्।**
**पिपृतां नो भरीमभिः।।**

**घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा।**
**द्यावापृथिवी वरुणस्य धर्मणा विष्कम्भिते अजरे भूरिरेतसा।।**

द्यावापृथिवीये याज्यानुवाक्ये। आद्या गायत्री, द्वितीया त्रिष्टुप्। द्यौश्च पृथिवी च नोऽस्माकमिमं यज्ञं मिमिक्षतां सिञ्चतां कामैः पूरयतामित्यर्थः। कीदृश्यौ। मही महत्यौ। पिपृतां च पालयतां च भरीमभिः भरणीयैराभरणीयैः।

द्यावापृथिव्यौ इदं हविर्जुषेतामित्यध्याहारः। कीदृश्यौ। घृतवत्यौ। तथा भुवनानां त्रयाणां लोकानामभिश्रिया आश्रयभूते। उर्वी वितते। पृथ्वी विपुले। मधु पानीयं दुहाते इति मधुदुघे। सुपेशसौ, पेशो रूपं, सुरूपे। तथा वरुणस्य देवस्य सम्बन्धिना धर्मणा धारणेन विष्कम्भिते अवष्टब्धे धारिते 'वरुणस्त्वोत्तभ्नातु' इति मन्त्रः। अजरे अविनाशिन्यौ। भूरिरेतसौ बहुबीजे सर्वस्य तज्जन्यत्वात् उदकं वा रेतो बहूदके।

षड्भिरज्यानीभिर्जुहुयादित्युक्तम्। ता व्याख्यायन्ते षट् ।

**शतायुधाय शतवीर्याय शतोतयेऽभिमातिषाहे।**
**शतं यो नश्शरदोऽनयदिन्द्रो विश्वस्य दुरितस्य पारम्।। १ ।।**

ऐन्द्रः, प्राजापत्यो वा। त्रैष्टुभः। संवत्सरश्चात्र प्रजापतिः। शतशब्द उपलक्षणार्थः, बहून्यपरिच्छिन्नेयत्तान्यायुधानि यस्य स शतायुधः। तस्मै शतायुधायेन्द्राय प्रजापतये जुहोमीति शेषः। शतवीर्याय अपरिमितशक्तये। अवनमूतिः, बहुरक्षणाय,

अभिमातयः, शत्रवः, तान् सहतेऽभिभवतीति अभिमातिषाट्, तस्मै जुहोमि। यश्चेन्द्रः नोऽस्माकं शतं शरदः शतं वर्षाणि नयति दुरितस्य दुष्टस्य इतस्य चेष्टितस्य दुष्कृतस्य कर्मणः पारं समाप्तिं विनाशम्।। १ ।। इत्याज्येनैकर्चम्।।

**इमे चत्वारो रजसो विमाना अन्तरा द्यावापृथिवी वियन्ति पन्थानः।**
**तेषामज्यानिं यतमो न आवहात्तस्मै नो देवाः परिधत्त सर्वे।। २ ।।**

वैश्वदेवीयम्। हे सर्वे देवाः विश्वे देवाः, नोऽस्मभ्यं तस्मै मार्गाय परिधत्त तं मार्गं मह्यं ददत, तत्र प्रवर्तयत। कस्मै मार्गाय। तेषां प्रकृतानां मध्ये यतमः नोऽस्माकमज्यानिमविनाशमावहति प्रापयति मोक्षमित्यर्थः। कश्चासौ। देवमार्ग इत्यर्थात्। यतो बहवः पन्थान इत्याह - यत इमे चत्वारः पन्थानो वियन्ति विविधं गच्छन्ति, अन्तरा द्यावापृथिवी द्यावापृथिव्योर्मध्ये। रजसो विमानाः, रजसो लोकत्रयस्य सम्बन्धिनः विविधपरिमाणाः, अथवा रजसो गतिमन्तो वेगवाहिनो विमाना वाहनानि तत्र सन्ति। अत्र मन्त्रे अज्यानिशब्दयोगात् छत्त्रिवैश्वदेववदाहुतिषट्के अज्यानिशब्दोऽज्यानीर्जुहुयादिति।। २ ।।

**वसन्तो ग्रीष्मो मधुमन्ति वर्षाश्शरद्धेमन्तस्सुविते दधात।**
**तेषां वयं सुमतौ यज्ञियानां ज्योगजीता अहतास्स्याम।। ३ ।।**

वसन्तादयः पञ्च ऋतवः, तेषां विशेषणं मधुमन्तीति स्वादुरसवन्त इत्यर्थः। यद्वा मधुमन्तीत्यनेन शिशिरमुक्तम्, मधुर्वसन्तोऽनन्तरो यस्य स मधुमान्, छान्दसो लिङ्गवचनव्यत्ययः। एते कीर्तिता ऋतवः पञ्च षड्वा अस्मान् सुविते दधात शोभने मार्गे दधतु स्थापयन्तु, वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु शोभनं वीतं गमनं यत्र स सुवितः, छान्दसो ह्रस्वः। तेषामृतूनां सुमतौ शोभनबुद्धौ वर्तमाना वयं ज्योक् चिरकालमजीताः शत्रुभिरपराजिताः अहताश्च स्याम। तेषां कीदृशानाम्। यज्ञियानां, यज्ञमर्हन्तीति यज्ञियाः, 'यज्ञर्त्विग्भ्यां घखञौ' (५.१.७१)।। ३।।

**संवत्सराय परिवत्सरायेदावत्सरायानुवत्सरायोद्वत्सराय कृणुता बृहन्नमः।**
**तेषां वयं सुमतौ यज्ञियानां निवात एषामभये स्याम।। ४ ।।**

संवत्सरादिशब्दैः प्रजापतिरादित्यरूप उच्यते। तस्मै कृणुता बृहन्नमः, तस्मै प्रजापतये बृहन्महन्नमः कृणुता करोमि नमस्कारम्। तेषामेषां संवत्सरादीनां सम्ब-

न्धिनि निवाते अभये मार्गे स्याम। निवातोऽत्यन्तसुखयुक्तो मातृनिवाते वसतीति लोके प्रयोगात्। अभयो दुःखरहितः, मोक्षमार्ग इत्यर्थः।। ४ ।।

**इयँ स्वस्तिस्संवत्सरीया परिवत्सरीयेदावत्सरीयानुवत्सरीयोद्वत्सरीया।**
**सा नः पिपर्त्वहृणीयमानैनाह्नेदमहरशीय स्वाहा।। ५ ।।**

इयं नवान्नप्राप्तिरूपा स्वस्तिः सुखाविनाशात्मिका, संवत्सरे भवा संवत्सरीया, वर्तमानसंवत्सरजा प्राप्ता। सा परिवत्सरीयादिरूपास्माकमस्तु। परि समन्ताद्वत्सरेषु सर्ववत्सरेषु भवा परिवत्सरीया। इदिति निपातश्चार्थे। आवत्सरः शतपूरण आयुषोऽवधिभूतः। अनुवत्सरोऽनन्तरभावी द्वितीयः। उद्वत्सर उत्कर्षयुक्त उत्सवाद्युपलक्षितः। सा नः पिपर्तु, सा स्वस्तिः नोऽस्मान् पिपर्तु प्रीणातु पूरयतु। अहृणीयमाना अलज्जमाना, श्लाघमानेत्यर्थः। एना अह्ना इदमहरशीय, अनेन वर्तमानेनाग्रायणोत्स वोपलक्षितेनेदं द्वितीयादिकं वर्षशतान्तमहः अशीय व्याप्नुयां, वर्तमानादिवससदृशाः सर्वे दिवसाः सुन्दराः सन्त्वित्यर्थः। स्वाहा सुहुतमस्तु।। ५।।

**आ नः प्रजां जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः।**
**संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु।। ६ ।।**

नोऽस्माकं प्रजापतिः प्रजामाजनयतु, धाता च प्रजामाजनयतु, संवत्सरश्च मयि पुष्टिं दधातु करोतु। स हि पुष्टिपतिः। किं कुर्वन्। ऋतुभिश्चाक्लृपानः, ऋतुभिः प्रयोज्यकर्तृभिः ऋतुफलानि कल्पयन् संपादयन्।। ६ ।।

एवमज्यानीः षट् हुत्वा हुतं स्विष्टकृतमग्निमनुमन्त्रयते -

**अग्निः प्राश्नातु प्रथमस्स हि वेद यथा हविः।**
**शिवा अस्मभ्यमोषधीः करोतु विश्वचर्षणिः।।**

इदं नवान्नं प्रथममग्निः स्विष्टकृत्प्राश्नातु। स हि वेद जानाति यथा हविः हविषो यथास्वरूपं, प्राश्य चास्मभ्यमस्मदर्थं शिवाः सुखकारिणीः व्रीह्यादिका ओषधीः करोतु। कीदृशः। विश्वचर्षणिः। विश्वस्य सर्वस्य द्रष्टा।

अथ यजमानः प्राश्नाति नवव्रीहिम्। अस्य चेराभागस्य यजमानभागसंज्ञा। अत्र चेरावसरे 'वत्सः प्रथमजो दक्षिणा' इति श्रुतिः।

**भद्रान्नश्श्रेयस्समनैष्ट देवास्त्वयावसेन समशीमहि त्वा।**

**स नः पितो मधुमाँ आविशेह शिवस्तोकाय तन्वे न एधि।।**

त्रिष्टुप्। हे देवाः, नोऽस्माकं भद्राच्छ्रेयः समनैष्ट, भद्रादप्युत्कृष्टादपि श्रेयो भद्रतरं समनैष्ट सम्यक् प्रापयत। नवव्रीहे, त्वयावसेन भुक्तेन सम्यगशीमहि प्राप्नुयाम त्वां, निरन्तरमविच्छिन्नं त्वमस्माकं भवेत्यर्थः। हे पितो अन्न, मधुमन्मधुरस, स त्वं नोऽस्मान् आविश शरीराभ्यन्तरं प्रविश, इह च शरीरे आविष्टः सन् शिवः सुखकरः तोकाय पुत्राय एधि भव तन्वे तन्वर्थं शरीरहितायेत्यर्थः।

नवयवानश्नाति -

**एतमुत्यं मधुना संयुतं यवँ सरस्वत्या अधि माना अचकृषुः।**

**इन्द्र आसीत्सीरपतिश्शतक्रतुः कीनाशा आसन्मरुतस्सुदानवः।।**

एतं यवं यमश्नाति तं देवा अचकृषुः कृतवन्तः उत्पादितवन्तः सर्गादौ। उत्यमुप्तमुत्तमं वा। मधुना मधुरसेन युक्तम्। कदा। सरस्वत्या उत्तमाया वाचः आधिराज्ये सति। पृथिवी सरस्वती सरो जलमस्या अस्तीति कृत्वा। तत्रेन्द्रः सीरपतिर्हलपतिरासीत्, शतक्रतुर्बहुकर्मा प्रजापतिः, मरुतस्तु कीनाशा बलीवर्दा आसन् संजाताः। सुदानवः शोभनदातारः।। ५ ।।

**।। इत्याग्रायणम्।। १ ।।**

**।। इति त्रिपञ्चाशी काण्डिका।। ५३ ।।**



## ।। अथ चतुष्पञ्चाशी काण्डिका।।

अथ वैश्वदेवः -

**वैश्वदेवस्य।। १ ।।**

वैश्वदेवस्य कर्तव्यतां वक्ष्याम इत्यध्याहारः। विश्वेभ्यो देवेभ्यः स्वाहेति वैश्वदेवसम्भवाच्छत्रिन्यायेन कर्मसमूहे वैश्वदेवशब्दप्रवृत्तिः। अथवा विश्वे च ते देवा अग्न्यादयो विश्वे देवाः विश्वे देवा देवता अत्रेति वैश्वदेवः। अत्राप्यौपसदेऽग्नावित्यनुवर्तते। देवादावौपसदाभावे लौकिकेऽपि भवति सर्वत्रार्यदेशे सदाचारादवैश्वदेवभोजननिषेधाच्च स्मृतिषु। प्रतिदिनं हि पञ्चयज्ञानुष्ठानं गृहस्थस्य विहितम्। पञ्च यज्ञाः पुनर्वक्ष्यन्ते - प्रथमं देवयज्ञः, द्वितीयं पितृयज्ञः, तृतीयं भूतयज्ञः, चतुर्थं मनुष्ययज्ञः, पञ्चमं ब्रह्मयज्ञः, - इति। यदग्नौ जुहोत्यपि समिधस्तद्देवयज्ञः संतिष्ठते। यत्पितृभ्यः स्वधाकरोत्यद्भिस्तत्पितृयज्ञः सन्तिष्ठते। यद्भूतेभ्यो बलिं ददाति, तद्भूतयज्ञः संतिष्ठते। यद्ब्राह्मणेभ्योऽन्नं ददाति, तन्मनुष्ययज्ञः संतिष्ठते। यत्स्वाध्यायमधीते, तद्ब्रह्मयज्ञः संतिष्ठते। औपसदेऽग्नौ सायंप्रातरपि वैश्वदेवं कुर्यादित्यपि व्याचक्षते।। १ ।।

**सिद्धस्य सर्वतोऽग्र्यस्य जुहोति।। २ ।।**

भोजनाद्यर्थत्वेन सिद्धस्य, न तु साध्यस्यान्नस्य सतः, सर्वतः सर्वस्मात् अंशमुद्धृत्य, नतु हविष्यादेव व्रीह्यादेः, अग्र्यस्याग्रे प्रथमं जुहुयात्, ततो ब्राह्मणादिकं भोजयेत् वेदवद्वेदविदां वचांसि सम्भवन्तीति स्मरणात्। अग्र्यस्येति सप्तम्यर्थे व्यत्ययेन षष्ठी। अन्ये व्याचक्षते - अग्र्यस्य प्रधानस्य व्रीह्यादेर्भूयांसमंशं गृह्णीयादिति अग्र्यग्रहणेन दर्शितं सर्वग्रहणेनोपात्तस्य पुनरग्र्यग्रहणेन भूयस्त्वार्थमुपादानात्। अन्यस्मात्तु सर्वतस्तावन्मात्रमुद्धर्तव्यम्। ये त्वौपसदे सायंप्रातर्जागरणार्थं वैश्वदेवं वदन्ति, त एवं व्याचक्षते - सर्वस्माद्गृहस्थिताद्यद्ग्र्यमुत्कृष्टं सिद्धमप्रयासेन यवव्रीहितण्डुलादीनामन्यतमं, तस्यांशेन जुहुयात्, न त्वभिनिवेशं कुर्यादमुनैवेति।। २ ।।

तान्होमान्दर्शयति -

**अग्नये सोमाय मित्राय वरुणायेन्द्राय इन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यः प्रजापतयेऽनुमत्यै धन्वन्तरये वास्तोष्पतयेऽग्नये स्विष्टकृते चेति।। ३ ।।**

अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य परिस्तीर्य हविरभिघार्य नानभिघृतं हविरस्तीति श्रुतेरेता द्वादशाहुतीर्जुहुयात्। केचिदाहुः अग्नये सोमायेति स्विष्टकृतः प्रागाज्यभागान्तं लक्षयतीति। तच्च सायंप्रातिकं प्रायेणात्रार्येष्टदर्शनात्। चतुर्थीनिर्देशात्स्वाहाकारान्तान्दर्शयति। स्वाहाशब्दो निपातः सम्प्रदानत्वं द्योतयति।। ३ ।।

**तक्षोपतक्षाभ्यामित्यभितः पूर्वेणाग्निम्।।४।।**

जुहोतीत्यनुषज्यते। चतुर्थीनिर्देशात्सम्प्रदानार्थीयो नमःशब्दोऽत्र सदाचाराद् गम्यते। तक्षाय नमः, उपतक्षाय नम इत्युभयस्यां दिशि अभितः अग्नेः पूर्वेण प्रदक्षिणं कृत्वा, प्रथमं पूर्वोत्तरकोणे, ततः पूर्वदक्षिणकोणे।। ४ ।।

**अम्बा नामासीति सप्त।। ५।।**

पूर्वोणाग्निमित्यनुषज्यते। अम्बा नामासि, तस्यै ते नमः। दुला नामासि, तस्यै ते नमः। नित्यन्ती नामासि, तस्यै ते नमः। चुपणीका नामासि, तस्यै ते नमः। अभ्रयन्ती नामासि, तस्यै ते नमः। मेघयन्ती नामासि, तस्यै ते नमः। वर्षयन्ती नामासि, तस्यै ते नमः।। ५ ।।

**गृह्याभ्यो नन्दिनि सुभगे सुमङ्गलि भद्रङ्करीति स्रक्तिष्वभिदक्षिणम्।।**

गृहेभ्यो हिता गृह्याः देवता गृहेषु भवा वा। अग्नेरित्यनुवर्तते। स्रक्तिषु कोणेषु अग्नेरेताश्चतस्र आहुतीर्जुहुयात्। अभिदक्षिणं प्रदक्षिणं यथा भवति पूर्वदक्षिणकोणादारभ्य। अपरे गृह्यस्रक्तिष्विति व्याचक्षते। तत्र च प्रचुरप्रयोगदर्शनं शरणम्। नन्दिनि तुभ्यं नम इत्यादिप्रयोगोऽनुमन्तव्यः प्रदानार्थत्वादाह्वानस्य।। ६ ।।

**स्थूणायां ध्रुवायां श्रियै हिरण्यकेश्यै वनस्पतिभ्यश्चेति।। ७ ।।**

गृह्याभ्य इत्यादि यथायोग्यतं सर्वत्रानुवर्तनीयम्। ध्रुवासीति मन्त्रेण वास्तोष्पतीयकर्मणि दर्शितेन या स्थूणा संस्कृता प्रधानभूता गृहमध्ये, तस्यां हिरण्यकेश्यै नमो वनस्पतिभ्यो नम इति बलिद्वयमुपहरेदिति केचित्। अन्ये तु यथासंख्यं (संख्येऽव्यभिचारं) व्यभिचारं मन्यमानाः स्थूणायामधिकरणभूतायां वनस्पतिभ्यो जुहुयात्, ध्रुवायां स्थाल्यां च हिरण्यकेश्यै नम इति व्याचक्षते। गृहदेवतानां चामी होमाः।। ७ ।।

**धर्माधर्मयोर्द्वारे।। ८ ।।**

धर्माय नमः, अधर्माय नम इति गृहद्वारमध्ये आहुती जुहुयात्।। ८ ।।

**मृत्यवे चोदधाने।। ९ ।।**

मृत्यवे नम इति जलपात्रे घटादिके जुहुयात्। 'उदकस्योदः संज्ञायाम्' (६.३.५७) इत्युदधानशब्द उदधिवत्।। ९ ।।

**वरुणाय विष्णव इत्युलूखले।। १० ।।**

वरुणाय नमो विष्णवे नम इति हन्त्यधिकरणे बलिद्वयमुपहरेत्। आहुति-भणितिरप्यस्ति वैश्वदेवहोमवत्।। १० ।।

**मरुद्भ्य इति दृषदि।। ११ ।।**

मरुद्भ्यो नम इति पिष्ट्यधिकरणे बलिमुपहरेत्।। ११ ।।

**उपरि शरणे वैश्रवणाय राज्ञे भूतेभ्यश्चेति।। १२ ।।**

वैश्रवणाय राज्ञे नमः, भूतेभ्यो नम इति गृहस्योपरि बलिमुपहरेत्।। १२ ।।

**इन्द्राय नम इन्द्रपुरुषेभ्यो नम इति पूर्वार्धे।। १३ ।।**

**यमाय नमो यमपुरुषेभ्यो नम इति दक्षिणार्धे।। १४ ।।**

**वरुणाय नमो वरुणपुरुषेभ्यो नम इति पश्चार्धे।। १५ ।।**

**सोमाय नमः सोमपुरुषेभ्यो नम इत्युत्तरार्धे।। १६ ।।**

**ब्रह्मणे नमः ब्रह्मपुरुषेभ्यो नम इति मध्ये।। १७ ।।**

गहस्याग्रेर्वा।। १७ ।।

**ऊर्ध्वमाकाशाय।। १८ ।।**

आकाशाय नम इत्यूर्ध्वं बलिमुपहरेत्।। १८ ।।

**स्थण्डिले दिवाचरेभ्यो भूतेभ्य इति दिवा।। १९ ।।**

दिवाचरेभ्यो भूतेभ्य इति स्थण्डिले शुचिभूभागे दिवा बलिमुपहरेत्।।

**नक्तञ्चरेभ्यो भूतेभ्य इति नक्तम्।। २० ।।**

स्थण्डिल इत्यनुषज्यते। अत्र दिवा वैश्वदेवे क्रियमाणे दिवाचरेभ्यो भूतेभ्यो

बलिमुपहरेत्, रात्रौ तु नक्तञ्चरेभ्यो भूतेभ्य इति केचिद्व्याचक्षते। प्रयोगस्तु ईदृशः - दिवापि वैश्वदेवं कुर्वाणाः कल्पयित्वा नक्तञ्चरेभ्यो भूतेभ्योऽपि स्थापयन्ति रात्रौ त्याजयन्ति। रात्रौ तु वैश्वदेवो नोचितः। तत्रावश्यकर्तव्यक्रियमाणस्य किंचिद्वैकल्यमभ्युपनतमेव एकान्तपराजयाद्वरं संदेह इति नयेन।। २० ।।

**शेषं पितृभ्यः पिण्डान्निदधाति ।। २१ ।।**

शिष्यत इति शेषः प्रदर्शिताहुतिबलिभ्यो मुच्यमानः। तं पिण्डीकृत्य पितृपितामहप्रपितामहेभ्यो मातृपितामहीप्रपितामहीभ्यश्च ददाति।। २१ ।।

**उदकलशमुपनिधाय स्वस्त्ययनं वाचयति।। २२ ।।**

अग्नेरात्मनश्च समीपे जलकलशं स्थापयित्वा स्वस्त्ययनं वक्ति बोधश्च मेत्याद्यनुवाकम्। वाचयतीति स्वार्थे णिच् रामो राज्यमकारयदित्यादिवत्। अनुवाको व्याख्यातः। चौरादिको वात्र वचिः। स्वस्ति अविनाश ईयते प्राप्यते येन, तत्स्वस्त्ययनम्। अत एवान्यदपि पुरुषसूक्तकनिक्रदत्प्रभृति वक्तव्यम्।। २२ ।।

**।। इति वैश्वदेवम्।।**

**।। इति चतुष्पञ्चाशी काण्डिका।। ५४ ।।**



## ।। अथ पञ्चपञ्चाशी कण्डिका।।

**अथार्तवस्वस्त्ययनानि।। १ ।।**

अथेत्यानन्तर्ये। ऋतौ ऋतौ भवान्यार्तवानि कर्माणि वक्ष्यामः। स्वस्ति अविनाश ईयते प्राप्यते यैस्तानि स्वस्त्ययनानि। तानि कतिचिन्नित्यान्यपि श्रावण्यादीनि, तेषामकरणे कालचोदितानामिति प्रतिकृतिर्भवति। कपोतनिलयशान्त्यादीनि स्वस्त्ययनान्येव।। १ ।।

**श्रावण्यां चत्वारि हवींष्यासादयेदपूपं स्थालीपाकं धानाः सक्तूनुभयमक्षतानाम्।। २।।**

चतस्रः पौर्णमास्यः - श्रावणी, आश्वयुजी, आग्रहायणी, फाल्गुनी। श्रवणेन युक्ता पौर्णमासी श्रावणी। तस्यां चत्वारि हवींष्यावापस्थाने निरुप्यासादयेदपूपादीनि। तत्र अपूपो व्रीहिमयो घृतपक्वः, यवमयस्तु तैलपक्वः फाल्गुन्यां तैलपक्वस्य जुहोतीति लिङ्गात्। चतुर्ष्वपि मान्त्रवर्णिक्यः, अपूपे विष्णुः, चरौ रात्र्यः, धानासु सक्तुषु च सर्पाः। उभयं धानाः सक्तवश्च अक्षतानामनवहतानां यवानाम्। इष्टिविकारत्वादाज्यभागान्तं पूर्वार्धान्मद्याच्चावदाय प्रधानानुष्ठानं सर्वम्। जुहोतिना चोदितः स्वाहाकारः।।

**वषट्ते विष्ण इत्यपूपस्य जुहोति रात्री व्यख्यदिति स्थालीपाकस्य नमो अस्तु सर्पेभ्य इति धानानां ये वाद इति सक्तूनाम्।। ३ ।।**

मन्त्रचतुष्टयस्य प्रतीकेनापूपादिहोमेषु विनियोगोऽनेन भणितः।। ३ ।।

**येषु वा यातुधाना इति दर्व्यावटेषु सक्तूनाम्।। ४ ।।**

अवटेषु गर्तेषु। दर्व्या, न तु स्रुचा। 'येषु वेति' मन्त्रेण होमः। अभिघारः सर्वत्र ज्ञेयः, नानभिघृतं हविरस्तीति सक्तूनाम्।। ४ ।।

**उभयत्राखुराजाय बलिं हरेदाद्यन्तयोर्वा।। ५ ।।**

उभयत्रेति औपसदहोमे अवटहोमे च। अन्ये त्वाहुः – उभयत्रेत्यत्र सायंप्रातर्होमकालो लक्ष्यते। यदुक्तं दिवाचरेभ्यो भूतेभ्यो दिवा, नक्तञ्चरेभ्यो नक्तमिति

वैश्वदेवबलिहरणम्, तत्र स्थाने सक्तुबलिरनेनोच्यते चातुर्मासिको गृह्यान्तरे तथादर्शनात्। सावित्रेण च देवस्य त्वेत्यादिना आखुराजाय बलिमुपहरामीत्यन्तेनैष बल्युपहारः। आद्यन्तयोर्वेति श्रावणीफाल्गुन्योरिति केचित्। आद्यन्तयोर्हविषोरपूपसंक्तुलक्षणयोराखुराजाय बलिं हरेदिति त्वन्ये।

**वषट् ते विष्ण आस आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्।**
**वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः।।**

वैष्ववी। त्रिष्टुप्। देवपुत्राणामार्षम्। हे विष्णो व्यापक, हे शिपिविष्ट शिपयो रश्मयः शक्तयो वा जगतां निर्मात्र्यस्ताभिराविष्टो व्याप्तः शिपिविष्टस्तस्य सम्बोधनं हे शिपिविष्ट विष्णो अहं ते तव वषट् आकृणोमि वषडन्तेन मन्त्रेण हविर्ददामीत्यर्थः। क्व। आसे छान्दसो वर्णलोपः आस्ये अग्नौ। अग्निरेव हि सर्वदेवानां मुखं, तेनैव हि देवाः सुहवींषि भुञ्जते। तद्धव्यं हविः मे मम सम्बन्धि जुषस्व भुङ्क्ष्व। किंच मम संबन्धिन्यो गिरो वाचो मन्त्रात्मिकाः सुष्टुतयः शोभनस्तुतिरूपास्त्वां वर्धयन्तु। यूयमिति पूजायां बहुवचनं, व्यत्ययेन वा। त्वं च स्तुतिभिर्वर्धितो हविषा च प्रमोदितो नोऽस्मान्पाहि रक्ष सदा सर्वकालम्।

**रात्री व्यख्यदायती पुरुत्रा देव्यक्षिभिः।**
**विश्वा अधिश्रियोऽधित।।**

गायत्री। रात्रिर्देवता। देवपुत्राणामार्षम्। रात्री रजनी आगच्छन्ती व्यख्यत् 'ख्या प्रकथने' विविधं प्रकाशं करोति। कैः। अक्षिभिश्चन्द्रादिभिः। देवी द्योतमाना। पुरूणि बहूनि त्रायते इति पुरुत्रा। किंच विश्वाः सर्वा अधिश्रियः अधिकशोभा अधित आधत्ते।

**नमो अस्तु सर्पेभ्यो ये के च पृथिव्यामधि।**
**ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः।।**

काण्डपतितस्य सर्पराजस्यार्षम्। सर्पेभ्यो नमो अस्तु कायवाङ्मनोभिः प्रणतिर्भवतु। केभ्यः। ये के च पृथिव्यामधि, क्षितेरुपरि, तथा येऽन्तरिक्षे दिवि च स्थितास्तेभ्यः सर्पेभ्यो नमः।

**ये वादो रोचने दिवो ये वा सूर्यस्य रश्मिषु।**
**येऽप्सु सदांसि चक्रिरे तेभ्यः सर्पेभ्यो नमः।।**

ये दिवो द्युलोकस्य रोचने द्योतने प्रकाशने स्थिताः वादो वादयितारः स्तनयित्नुकारिणः, ये च सूर्यस्य रश्मिषु स्थित्वा वर्षन्ति नागाः, ये चाप्सु सदांसि गृहाणि कृतवन्तः, तेभ्यः सर्पेभ्यो नमः।

**येषु वा यातुधाना ये वा वनस्पतीरनु।**
**येऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः।।**

वाशब्दश्चार्थे। येषु वा यातुधाना राक्षसाः स्थिताः तेन दष्टस्योन्मत्तस्य दर्शनात्, ये च वनस्पतीर्ल्लक्षणीकृत्य अवस्थिताः, ये चावटेषु बिलेषु शेरते तिष्ठन्ति, तेभ्यः सर्पेभ्यो नमः।। सावित्रो व्याख्यातः।

**।। इति पञ्चपञ्चाशी काण्डिका।। ५५ ।।**



## ।। अथ षट्पञ्चाशी काण्डिका ।।

श्रावणी -

**आयूतिके कपोते भयार्ते सक्तुषु भस्मनि वा पदं दृष्ट्वा देवाः कपोत इत्यष्टर्चेन स्थालीपाकस्य जुहोति।। १ ।।**

प्रायेण वर्षासु कपोताः प्रोद्भवन्तीति श्रावणीप्रसङ्गेन कपोतनिलयशान्तिरुदिता। यूतिः सङ्घस्तत्प्रतिषेधेनायूतिः सङ्घवियोगोऽभिप्रेतः। अयूतौ भव आयूतिकः। सदा यः सङ्घचारी कपोतः, स दैवाच्छ्येनादिना वा आगूर्य वियोजितो भीतो यदा गृहं प्रविशति, तदेयं शान्तिरुच्यते, न तु केवलचारिणि दृष्टे निर्भये गृहदेवकुलादिनिवासिनि ग्रामकपोते तादृशे। आयूतिकं कपोतं गृहसम्बद्धं भयार्तं दृष्ट्वा गृहपतिः स्थालीपाकस्य जुहुयात् 'देवाः कपोत' इत्यादिभिरष्टाभिर्ऋग्भिः। यदाऽपि स्वरूपेण कपोतं न पश्यति, किं तर्हि, गृहाभ्यन्तरे भस्मनि सक्तुषु वा कपोतचरणप्रतिबिम्बमवलोकयति, तदाऽपि जुहुयात्। यमदूतो हि कपोतः तं प्रत्यक्षेणानुमानेन वा कृतसन्निधानं गृहे बुद्ध्वा महतोऽरिष्टस्य शान्तये स्वस्त्ययनं कुर्यात्। क्वचिदायूथिकः सुस्पष्टः।। १ ।।

**परीमे गामनेषतेति गां परिणयन्ति सा दक्षिणा।। २ ।।**

परीमे गामित्यादिमन्त्रजातेन गां परिणयन्ति, सैव दक्षिणा। परिणयन्तीति बहुवचनेन गृहपतिव्यतिरिक्तस्यान्यस्यापि अत्र कर्तृत्वं दर्शयति। परिणयो विवाहः। अत्रापीष्टिविकारत्वादाज्यभागान्तं कृत्वा स्थालीपाकहोमः।। २ ।।

**देवाः कपोत इषितो यदिच्छन्दूतो निर्ऋत्या इदमाजगाम।**
**तस्मा अर्चामकृणुवाम निष्कृतिं शं नो भव द्विपदे चतुष्पदे।।**

ऋषिः प्रचेता आङ्गिरसः वैश्वदेवः, नैर्ऋतः कपोतो देवता, चतस्रस्त्रिष्टुभः, पञ्चमी गायत्री षष्ठी च, ततोऽनुष्टुभौ। हे देवा अयं कपोतो निर्ऋत्या दानवमातुर्दूत इषितः प्रेषितः सन् इदमस्मद्भवनं यत्किञ्चिदशुभमिच्छन्नागतः, तस्मै अशुभाय तस्य निवृत्तयेऽर्चां पूजां शान्तिमकृणुवाम कुर्मः। कीदृशीमर्चाम्। निष्कृतिं निष्कर्तनं

निःशेषेण च्छेदनं निष्कृतिस्ताम्। अतो हे कपोत शं सुखं द्विपदे मानुषरूपे चतुष्पदे गवाश्वादिके भव, शुभं सर्वत्र द्योतयेत्यर्थः, अथवा शुभं भवतु इति पुरुषव्यत्ययः।।

**शिवः कपोत इषितो नो अस्त्वनागा देवाः शकुनो गृहेषु।**
**अग्निर्हि विप्रो जुषतां हविर्नः परि हेतिः पक्षिणी नो वृणक्तु।।**

हे देवाः कपोतोऽस्माकं शिवः श्रेयस्करो भवतु इषितः प्रेषितः यमेन। अनागाः आगोऽपराधः निरपराधः अपराधमस्माकं मा कार्षीदित्यर्थः। शकुनः शकुनिः पक्षी, शकुनं वा विद्यते यस्य स शकुनः अमङ्गलभूतोऽपि मङ्गलभूतोऽस्मद्गृहेषु स्वस्त्ययनबलाद्भवत्वित्यर्थः। अग्निश्चास्मदीयं हविर्जुषतां सेवताम्। कीदृशः। विप्रः 'प्रा-पूरणे' विविधैः कामैः पूरयति यजमानमिति विप्रः। किंच हेतिरायुधं यमस्य संबन्धि नोऽस्मान् परिवृणक्तु परिवर्जयतु दूरेण। कीदृशी हेतिः। पक्षिणी पक्षयुक्ता कपोतात्मिका।। २ ।।

**हेतिः पक्षिणी न दभात्यस्मानाष्ट्र्यां पदं कृणुतामग्निधाने।**
**शं नो गोभ्यश्च पुरुषेभ्यो अस्तु मा नो हिंसीदिति देवाः कपोतः।। ३ ।।**

अस्मान्स्वस्त्ययनं कुर्वतो हेतिः पक्षवती न दभाति हिनस्ति, अतश्चाष्ट्र्यां पदं कुरुताम्, अश्नोति व्याप्नोति समन्तादस्मान् स अष्टा शत्रुस्तस्येयं वसतिराष्ट्री, तस्यां पदं कृणुतां करोतु। क्व। अग्निधाने। अस्मच्छत्रोः स्वस्त्ययनेन निराकृतस्याधर्मादेरग्न्याधानं गृहे वर्तते तत्र दह्यत इत्यर्थः। अतश्चास्माकं गवार्थं पुरुषार्थं च श्रेयोऽस्तु। हे देवाः कपोतोऽस्मान् मा हिंसीन्मा वधीत्।। ३ ।।

**यदुलूको वदति मोघमेतद्यत्कपोतः पादमग्नौ कृणोति।**
**यस्य दूतः प्रहित एष एति तस्मै यमाय नमो अस्तु मृत्यवे।।**

उलूको यद्वदत्यशुभं पूरयति तन्मोघं निष्फलमस्तु, यदपि च कपोतः पदमग्न्याधाने चुल्ल्यादौ करोति प्रत्यधिष्ठापयति सक्त्वादिषु वा, तदपि मोघं निष्फलमस्तु। यस्य च सम्बन्ध्येव दूतः प्रहितः सन्नेत्यागच्छति, तस्मै मृत्यवे नमोऽस्तु।। ४ ।।

**नुदे त्वा प्रणुदे त्वा कपोतोलूक रक्षसा सह।**
**यतो न इहागहि तत्र त्वा पुनर्गमयामसि।। ५ ।।**

हे उलूक कपोतापरपर्याय, तव नैर्ऋतत्वात् रक्षांसि सहायाः, अतो रक्षसा

सह त्वामहं नुदे अपसारयामि, प्रणुदे च त्वां नुन्नमपि प्रकर्षेण नुदामि दूरं प्रक्षिप्य दूरतरं प्रक्षिपामि इत्यर्थः। यतो यमगृहादस्मद्गृहं त्वमागहि आगच्छसि, तत्रैव पुनस्त्वामहं प्रापयामि।। ५ ।।

**ऋचा कपोतं नुदत प्रणोदमिषं नयन्तः परि गां नयध्वम्।**
**संयोपयन्तो दुरितानि विश्वा हित्वा न ऊर्जं प्रपतत्पतिष्ठाः।।**

हे अस्मत्सहाया ऋत्विजः, कपोतं नुदत अपसारयत प्रणोदं प्रणुद्य प्रणुद्य प्रणोदं, 'आभीक्ष्ण्ये णमुल्' (३.४.२२)। किं कुर्वन्तः। ऋचा इषं नयन्तः, इषमन्नं हविर्नयन्तः देवभ्यः प्रापयन्तः प्रयच्छन्तः ऋचा मन्त्रेण। किंच, परि गां नयध्वं, गां च परिणयत। संयोपयन्तो दुरितानि विश्वा, संयोपयतिः संमोहने वर्तने च, 'ते दिशोऽयोपयन्यद्दिशोऽयोपयत्तद्यूपस्य यूपत्वम्' इति श्रुतेः, विश्वा विश्वानि सर्वाणि दुरितान्युपद्रवकारीणि संयोपयन्तः संमोहयन्तो विनाशयन्तः। हित्वा न ऊर्जं प्रपतत्पतिष्ठाः, नोऽस्माकं संबन्धि ऊर्जं बलमन्नं च हित्वा त्यक्त्वा प्रपतत् प्रपततु पलायतां प्रकृतः कपोतः। स हि पतिष्ठः, अतिशयेन पतिता गन्ता पतिष्ठः 'तुरिष्ठेमेयस्सु' इति तृ शब्दस्य लोपः। अस्मादेव मन्त्रलिङ्गात्स्थालीपाकहविर्गोपरिणयश्च ज्ञायते।। ६ ।।

**पराङेव परावत पराचीरनुसंपतन्।**
**अथो यमस्य त्वा गृहे आभूतं परिचाकशत्।। ७ ।।**

हे कपोत पराङेव पराङ्मुख एवास्मानवेक्षमाणः परावत गच्छ। पराचीरनुसंपतन्, पराङ्मुखीर्दिशो हेतीश्चानुसंपतन् सम्यगनुवर्तमानः। अथोऽनन्तरं यमस्य गृहे आभूतमाभवन्तमाविर्भवन्तं त्वां परिचाकशत् आभिमुख्येन पश्यतु यमपरिवारः।।

**अग्निर्ऋषिः पवमानः पञ्चजन्यः पुरोहितः।**
**तमीमहे महागयम्।। ८ ।।**

अग्निर्ऋषिः सर्वस्य ज्ञाता। पवमानः सर्वस्य पवित्रीकारेण। पञ्चजन्यः पञ्चभ्यो जनेभ्यो हितः, पञ्च जनाः प्राणादयो वायवः, अथवा चत्वारो वर्णाः, अनुलोमप्रतिलोमजवर्णश्च पञ्चमः। पुरोहितः पुरोऽग्रे परलोके हितः। तमग्निं वयमीमहे याचयामहे कपोतभयापनुत्तिमत् महागयं बृहद्गृहम्। लोकत्रयं हि वह्नेर्गृहम्।। ८ ।।

**परीमे गामनेषत पर्यग्निमहृषत।**

**देवेष्वकृत श्रवः क इमाँ आदधर्षति।।**

अग्निं परिहृतवन्तः वह्निं परि समन्ताद्विहृतवन्तः, अथवा बुभुक्षितमग्निं पूजया परिहृतवन्तः तृप्तं सन्तं पराङ्मुखीकृतवन्तः। सुष्ठु तृप्तो हि भोजनपराङ्मुखो भवति। यतो देवेष्वकृत श्रवः, श्रवोऽन्नं हविः देवेष्वकृत आभिमुख्येन दत्तवन्तः।।

**।। इति कपोतनिलयशान्तिः।।**

**।। इति षट्पञ्चाशी काण्डिका।। ५६ ।।**



## ।। अथ सप्तपञ्चाशी काण्डिका।।

**आश्वयुज्यामश्वान्महयन्ति सर्वाणि च वाहनानि।। १ ।।**

अश्वयुजा नक्षत्रेण युक्ता पौर्णमासी आश्वयुजी, तस्यां नृपतिप्रभृतीनामश्वाद्य-धिपतीनामश्वादिस्वस्त्ययनमिदं कर्तव्यमुच्यते। अश्वान्महयन्ति पूजयन्ति, स्नाना-नुलेपनालङ्कारप्रभृतिभिः श्रृङ्गारयन्ति, सर्वाणि च करिकरभखरप्रभृतीनि वाहनानि यथासंभवं महयन्ति।। १ ।।

**उत्तरतो ग्रामस्य वेद्याकृतिं कृत्वा शाखाभिः परिवार्याहतैश्च वासोभिः सर्वरसैर्घटान्पूरयित्वा दिक्षु निदध्यात्सर्वबीजैश्च पात्राण्यवान्तरदिक्षु।। २।।**

ग्रामस्य या उत्तरा दिक्, तत्रेष्टिविकारत्वादिष्टिवेदिसदृशीं चतुरस्रां वेदिं कृत्वा, तां च शाखाभिरहतैश्च वासोभिः परिवार्य, सर्वरसैर्मधुरादिभिरिक्षुरसप्रभृति-भिर्घटान् पूरयित्वा पूर्वादिषु चतुसृषु दिक्षु निदध्यात् स्थापयेत्, सर्वैश्च व्रीह्यादि-बीजैः पात्राणि पूरयित्वा विदिक्षु पूर्वोत्तरादिषु निदध्यात्।। २ ।।

**तमपरेण यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा तिस्रो देवता यजेत वरुणमग्निमश्विनावाश्वयुजीं च।। ३ ।।**

तस्य रचितोपचारस्यापरभागे यथोक्तमाज्यभागान्तं हुत्वा जयप्रभृतिभिश्च राष्ट्रभृदन्तैर्हुत्वा तिस्रो देवता यजेत नामधेयेन तद्देवतया वा ऋचा। कास्तास्तिस्रः अग्निं वरुणमश्विनाविति। आश्वयुजीं च चतुर्थीं, तां तु नामधेयेनैव आश्वयुज्यै स्वाहेति तल्लिङ्गमन्त्राभावात्। आज्यमत्र हविः।। ३ ।।

**इज्यमानेऽश्वान्योजयन्ति सर्वाणि च वाहनानि।। ४ ।।**

यागे क्रियमाणेऽश्वादीन्योजयन्ति पर्याणालङ्कारादिना।। ४ ।।

**प्रदक्षिणं देवयजनं कवचिनस्त्रिः परियन्ति।। ५ ।।**

देवजयनं यागस्थानं वेदिस्तस्याः परिहितकवचाः करितुरगप्रभृतयः प्रदक्षिणं भ्रमणत्रयं कुर्वन्ति।। ५ ।।

**प्रहर्षाः कुर्वन्ति।। ६ ।।**

प्रहृष्टाः सन्तो घातादिकं कुर्वन्ति।। ६ ।।

**इष्टे यथार्थं सम्प्रयान्ति।। ७ ।।**

इष्टे यागे निर्वर्तिते सति यथार्थं यथाप्रयोजनं सम्यक् प्रहृष्टाः यान्ति। यो यत्राधिकृतः, स तं स्थानविशेषमनुसरतीत्यर्थः।। ७ ।।

**गौर्वासः कंसो हिरण्यं च दक्षिणा ।। ८ ।।**

समस्तं च गवादि दक्षिणा।। ८ ।।

**रसा बीजानि वासांसि।। ९ ।।**

दक्षिणेत्यनुषज्यते। रसा ये घटेषु कल्पिताः, बीजानि च पात्रेषु, वासांसि वेदिवरणानि, तानि सर्वाण्येव दक्षिणा। उपयुक्तानां दक्षिणया प्रतिपत्तिः कर्तव्येत्यर्थः।।

**।। इति सप्तपञ्चाशी काण्डिका।। ५७ ।।**



## ।। अथ अष्टपञ्चाशी काण्डिका ।।

अस्यामेवाश्वयुज्यां गोमतां स्वस्त्ययनमाह -

**अथ गोमतां विधिः।। १ ।।**

'उपसृष्टा गावो वसन्ति' (७) इति लिङ्गात् सर्वमेतत्कर्म गोस्वामिनामुपदिश्यते।।

**इह प्रजा यासामूधः पृषदश्वा घृतप्रतीक इति पृषातकस्य जुहोति।। २**

पृषातकं पृषदाज्यं तत्पुनर्दधिमिश्रमाज्यमतश्च सान्नाय्यधर्मकम्। आज्यभागान्तं चोपसमाधानं कृत्वा, विष्णोर्मनसेति पवित्रं कृत्वा, अग्निजिह्वेति पृषातकमुत्पूय, प्रधानयागोऽयं कर्तव्यः। मान्त्रवर्णिक्यश्च देवताः। मन्त्रास्तु 'इह प्रजा' इत्यादिभिः प्रतीकैश्चत्वारो विनियुक्ताः। तैश्चतुर्भिश्चतस्र आहुतयः।। २ ।।

**अम्भःस्थेति लवणमभिमन्त्र्याऽऽहुतिचतुष्टयादनन्तरं गोभ्यो दद्यात्।।**

**रौद्रीभिरभिजुहुयात्।। ४ ।।**

मृडा नो रुद्र इति तिसृभी रौद्रीभिर्जुहुयात्।। ४ ।।

**नित्याभिश्च।। ५ ।।**

जुहुयादित्यनुषङ्गः नित्याः पुनः ऋच इह गावः, अयं यज्ञः, आ नः प्रजामिति तिस्र एव स्मर्यन्ते बहुप्रधानसम्बन्धात्।। ५ ।।

**'दधिक्राव्ण' इति पृषातकस्य प्राश्नाति।। ६ ।।**

'दधिक्राव्ण' इति मन्त्रेण पृषातकस्य शेषं प्राश्नाति।। ६ ।।

**उपसृष्टा गावो वसन्ति।। ७ ।।**

वत्सैर्युक्ता गावस्तां रात्रिं वसन्ति।। ७ ।।

**इह प्रजा विश्वरूपा रमन्तामस्मिन्गोष्ठे विश्वभृतो जनित्रीः।**
**अग्निं कुलायमभिसंवसाना अस्मानवन्तु पयसा घृतेन।।**

त्रिष्टुप्, गावो देवता, ब्रह्मण आर्षम्। इह अस्मद्गृहे प्रजा गवामपत्यानि रमन्तां क्रीडन्तु, विश्वरूपाः सर्वा अस्मिन् गोष्ठे गवां स्थाने। विश्वभृतः सर्वस्य

पोषिका यज्ञवृष्ट्यादिद्वारेण, जनित्रीः जनित्र्यः अवन्त्यः, अग्निं कुलायं पश्वास्पदं सम्यग्वसाना आच्छादयन्त्यः 'अग्निः पशूनां कुलायः' इत्यनुश्रवः। अस्मानवन्तु रक्षन्तु आगच्छन्तु प्रीणयन्तु तर्पयन्तु प्रविशन्तु। केन। घृतेन, पयसा च।

**यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च।**
**ता नोऽवन्तु पयस्वतीरस्मिन्गोष्ठे वयोवृधः।।**

अनुष्टुप्, ऋषिदेवते पूर्ववत्। अस्मिन्गोष्ठे वर्तमानास्ताः पयस्वतीः क्षीरान्विताः अस्मानवन्तु। वयोवृधः, वयो धनं वर्धयन्तीति वयोवृधः। कास्ताः। यासामूधो दुग्धाधारश्चतुर्बिलं स्तनचतुष्टययुक्तं मधोर्मधुना मधुरसेन क्षीरेण, घृतेन च पूर्णम्।

**पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः।**
**अग्निजिह्वा मनवः सूरचक्षसो विश्वे मा देवा अवसागमन्निह।।**

वैश्वदेवी, जगती, शिशुशैशवयोरार्षम्। मरुतः सूर्यरश्मयश्चात्र विश्वेदेवाः। इह यज्ञे विश्वे सर्वे देवा आगच्छन्तु अवसा अन्नेन धनेन च सह। पृषदश्वा मरुतः मितराविणः। पृश्निः पृथिवी द्यौर्वाग्वा माता येषां ते पृश्निमातरः। शुभंयावानो शुभस्योत्कृष्टस्य फलस्य प्रापयितारः। विदथेषु यज्ञेषु जग्मयो गन्तारः। अग्निनैव हविः स्वादयन्तीत्यग्निजिह्वाः। मनवो मन्तारः। सूर्य इव दृश्यन्ते सूरचक्षसः।

**घृतप्रतीको घृतपृष्ठो अग्निर्घृताहवनो घृतमस्य धाम।**
**घृतप्रुषो हरितस्त्वावहन्तु घृतं पिवन्यजताद्देव देवान्।।**

आग्नेयी, त्रिष्टुप्। हे देव अग्ने घृतं पिबन् त्वं यज पूजय देवान्। हरितोऽश्वास्त्वामावहन्तु, रश्मयो वा हरितः। त्रिस्थानो ह्यत्राग्निः। कीदृशा रश्मयः। घृतप्रुषः। अग्निः कीदृशः। घृतप्रतीकः, घृतमभिमुखीकृत्य कायति प्रकाशयतीति घृतप्रतीकः, घृतेन हि प्रज्वलितो भौमोऽग्निः प्रकाशते। घृतपृष्ठः, वाडवोऽग्निर्वैद्युतो वा। घृतमाहूयतेऽस्मिन्निति घृताहवनः। घृतमुदकमस्य बाडबाद्यग्नेर्धाम स्थानम्।

**अम्भः स्थाम्भो वो भक्षीय महः स्थ महो वो भक्षीयोर्जः स्योर्जं वो भक्षीय रायस्पोषः स्थ रायस्पोषं वो भक्षीय रेवती रमध्वमस्मिन्योनावस्मिन्गोष्ठेऽयं वो बन्धुरितो मापगात मा मा हासिष्ट बह्वीर्मे भवत।।**

गाव उच्यन्ते - यूयमम्भः पानीयं स्थ भवथ, यज्ञद्वारेण वृष्टिसम्भवहेतुत्वात्।

अतो युष्माकं सम्बन्धि अम्भोऽहं भक्षीय, क्षीरमप्यत्राम्भः। महः स्थ ओजोरूपा यूयं भवथ, ततो महो भक्षीय प्राप्नुयाम्। ऊर्जमन्नानि पयोद्वारेण भवथ, ततः ऊर्जं भक्षीय। रायो धनस्य पोषः पुष्टिर्भवथ यूयमतोऽहं यौष्माकं धनपोषमश्नुयाम्। रेवती रमध्वं 'पशवो वै रेवती' इति श्रुतेः रेवत्यो यूयं रमध्वमिह गृहे क्रीडत। अस्मिन्योनौ यजमाने अर्जनहेतौ, अत्र गोष्ठे गवां स्थाने अयं यजमानो गोपतिर्बन्धुः पोषकत्वात्। अत इतो यजमानात् मापगात अन्यत्र मा गुः, मां मा हासिष्ट मा त्याक्षुः, बह्व्यश्च मे भवथ।

**संहितासि विश्वरूपा गौरा मोर्जा विशा गौपत्येना।**
**प्रजया रायस्पोषेण मयि वो रायः श्रयन्तां सहस्रपोषं वः पुषेयम्।।**

संहिता विश्वरूपा गौरिति त्रीणि गोनामानि, व्यत्ययेनैकवचनम्। सम्यग्धिताः, विश्वरूपाश्च सर्वस्योत्पादकत्वेन, गावो गन्त्र्य आगन्त्र्य इह मर्त्यलोके यज्ञाद्यर्थम्। अतः आ मोर्जा विश, ऊर्जा अन्नेन बलेन च सह मामाविशत व्याप्नुत। गौपत्येन च गोपतित्वेन सह आविशत। वो युष्माकं रायो धनानि मयि श्रयन्तां समाश्रयन्तु। सहस्रपोषं वः पुषेयं, युष्मत्सम्बन्धिन्या सहस्रसङ्ख्यया पुष्टः स्यां गोसहस्राणामधिपतिः स्यामित्यर्थः। अमुमपि प्रयुञ्जते इति अविनियुक्तोऽपि व्याख्यातः। वयोऽपि च पोषयन्त्यनेन मन्त्रद्वयेन।

**रौद्रीभिरभिजुहुयादित्याज्येन होम इति रौद्र्यो यथाप्रयोगं व्याख्यायन्ते**
**मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते।**
**यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु।। १ ।।**
**अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः।। १ ।।**
**सुम्नायन्नद्विषो अस्माकमाचरा रिष्टवीरा जुहवाम ते हविः।। २ ।।**
**त्वेषं वयं रुद्रं यज्ञसाधनं वङ्कुं कविमवसे निह्वयामहे।**
**आरे अस्मदमतिं हेडो अस्यतु सुमतिमिद्वयमस्यावृणीमहे।। ३ ।।**

रौद्र्यः, जगत्यः, असितस्य देवलस्यार्षम्। गवां रोगशमनमाद्यया। हे रुद्र, नोऽस्मान् मृड सुखय, उत अपि च नोऽस्माकं मयः सुखं कृधि कुरु। ते तुभ्यं नमस्कारेणान्नेन वा विधेम परिचरामः, तुभ्यमन्नं दद्म इति वा व्यत्ययेन योजना। कीदृशाय ते। क्षयद्वीराय क्षीयमाणा वीरा विक्रान्ताः शत्रवो यस्य संनिधौ, स क्षय-

द्वीरस्तस्मै। किञ्च, हे रुद्र तदश्याम व्याप्नुयामो वयं तव प्रणीतिभिः प्रणयैः प्रणय-नैर्वा अर्चनैः। किं तत्। यत् शं च सुखं च, योश्च सुब्व्यत्ययेन युं च, 'यु पृथग्भावे' रोगस्य पृथग्भावं मनुः प्रजापतिरायेजे, दानार्थोऽत्र यजिः, ददौ प्रजाभ्यो यत्सुखं नीरोगत्वं च, तदश्याम। पिता प्रजाना जनकः।। १ ।।

हे रुद्र मीढ्वः सेक्तः माध्यमिकरूपेण अनया देवयज्यया देवयागेन तव सुमतिं शोभनबुद्धिमश्याम। किञ्च अस्माकमस्मान् अद्विषः शत्रुरहितान् कुरु सुम्नायन् सुखयन्। रिष्टवीरा जुहवाम ते हविः, एवं सति तव हविः जुहुमो रिष्टवीराः हतशत्रवः सन्त इति तवाप्युपचयो भवति।। २ ।।

वयं रुद्रं निह्वयामहे आह्वयामः, सुमतिं च वृणीमहे याचामहे अस्मात्। इदिति पादपूरणे। किञ्च आहूतोऽभ्यर्थितश्च रुद्रः अस्मत् अस्मत्तः हेडः क्रोधममतिं कुमतिमारे दूरे अस्यतु। कीदृशं रुद्रम्। त्वेषं दीप्तम्। यज्ञस्य साधनभूतं तस्योद्देश्यत्वात् तत्र, वङ्कुं, गत्यर्थो वङ्किः, गन्तारम्। गतिरहितो ह्याहूतः किं कुर्यात्। कविं क्रान्त-दर्शनम्। किमर्थमाह्वयामः। अवसे रक्षणाय अन्नाय च।। ३ ।।

इह गावः, अयं यज्ञः, आ नः प्रजामिति नित्या व्याख्याता दधिक्राव्ण इति च।।

**।। इत्याश्वयुजी ।।**

**।। इति अष्टपञ्चाशी काण्डिका।। ५८ ।।**



## ।। अथ एकोनषष्टितमी काण्डिका ।।

**अथ वृषोत्सर्गः ।। १ ।।**

अथशब्दोऽधिकारार्थः। अथार्तवस्वस्त्ययनमध्येऽपि वृषोत्सर्गोऽधिकृतोऽनन्तरं बोद्धव्यः। इह वृषोत्सर्गः पितॄणां परोपकारार्थत्वेन स्मृतः।

'एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।

यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत्।।' (ग० पु०) इति ।। १ ।।

**कार्तिक्यां पौर्णमास्यां रेवत्यामाश्वयुजस्य गवां मध्ये सुसमिद्धमग्निं कृत्वा पौष्णं चरुं पयसि श्रपयित्वा 'पूषा गा अन्वेतु न' इति पौष्णस्य जुहोति।। २ ।।**

कृत्तिकायुक्तश्चन्द्रो यस्यां भवति, सा कार्तिकी पौर्णमासी। तस्यामाश्वयुजस्य वा सम्बन्धिनि रेवतीनक्षत्रे कर्मेदं कर्तव्यमिति कालविकल्पः। कथं कर्तव्यमित्याह - गवां मध्ये स्वगोष्ठे समिद्धं दीप्तमग्निं कृत्वा, पूषदेवताकं चरुं पयसि श्रपयित्वा, आदित्यप्रायणीयचरुविकारं 'पूषा गा अन्वेतु नः' इति पौष्णस्यावदानद्वयमुद्धृत्य जुहुयात्।। २ ।।

**इह रडिरिति हुत्वा।। ३ ।।**

इह रडिरित्याद्या दशाहुतीर्जुहुयात् प्रधानानन्तरम्।। ३ ।।

**रुद्राञ्जपेत्।। ४ ।।**

ततो रुद्राभिधानान् षडनुवाकान् जपेत् ।। ४ ।।

**जीववत्सायाः पयस्विन्याः पुत्रमेकरूपं द्विरूपं वा यो वा यूथं छादयेद्यूथे च तेजस्वितमः स्यात्तमलङ्कृत्य चतस्रोऽष्टौ वा वत्सतर्यस्ताश्चालङ्कृत्य, 'एतं युवानं पतिं वो ददाम्यनेन क्रीडन्तीश्चरथ प्रियेण। मा हास्महि प्रजया मा तनूभिर्मारधाम द्विषते सोम राजन्' इति।। ५ ।।**

अतिशयप्रत्ययार्थ आरम्भः। उत्सृजेदित्येतदपेक्षया द्वितीया। ततोऽपि एकरूपं

द्विरूपं वा। एकरूपत्वेऽपि रोहितरूपं 'रोहितरूपाः पशवो भूयिष्ठाः' इति श्रुतत्वात् रोहितवर्णम्। बह्वृचे चोक्तम् - 'द्विहायनमेकहायनं वा नीलं बभ्रुं कपिलं च।' इति। द्विरूपत्वेऽपि बभ्रुं सप्तशुक्लैश्चन्द्रकैश्चित्रितम्। पुराणे च -

'सप्त यस्य तु शुक्लानि लाङ्गूलं ककुदं मुखम्।
खुरांश्च चतुरः शुक्लं तादृशं वृषमुत्सृजेत्।।'

इति रूपेणोक्तम्। मुख्यकल्पेनापि कृष्णादीनामन्यतमे तिलकितम्। यो वा यूथं गोगणं छादयेत् सर्वोन्नत इत्यर्थः। यो वा यूथे तेजस्वितमः शौर्यकान्त्यादियुक्तः, तमलङ्कृत्य, वस्त्रमालाघण्टादिना। चतस्रोऽष्टौ वा वत्सतर्य इति विकल्पः। वत्सतर्योऽक्षतयुवत्यो दुहितरश्चतुर्वर्षाः ता अपि पूर्ववदलङ्कृत्य, एतमित्यादिमन्त्रेण। पौर्वकाल्यं वक्ष्यमाणजपापेक्षम्।। ५ ।।

**तस्य दक्षिणे कर्णे पिता वत्सानामिति जपेत्।। ६ ।।**

तस्य वृषस्य दक्षिणे श्रोत्रे पिता वत्सानामित्यादिमन्त्रं जपेत्। मन्त्रलिङ्गादयमेव त्यागमन्त्रः।। ६ ।।

**उत्सृज्य प्राचीमुदीचीं वा दिशं प्रकालयित्वा सह वत्सतरीभिः सर्पिष्मदन्नं ब्राह्मणान्भोजयेत्।। ७ ।।**

उत्सर्गसङ्कल्पं निर्वर्त्य वत्सतरीभिः सह प्राचीमुदीचीं वा प्रकालयेत् नयेत्। ततः सर्पिषा भूयसा युक्तं हविष्यमन्नं नानाप्रकारं ब्राह्मणान् यथाशक्ति भोजयेत्। प्रकालनं कृत्वा प्रकालयित्वेति व्युत्पत्तेर्न ल्यबादेशः कृतः, 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' (७.१.३७) यथा मिश्रीकृत्य।। ७।।

**पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः।**
**पूषा वाजं सनोतु नः।।**

ऋषिपुत्राणामार्षम्। पूषा देवता। युष्माकं सम्बन्धिनीर्गाः पूषा अन्वेतु अनुगच्छतु। तथा अर्वतोऽश्वान् पूषा रक्षतु पालयतु अस्मदीयान्। एवमस्मभ्यं वाजमन्नं पूषा सनोतु विभजताम्। इयर्तीत्यर्वा, 'अन्येभ्योऽपि दृश्यन्ते' (३.२.७५) इति वनिप्। इह रडिरिति पठिता व्याख्याताः। आकूतिं च केचिदेवमाहुः, परे बह्वीः।

**एतं युवानं पतिं वो ददाम्यनेन क्रीडन्तीश्चरथ प्रियेण।**
**मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन्।।**

हे गावः, युष्मभ्यम् एतं वृषं युवानं पतिं तरुणं भर्तारं प्रजननसमर्थं ददामि, अनेन प्रेयसा सह क्रीडन्त्यश्चरथ विचरथ। अनेन मन्त्रलिङ्गेन स्वगोवर्गान्तर्गतस्यापि रक्षणं प्रतीयते। किञ्च हे सोम राजन् वयं प्रजया पुत्रादिकया मा हास्महि प्रजया शून्या मा भूम स्वसम्बन्धिन्या गोसम्बन्धिन्या च, तथा तनूभिः शरीरैः मा हास्महि दीर्घायुषः स्यामेत्यर्थः। अपि च मा रधाम द्विषते 'रध-हिंसासंराध्योः' द्विषते इति तृतीयार्थे चतुर्थी, द्विषता शत्रुणा हिंसिता मा भूमेत्यर्थः।

**पिता वत्सानां पतिरघ्न्यानामथो पिता महतां गर्गराणाम्।**
**रेतोधां त्वा यशोधां रायस्पोषायोत्सृजे।।**

हे वृष, त्वामुत्सृजे उत्सृजामि। किमर्थम्। रायो धनस्य पोषाय पुष्टये, यतस्त्वं वत्सानां पिता जनकः। कथम्। अघ्न्यानानुपहतानां गवां पतिर्यतः। किञ्च महतां गर्गराणां दध्यादिपरिपूर्णानां भाण्डविशेषाणां त्वं पितोत्पादको गोगर्भाधानद्वारेण, अतः पितृपरमोपकारकारित्वेऽपि तव धनपोषे हेतुत्वमपि महदस्तीति प्रोत्साहनेयं स्वात्मनः। कीदृशं त्वाम्। रेतोधां रेतसो विधातारम्। यशोधां यशसो धातारं वृषोत्सर्गादियशस उदयात्।

**।। इति वृषोत्सर्गः।।**

**।। इति एकोनषष्टितमी काण्डिका।। ५९ ।।**



## ।। अथ षष्टितमी काण्डिका ।।

स्वस्त्ययनान्तरमाह -

**आग्रहायण्यामेतान्येव चत्वारि हवींष्यासादयेद्यानि श्रावण्याम्।। १।।**

अग्रे हायनस्य आग्रहायणी, अग्रे वा हायनो अस्या आग्रहायणी। हायनः संवत्सरः, तस्याग्रे आरम्भे वा, यस्या वा अग्रे पुरो हायनः, सा आग्रहायणी। सा तु मार्गशीर्षस्य पौर्णमासी। सैव संवत्सरस्याग्रे, तस्या वा संवत्सरोऽग्रे चैत्रामावस्याया हि आरभ्य तदन्त एव ज्योतिःशास्त्रे संवत्सरः प्रसिद्धश्चैत्रादिमासयुक्तः इति। आदि-व्यवहाराद्रूढत्वे अदूरविप्रकर्षेण योगोऽप्यस्तीति निर्वचनम्। पौर्णमास्यश्चतस्रः स्वस्त्य-यनस्योक्ताः - श्रावण्याश्वयुज्याग्राहायणी चैत्री चेति। तत्राग्रहायण्या चैत्रादिसंवत्सरः पुरः, सा वा तस्य पूर्वा। तत्र तान्येव चत्वारि हवींष्यासादयेत्, यानि श्रावण्यामुक्तानि।।

**यवमयस्त्वपूपः।। २ ।।**

अपूपोऽत्र यवमयः। स्थालीपाकस्तु व्रीहिमय इति शेषः। एवं चात्र त्रयो यवमयाः सम्पन्नाः - अपूपा धानाः सक्तव इति।। २ ।।

**एवा वन्दस्वेत्यपूपस्य जुहोति।। ३ ।।**

एवा वन्दस्वेत्यादिना मन्त्रेण अपूपस्यावदानद्वयं जुहोति।। ३ ।।

**उप ते गा इति स्थालीपाकस्य ।। ४ ।।**

गतार्थम्।। ४ ।।

**उक्तं धानासक्तूनाम्।। ५ ।।**

धानासक्तूनां यत् कर्म, तदुक्तमेव श्रावण्यां तथैव कर्तव्यं, नास्ति तत्र विशेषः।। ५ ।।

**अवते हेड इति वारुणीभिरभिजुहुयात्।। ६ ।।**

व्याख्यास्यमाना वारुण्यः।। ६ ।।

**नित्याभिश्च।। ७ ।।**

जुहुयादित्यनुषङ्गः। एता अपि इह गाव इत्याद्यास्तिस्रो व्याख्याताः। सर्वत्र मान्त्रवर्णिक्यो देवताः।। ७ ।।

**त्वामग्ने वृषभं चेकितानं संवत्सरस्य प्रतिमामिति चोदग्दशमास्तरणमास्तीर्य शिरस्त उदकं निधाय, व्रीहियवानुप्यापोहिष्ठीयाभिः शय्यामभ्युक्ष्य त्रातारमिन्द्रमिति शमीशाखया शय्यां निर्मार्ष्टि।। ८ ।।**

नित्याभिर्हुत्वा, त्वामग्ने इति द्वाभ्यां जुहोति। तत उदीच्यां दिशि दशा यस्य भवन्ति तादृशमास्तरणं प्रस्तरणपटादिकमास्तीर्य भूमिशय्यायां प्रतिस्तीर्य, यत्र शिरस्तत्रोदकं निधाय, तत्र च व्रीहियवान् प्रक्षिप्य, शय्यामापोहिष्ठीयाभिस्तिसृभिरभ्युक्ष्य त्रातारमिन्द्रमिति शमीशाखया शय्यां निर्मार्ष्टि शोधयति ।। ८ ।।

**ऐन्द्राग्नं वर्मेत्यहतं वासः परिधाय, स्योना पृथिवीति दक्षिणेन पार्श्वेन संविशति ज्योतिष्मतीत्यन्तेन।। ९ ।।**

ऐन्द्राग्नं वर्मेत्यादिना मन्त्रेणानुपभुक्तं हेमन्तयोग्यं वासः परिधाय, स्योना पृथिवीत्यादिना ज्योतिष्मतीत्यन्तेन संविशति शय्यां दक्षिणेन पार्श्वेन। सर्वानुवाकनिवृत्त्यर्थं ज्योतिष्मत्यन्तग्रहणम्।। ९ ।।

**अभ्युक्षणादिसंवेशनोन्तमेव द्विरुत्तरम्।। १० ।।**

उत्तरं द्विः कर्म कर्तव्यम्। किं तत्। अभ्युक्षणादिसंविशत्येवम्, एवशब्दोऽन्तवचनः, संवेशनमित्यर्थः।। १० ।।

**चैत्र्यामुद्रोहणमुपरिशय्या नात्र स्थालीपाको न शाखया निर्मार्ष्टि।।११**

एवंशब्दः सम्बन्धनीयः। एवमेव चैत्र्यां पौर्णमास्यां कर्म कर्तव्यं, यथा आग्रहायण्यामुक्तम्। एतवांस्तु विशेषः - अत्रोपरिशय्या, अभूमौ खट्वायामित्यर्थः। अस्मादेव आग्रहायण्यां भूमौ शय्या गम्यते। अत एवात्रोद्रोहणम् ऊर्ध्वं रोहणमारोहणम्। अत एवोद्रोहणमित्यन्वर्थं नामास्य कर्मण इष्टम्। अयमपरो विशेषः - नात्र स्थालीपाकः, नापि शमीशाखया निर्मार्जनम्। परिशिष्टं तु सकलमाग्रहायण्या तुल्यम्।

अथ मन्त्रवृत्तिः -

**एवा वन्दस्व वरुणं वृहन्तं नमस्या धीरममृतस्य गोपाम्।**
**स नः शर्म त्रिवरूथं वियंसत्पातं नो द्यावापृथिवी उपस्थे।।**

वारुणी। त्रिष्टुप्। अश्विनोरार्षम्। आत्मना आत्मोच्यते। वरुणमेव वन्दस्व। कीदृशम्। वृहन्तं महान्तम्। न केवलं तं स्तुहि, यावता नमस्या नमस्कुरु च। धीरं, धीर्विद्यते यस्य स धीरः, मत्वर्थीयो रः, तम्। अमृतस्य गोपाम्, अमृतमुदकं तस्य गोप्तारं रक्षकमप्पतित्वात्। स नः शर्म त्रिवरूथं वियंसत्, स स्तुतो नमस्कृतश्च सन् अस्मभ्यं शर्म सुखं शरणं वा गृहं विशेषेण यच्छतु ददातु। वियंसदिति लिङर्थे लेट्। कीदृशं शर्म। त्रिवरूथं त्रिभिर्धर्मार्थकामैर्नियतं, ऋग्यजुसामभिर्वा ध्रियमाणत्वात् त्रिवरूथं, त्रिभिर्लोकैर्वा। पातं नो द्यावापृथिवी उपस्थे, हे द्यावापृथिव्यौ अस्मान् पातं रक्षतं उपस्थे उत्सङ्गे कृत्वा मातेव पुत्रम्।

**उप ते गा इवाकरं वृणीष्व दुहितर्दिवः।**
**रात्रि स्तोमं न जिग्युपे।।**

गायत्री। रात्रिर्देवता। हे रात्रि ते तुभ्यं स्तोममुपाकरं स्तोत्रमुपाकरोमि, तं वृणीष्व अभ्यर्थयस्व श्रद्धया स्वीकुरु। हे दिवो दुहितः अन्तरिक्षस्याकाशस्य ब्रह्मणः पुत्रि न जिग्युषे, नकार उपमार्थीयः, जिग्युषे इव यथा कश्चित् कस्मैचिज्जितवते स्तुतिं करोति, तथा त्वदर्थं स्तुतिमहं करोमीत्यर्थः। किमिवोपाकरोमि। गा इव। यथा कस्मैचिदुत्तमाय कश्चित् गा उस्रिया ददाति, तथाहं स्तुतिं करोमि। अथवा उपमानबलाद्गोदानमत्र गम्यते - यथा दक्षिणार्थी गा उपाकरोमि, तथा स्तोमम्। यथा वा जितवते कश्चिद्गा उपाकरोति, तथा तुभ्यमहं स्तोममिति योजना। अथवा स्तोमं न स्तोममिव गा इव च ते तुभ्यमुपाकरोमि। किम्। अर्थात् हविरिति योज्यम्।

अव ते हेडो०। उदुत्तमं वरुण पाश०। तत्त्वायामि ब्रह्मणा०। एतास्तिस्रो वारुण्यो व्याख्याताः। इह गावः०। अयं यज्ञः० आ नः प्रजां०। एता अपि तिस्रो नित्या व्याख्याताः। त्वामग्ने०। संवत्सरस्य०। एते द्वे। तत्र द्वितीया गायत्री रात्रिदेवताका व्याख्याता। आद्या तु व्याख्यायते।

**त्वामग्ने वृषभं चेकितानं पुनर्युवानं जनयन्नुपागाम्।**
**अस्थूरिणो गार्हपत्यानि सन्तु तिग्मेन नो ब्रह्मणा संशिशाधि।।**

आग्नेयी। जगती। आत्रेयस्यार्षम्। चयने विनियुक्तेयम्। हे अग्ने अहं त्वामुपागतः। किं कुर्वन्। जनयन् चयनमन्थानाभ्याम्। कीदृशम्। वृषभं कामानां वर्षितारं

कर्मद्वारेण। चेकितानं, 'चिती संज्ञाने' 'लिटः कानज्वा' (३.२.१०६), ज्ञानवन्तम्। पुनर्युवानं पुनःपुनस्तरुणं नित्यनवमित्यर्थः। अतो नोऽस्मान् तिग्मेन तीक्ष्णेन ब्रह्मणा ब्रह्मवर्चसेन सम्यक् शिशाधि सम्पादय विद्यानुष्ठानरूपब्रह्मवर्चसयुक्तानस्मान् सम्पादयेत्यर्थः। अस्थूरिणो गार्हपत्यानि नः सन्तु, गृहपतेर्यानि कर्माणि तानि गार्हपत्यानि अस्थूरिणः अस्थूरीणि सन्तु। स्थरिशब्दो विनाशवचनः तत्प्रतिषेधेन अस्थूरीण्यविनाशीनि।

आपो हि ष्ठा०। यो वः शिव०। तस्मा अरं गमान वः०। एताभिस्तिसृभिर्भूमिशय्यायाः प्रोक्षणसंस्कारः क्रियते। व्याख्याताश्चैताः।

**त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम्।**
**ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः।।**

ऐन्द्री। त्रिष्टुप्। अश्विनोरार्षम्। इन्द्रं ह्वयामि आह्वयामि परमेश्वरम्। कीदृशम्। त्रातारं रक्षकम्, अवितारं गन्तारं सर्वगतमित्यर्थः। हवे हवे आह्वाने आह्वाने होमे होमे वा सुहवं सुखाह्वानं सुखहवनं वा। शूरं विक्रमयुक्तम्। शक्रं शक्तम्। पुरुहूतं बहुभिराहूतं हुतं वा। आहूतश्चेन्द्रो मघवा धनवान् अस्माकं स्वस्ति अविनाशं ददातु। पुनरिन्द्रशब्दोऽन्यत्र निवृत्त्यतिशयद्योतनार्थः।

**ऐद्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा नातिविध्यन्ति शूराः।**
**तन्नस्त्रायतां तन्वः सर्वतो महदायुष्मन्तो जरामुपगच्छेम जीवाः।।**

वैश्वदेवी। जगती। वायोरार्षम्। ऐन्द्राग्नं यद्वर्म कवचं, तन्नोऽस्माकं तन्वस्त्रायतां शरीराणि रक्षतु सर्वस्मात्। बहुलं विततं, उग्रं दृढं दुर्भेदम्। तथाच विश्वे सर्वेऽपि देवा अतिशूरा अपि यत् न विध्यन्ति न भिन्दन्ति, तत्र का कथान्येषाम्। अतस्तेन वर्मणा कर्मरूपेण रक्षिताः सन्तो महता दीर्घेण आयुषा युक्ताः सन्तो जरां जर्झरितत्वमुपगच्छेम प्राप्नुयाम। जीवाः प्रशस्तेन कीर्तियुक्तेन जीवनेन युक्ताः सन्तः।

**स्योना पृथिवि भवानृक्षरा निवेशनी। यच्छा नः शर्म सुप्रथः।।**

**वाक्त्वा समुद्र उपदधातु सुप्रजावनिं रायस्पोषवनिं मह्यं वाजिनाय मही ध्रुवा सलिलासि ज्योतिष्मती।।**

उशनसः काव्यस्यार्षम्। सुप्रथ इत्यन्ता गायत्री। हे पृथिवि भूमे स्योना

सुखा अस्माकं भव। अनृक्षरा कोमला, न ना क्षरत्यस्यामिति निवेश्यते अनया इति निवेशनी सुखनिवेशा। नोऽस्मभ्यं शर्म सुखं यच्छ देहि। सुप्रथः सुष्ठु प्रथमानं दुःखेनानभिभूतम्। अथवा शोभनां प्रथां कीर्तिं च नो यच्छ।

इयं वाक् मन्त्रात्मिका त्वां समुद्रे उपदधातु, सम्यक् मुदं सुखं नित्यानन्दं रातीति समुद्रः, ब्रह्मणि पारमार्थिके अद्वितीये स्थापयत्वित्यर्थः। अथवा जलधिमाश्रिता पृथ्वी, सा गुरुत्वातिशययोगिनी सती मन्त्रबलेन समुद्रे तिष्टतु प्लवमाना अमग्ना। कीदृशीं त्वाम्। सुप्रजावनिं शोभनां प्रजां वनति विभजते सुप्रजावनिस्ताम्। एवं रायस्पोषवनिम्। किमर्थम्। मह्यं मदर्थम्। कीदृशाय। वाजिनाय वाजेन अन्नेन युक्ताय। मही महती, ध्रुवा स्थिरा, सलिलयुक्ता असि भवसि, (ज्योतिष्मती ज्योतिषा युक्ताऽसि) हे पृथिवि। अत्र ऋतुद्वयस्थापनार्थं शय्याप्रोक्षणादिसंस्कारं कृत्वा ऋतुतिथ्यादि कर्तव्यम्।

**।। इत्याग्रहायणी।।**

**।। इति षष्टितमी काण्डिका।। ६० ।।**



## ।। अथ एकषष्टितमी काण्डिका ।।

**तिस्रोऽष्टकाः पितृदैवत्याः ।। १ ।।**

अष्टकाः कर्तव्या इति मन्वादिभिः स्मृतम्। तच्च प्रयोगप्रकाशनार्थमन्त्रलिङ्गमूलं स्मरणम्। 'यां जनाः प्रतिनन्दन्त्यष्टकायै सुमेधसे स्वाहा।' इति मन्त्रलिङ्गम्। 'एषाष्टका तपसा तप्यमाना स्वर्गे लोके कामधुग्भवति।' इति च। स्तुतिः स्तुत्ये विधेये सति युक्ता। तेन यथा कपिञ्जलादिविधिभ्योऽर्थवादकल्पना, तथात्रार्थवादाद्विधिमानम्। विध्येकवाक्यत्वेन ह्यर्थवादाः प्रमाणम्। 'अष्टका पार्वणश्राद्धम्.......।' इति चेहाप्युक्तम्। तेनेह कर्तव्यतोच्यते। तत्राष्टकाशब्दः कर्मसमुदायनाम राजसूयादिवत्। एकैकस्यां च कर्मत्रयं प्रतीयते। स्थालीपाककर्मैकं प्रधानम्। आवाहनादिसंतर्पितब्राह्मणानुव्रजनपर्यन्तं द्वितीयम्। आन्वष्टकं तृतीयम्। आज्यभागान्ता त्वितिकर्तव्यता। पूर्वं स्थालीपाकादि, ऋतुतिथ्यादिकं तु पश्चात्। तिस्रोऽष्टका भवन्ति पितृदैवत्याः। तेनावाहने अमुष्मै स्वधा नम इत्यादौ निर्वापणमन्त्रेषु च पित्रादिनामविशेषप्रतीतिः। वक्ष्यमाणपशुपक्षे वपाकर्तनादौ पितृभ्यस्त्वां जुष्टं निर्वपामीत्यादिप्रयोगः। अष्टकापि मन्त्रलिङ्गाद्देवता। नित्याश्चैता अवश्यकर्तव्यतास्मरणात्।। १ ।।

**ऊर्ध्वमाग्रहायण्यास्त्रयस्तामिस्रास्तेष्वष्टमीष्वष्टकायज्ञः ।। २ ।।**

एवमाग्रहायण्या ऊर्ध्वं ये त्रयः कृष्णपक्षाः पौषमाघफाल्गुनाख्यास्तेषु या अष्टम्यस्तासु अष्टकायज्ञः कर्तव्यः। तिसृषु त्रयस्त्रिकसमुदायाः।। २ ।।

**प्रथमां शाकेन द्वितीयां मांसेन तृतीयामपूपैः ।। ३ ।।**

कुर्यादिति शेषः। हविष्यान्ननिवृत्तिः। आज्यभागान्ते च पवित्रशाकाद्यं चतुरावर्तेन होतव्यं - अष्टकायै स्वाहेति।। ३ ।।

**ऋतूनां पत्नीति षड्द्वे द्वे स्थालीपाकस्य जुहोति ।। ४ ।।**

ऋतूनां पत्नीत्यादयः षड़ृचः अनुवाकशेषभूताः। ताभ्यो निष्कृष्य द्वे द्वे ऋचौ प्रत्यष्टकं स्थालीपाकस्य जुहुयादाज्यभागान्ते।। ४ ।।

**देवा ग्रावाण इति सर्वत्र तृतीया ।। ५ ।।**

देवा ग्रावाण इत्यादिका सर्वास्वष्टकासु भवति। तेन तृतीयेयमृग्भवति। ततश्चैकैकत्र तिस्रस्तिस्रो भवन्ति।। ५ ।।

**इयमेव सेत्यनुवाकेन पञ्चभिः पञ्चभिरभिजुहुयात्।। ६ ।।**

स्थालीपाकेनेष्ट्वा इयमेवेत्यादिना अनुवाकेन जुहुयात्। किं सकलेन सर्वत्रेत्याह - पञ्चभिः पञ्चभिरिति। इयमेव सेत्यादिना पञ्चभिः प्रथमायामष्टकायामभिजुहुयात्, पञ्च व्युष्टीरिति मध्यमायाम्, ऋतस्य धामेति तृतीयस्याम्। अभिशब्द उपरिवचनः, हविषामुपरि जुहुयादित्यर्थः। आज्येन चैता आहुतयः। अत ऊर्ध्वमृतुतिथ्यादिकम्।। ६ ।।

अथ मन्त्रव्याख्यानावसरेऽनुवाको व्याख्यायते -

**इयमेव सा या प्रथमा व्यौच्छत्सा वास्वन्तश्चरति प्रविष्टा।**
**वधूर्मिमाय नवगज्जनित्री त्रय एनां महिमानः सचन्ते।। १।।**

उषस्यः सर्वोऽनुवाकः। उषःशब्देन रात्रेरन्त उच्यते, तद्दैवत इत्यर्थः। देवानामार्षम्। त्रिष्टुप् छन्दः। प्रकाशात्मकमुषसो रूपं सर्वरात्र्यन्धकारापसारणस्वभावत्वात्। तत्र च ब्रह्माद्वैतात्मके जगति रात्रिरविद्या तमोरूपा, उषा तु विद्या प्रकाशस्वभावा। सांख्यदर्शने तु तामसी रात्रिरुषस्तु सत्त्वम्। इयमेव सा उषा या प्रथमा, या महाप्रलयरूपब्रह्मरात्र्यवसानात्मिका उषा, सैवेयम्। का सा। या व्यौच्छत् विशेषेण उच्छनमपसारणं कृतवती, अपसारितवती। किम्। अर्थात्तमः अविद्याम्। सा वास्वन्तश्चरति, सा उषा आसु वर्तमाना अन्तर्मध्ये चरति सञ्चरति। प्रविष्टा सती या वधूर्मिमाय, वहतीति वधूः आपो वा, निर्मितवती ब्रह्मरूपविद्यात्मिका इमाः। नवगत्स्तुतिपात्रम्। जनित्री जनिका, त्रिलोकी इयं ब्रह्मणो विवर्तः परिणामो वा। त्रय एनां महिमानः सचन्ते, यस्मात्त्रयो लोका महिमानो महान्तः एनामुषसं सचन्ते, 'षच-समवाये' यत एतया उषसा सम्बध्यन्ते तदाश्रितत्वात्तत्प्रकाश्यत्वाच्च। उषःशब्दोऽत्र ह्यच्कासन्तत्वेन नपुंसकलिङ्गः प्रतिभाति। छन्दसि तु लिङ्गव्यत्ययः। यद्वा लिङ्गमशिष्यं लोकप्रमाणत्वात्। तथाच लोकेऽपि उषःशब्दात् स्त्रीत्वप्रतीतिः।

**छन्दस्वती उषसौ पेपिशाने समानं योनिमनुसंचरेते।**
**सूर्यपत्नी विचरतः प्रजानती केतुमती अजरे भूरिरेतसा।। २।।**

द्वादशाहिषु बह्वीनामुषसामन्तर्गतत्वे द्विरूपेण स्तुतिः। छन्दस्वती छन्दस्वत्यौ उषसौ, प्रातरनुवाके गायत्र्यादिच्छन्दसां सम्भवाच्छन्दोयुक्तत्वमुषसोः। पेपिशाने, पेश इति रूपनाम, तेन पेशतिः शोभातिशयक्रियः, अतिशयेन शोभमाने। समानं तुल्यां योनिं स्थानं रात्र्यन्तरूपं अनुसंचरेते लक्षणीकृत्य चेष्टेते। ब्रह्म वा योनिः। सूर्यपत्नी सूर्यपत्न्यौ सूर्यः पालयिता जनको ययोः, हे सूर्यपत्न्यौ। विचरतः प्रजानती परिज्ञानवत्यौ। केतुमत्यौ प्रकाश चिह्नयुक्ते। अजरे अविनाशिन्यौ। भूरिरेतसौ रेतो जगत्प्रजननमवश्यायादि, तदनयोर्भूरि बहु विद्यते। द्विवचनस्य 'सुपां सुलुक्' (७.१.३९) इत्याकारादेशः। एवमन्यत्र क्वचिल्लुक्, क्वचित्पूर्वसवर्णदीर्घादेशोऽनुमन्तव्यः।। २ ।।

**ऋतस्य पन्थामनु तिस्र आगुस्त्रयो घर्मासो अनु रेतसागुः।**
**प्रजामेका रक्षत्यूर्जमेका क्षत्त्रमेका रक्षति देवयूनाम्।। ३ ।।**

तिस्र उषसो वाक्त्रयात्मना स्तूयन्ते ऋत्विग्भिः। वैखरी मध्यमा पश्यन्तीति तिस्रो वाचः सूक्ष्माया मूलप्रकृतित्वेनात्राऽविवक्षणात्। ऋतस्य यज्ञस्य सत्यस्य च ब्रह्मस्वरूपस्य च प्राप्तौ पन्थान उपायास्तिस्रो वाचः अन्वागुः अन्वागताः विवर्तं परिणामं वा प्राप्ताः। त्रयो घर्मासो अनु रेतसागुः, तास्तिस्रो वाचः त्रयो घर्मासः, घर्म एव घर्मासः। 'आज्जसेरसुक्' (७.१.५०) रेतसा ब्रह्मबीजेनान्वागताः। घर्मशब्दः सारवचनः, वाक्त्रयस्य तु सारत्वं जगत्त्रयस्य तदन्वयात् तद्व्यतिरेकेणाप्रतिभासात्। तत्रैका वैखरी वाक् प्रजां रक्षति प्रजायमानं सर्वं पालयति संपादयति उच्चार्यमाणेन मन्त्रेण सर्वस्य यज्ञस्य साङ्गस्य सम्पादनात्। एका अन्या मध्यमा वाक् ऊर्जमन्नं रक्षति सङ्कल्पयति देवतोद्देशेन द्रव्यसंकल्पत्वाद्भागस्य। एका अन्या पुनः क्षत्त्रं बलं रक्षति पश्यन्त्यात्मिका वाक् द्रव्ये यज्ञोपयोगिनि क्रियमाणे कोशशून्यत्वं भवतीत्यादिलोभमूलासात्त्विकसङ्कल्पाकलुषितेति। सात्त्विके निर्विभागे कर्मकर्तव्यतासङ्कल्पे सति यज्ञस्य फलजननशक्तिः, यजमानस्य च फलं भोगफलं रक्षितं भवति। असात्त्विकसङ्कल्पो हि निष्फलः। केषां प्रजादिकां रक्षति। देवयूनां, दीव्यन्ति द्योतन्ते कर्मसु कौशलेनेति देवा यजमाना ऋत्विजश्च, त एव युवानः समर्थाः कर्मसु, तेषाम्। इत्थं तावद्यज्ञोपायत्वमुषोविवर्तरूपवाक्त्रयस्य, सूक्ष्मवागात्मकब्रह्मप्राप्त्युपायत्वमपीत्थम् – देवयूनां यजमानादीनां प्रजां नित्यनैमित्तिकादिमोक्षोपायभूतकर्मरूपामेका वैखरी अत्र विद्यात्मिका रक्षति अनुष्ठापयति। अन्या

मध्यमा ऊर्जं बलं पालयति, सङ्कल्पविशेषनिगडनिबन्धो हि अन्तरात्मा विषयपवनैरपह्रियते। अन्या पश्यन्ती क्षत्त्रं सर्वशक्त्यात्मकं वाग्रूपं ब्रह्म रक्षति तद्द्वारेण तत्प्राप्तेः। यद्वा त्रयो घर्मासस्त्रीणि सवनानि तदधिष्ठातृदेवताविशेषाश्च, तैर्हि यज्ञः समाप्यते। सवनदेवतास्तु इरा सरस्वती भारती, इरा पृथिवी सरस्वती, अन्तरिक्षं भारती द्यौः। तत्र पृथिवी प्रजां पुत्रादिकां रक्षति, अन्तरिक्षमूर्जमन्नं रक्षति वृष्टिदानद्वारेण, द्यौस्तु क्षतस्य दुःखस्य त्राणं रक्षति निरतिशयप्रीत्यात्मकत्वात् स्वर्गस्य। ताश्चैतास्तिस्र उषसो विद्याभागात्मना प्रकाशमानत्वात्। अग्निरादित्य इन्द्र इति वा सवनदेवताः।।

**चतुष्टोममदधाद्या तुरीया यज्ञस्य पक्षा ऋषयो भवन्ती।**
**गायत्री त्रिष्टुब्जगती विराडर्कं युञ्जाना स्वराभरन्निदम्।। ४।।**

चतुर्थी उषा विराड्रूपेण स्तूयते। हे ऋषयो ज्ञानयुक्ताः तुरीया चतुर्थी या उषा, सा यज्ञस्याग्निष्टोमस्य चतुष्टोममग्निष्टोममितरसंस्थाप्यप्रकृतिभूतं नित्यम् अदधात् आदधौ चकार। किं कुर्वती। यज्ञस्याग्निष्टोमस्य पक्षौ भवन्ती पक्षाविव सम्पद्यमाना। तथा अर्कं युञ्जाना, अर्चनमर्कः पूजा स्तुतिस्तां युञ्जाना सम्बन्धयन्ती कुर्वती। स्वराभरन्निदं, स्वरिति लोकत्रयोपलक्षणार्थं, लोकत्रयमिदमारब्धवती। प्रकृतिकर्मफलत्वाद्वा स्वर्गस्यैव काम्यत्वमुक्तम्, नित्यस्यापि हि अग्निष्टोमस्याग्निहोत्रादेरिव कामसम्बन्धोऽप्यस्ति। का असावित्यपेक्षायामाह विराडिति। कथं तुरीयत्वं विराज इत्यपेक्षायामुच्यते, गायत्री त्रिष्टुब्जगती विराडिति। गायत्र्यादीनि अन्यानि त्रीणि छन्दांस्यग्निष्टोमे विद्यन्ते, तेनेयं तुरीयेत्यर्थः। पक्षद्वयभवनकर्तृत्वं तु विराज इत्थमुक्तम्। अग्निष्टोमे एकविंशतिः स्तोत्रीणां, तत्र मध्ये स्थितो माहेन्द्रग्रहयजियज्ञस्यात्मत्वेन कल्पते। तदपेक्षया ह्युच्यते एकविंशोऽग्निष्टोमः, अग्निष्टोमस्तोमः एकविंशतिस्तोत्रीय इत्यर्थः। अग्निष्टोमं संस्थाप्याग्निष्टोमः सोमयागः, तत्रापि माहेन्द्रग्रहयजिप्रधानारोप इत्युक्तम्। एकविंशतिस्तोत्रीयास्वेकान्नविंशतिर्विराजः सन्ति। तत्रोभयदिग्भागवर्तिनौ नवकावपेक्ष्य मध्यस्था विराट् पक्षिणी कल्पिता। नवकौ तु पक्षाविव। अथ कथमग्निष्टोमंश्चतुष्टोमः। इत्थम् चत्वारः स्तोमा यस्य सः चतुष्टोमः। ते पुनस्त्रिवृत्पञ्चदशसप्तदशैकविंशाः। एवं ह्याम्नायते – त्रिवृद्वहिष्पवमानः, पञ्चदशान्याज्यानि, पञ्चदशो माध्यन्दिनः पवमानः, सप्तदशान्याज्यानि, सप्तदश आर्भवः पवमानः, एकविंशोऽग्निष्टोम इति।। ४ ।।

**पञ्चभिर्धाता विदधा इदं यत्तासां स्वसॄरजनत्पञ्च पञ्च।**

**तासामु यन्ति प्रयवेण पञ्च नाना रूपाणि क्रतवो वसानाः।। ५।।**

इदं जगत्त्रयं धाता प्रजापतिः पञ्चभिः पृथिव्यादिभिर्विदधाः व्यधात् कृतवान्, तथा तासां पृथिव्यादिमात्राणां स्वसॄर्भगिनीः पञ्च पञ्च अजनयत्। कास्ताः पञ्च पञ्च। अर्थाद्वाय्विन्द्रियमात्राः, प्राणापानादीन्वायून् घ्राणादीनीन्द्रियाणि पञ्च। सांख्यदर्शनानुसारेण तु प्रजापतिर्मूलप्रकृत्यात्मा, तदधिष्ठाता वा परमेश्वरः, सेश्वरसांख्यानां पञ्चभिस्तन्मात्रमात्राभिः पञ्च महाभूतमात्राः विदधे । स्वसॄश्च तासां पञ्च बुद्धिकर्मेन्द्रियवायुपञ्चकत्रयात्मिका मात्राः। तासामु यन्ति प्रयवेण पञ्च नानारूपाणि क्रतवो वसानाः, उ इति निपातः 'यु-मिश्रणे' इत्यस्य प्रयवः, क्रतवः क्रान्तदर्शना विद्वांसः तासामिन्द्रियमात्राणां प्रयवेण मिश्रीभावेन सम्बन्धिनः पण्डिता अपि वसान विवेकमाच्छादयन्तो विषयलोभेन नानारूपाणि पञ्च रूपादीनि विषयजातानि यन्ति प्राप्नुवन्ति भुञ्जते, ततश्च संसारसागरे निमज्जन्ति। तस्माद्विषमविषयपरिहारे प्रयत्नो विधेयो विद्वद्भिरिति तात्पर्यम्। पञ्चभिः पञ्चभिरभिजुहुयादित्युक्तम्। तत्र प्रथमाष्टकोपयोगी प्रथमपञ्चको व्याख्यातः।। ५ ।।

**।। इति प्रथमपञ्चकः।।**

अथ द्वितीयाष्टकोपयोगी द्वितीयो व्याख्यायते -

**पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च।**

**पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरभि लोकमेकम्।। १।।**

पञ्च व्युष्टीरूषा निर्मितवती 'उष-दाहे' विशेषेण दाहिका उष्टयो रूपादिविषयमात्राः अनु पञ्च दोहाः, अनन्तरं पञ्च दोहा तया निर्मिताः। ते पुनः श्रुत्या प्रतिपादिताः - ते एते देवा अदुहुर्हारीतेन पात्रेणामृतं, राजतेन पितरोऽदुहुः स्वधां, दारुपात्रेण आहूय तं मनुष्या अदुहुरन्नमयस्मयेनासुरा अदुहुर्यवान्, अलावुपात्रेण सर्पा अदुहुर्विषमिति। गां पञ्चनाम्नीं, प्रकाम्या - श्रव्या - इडा - संहिता - विश्वरूपेति गोः पञ्च नामानि। ऋतवोऽनु पञ्च, अनन्तरं पञ्चर्तवः निर्मिता ब्रह्मादिकन्ययोषसा, हेमन्तशिशिरयोरेकत्वापादनात्पञ्चत्वम्। पञ्च दिशः पञ्चदशेन क्लृप्ताः, पञ्च दिशः पञ्चदशेन स्तोमेन सह क्लृप्ताः। निर्मिताः। ऊर्ध्वा पञ्चम्यत्र। कीदृशः दिशः। समानमूर्ध्नीः

तुल्यमूर्ध्न्यः प्राची यामी प्रतीची उदक् दिशः, अधऊर्ध्वा एकवचना एका दिक्, अन्तरिक्षं स्वर्गो वा पञ्चानां मूर्धा। अभि लोकमेकम्, एकं लोकमुपाधिं लक्षणीकृत्य पञ्चत्वेन विभक्ता दिश इत्यर्थः।। १ ।।

**ज्योतिष्मती प्रतिमुञ्चते नभ उषा देवी सूर्यस्य व्रतेन।**
**विपश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे।। २ ।।**

ज्योतिष्मती प्रकाशवती उषा देवी नभ आकाशं प्रतिमुञ्चते तमसा वियोजयति। केन। सूर्यस्य व्रतेन कर्मणा। तां च तादृशीमुप सं नानारूपा जायमाना अपि सद्योजाता अपि पशवोऽपि विशेषेण पश्यन्ति अस्या अन्तरिक्षलक्षणाया मातुर्निर्मातुरुपस्थे उत्सङ्गे स्थिताम्।। २।।

**त्रिंशत्स्वसार उपयन्ति निष्कृतं समानं केतुं प्रतिमुञ्चमानाः।**
**ऋतूंस्तन्वन्ते कवयः प्रजानतीर्मध्ये छन्दसः परियन्ति भास्वतीः।। ३ ।।**

त्रिंशत्स्वसारो भगिन्यः समानकारणप्रभवत्वादुषस उपयन्ति आवर्तन्ते प्रतिमासं, निष्कृतं निःसंशयं कृतं स्वयं प्रजापतिना वा समानं तुल्यं केतुं गगनं जीवात्मानं वा प्रतिमुञ्चमानाः उषसो विमोचयन्त्यः, ऋतून् पञ्च षड्वा तन्वन्ते विस्तारयन्ति। कवयः आक्रमणक्रियायाः कर्त्र्यः। प्रजानतीः प्रज्ञानवत्यः। मध्ये छन्दसः परियन्ति, छन्दःशब्देन गतिक्रियायोगाल्लोकत्रयमुच्यते वेदो वा गायत्र्यादिच्छन्दोयुक्तत्वात्, लोकत्रयस्य वेदस्य वा मध्ये परियन्ति प्रत्यावर्तन्ते पूर्वापरदिवसानि एष्यमाणदिवसमध्ये प्रत्यावर्तन्त इत्यर्थः। भास्वतीः दीप्तिमत्यः।। ३।।

**शुक्रर्षभा नभसा ज्योतिषागाद्विश्वरूपा शवल्यग्निकेतुः।**
**समानमर्थं स्वपस्यमाना बिभ्रती जरामजर उष आगाः।। ४ ।।**

शुक्रा शुक्ला चासावृषभा कामानां सेक्त्री, नभसा ज्योतिषाऽऽगात्, नभसा नभःस्थेनादित्येन ज्योतिषा सह आ अगात् आगता। विश्वरूपा चन्द्रतारादिनानारूपा। शवली रात्रितमसा दिवसभासा च छुरितत्वाच्छवला। अग्निकेतुः अग्निवत्प्रकाशमाना तमसो वा केतुर्विनाशिका अग्निवत्। समानमर्थं स्वपस्यमाना, एकं प्रयोजनं सुष्ठु अपस्यमाना जनयन्ती। समानोऽतः संव़त्सरः। अपस्यमानेति अपपूर्वस्यास्तेः रूपमस्यतेर्वा, तत्र समानमर्थं तमोलक्षणमपास्यन्तीत्यर्थः। बिभ्रती जरां, मनुष्यादीनां

जनानां पोषयन्ती कालावृत्तिमुखेन। अजर उष आगाः, हे उष अजरे जरारहिते त्वमागाः आगता।। ४ ।।

**ऋतूनां पत्नी प्रथमेयमाऽऽगादह्नां नेत्री जनित्री प्रजानाम्।**
**एका सती बहुधोषो व्युच्छाऽजीर्णा त्वं जरय सर्वमन्यत्।। ५ ।।**

ऋतूनां पत्नी पालयित्री सती इयमुषा प्रथमं पूर्वमागात् आगता। अह्नां दिनानां नेत्री अग्रगामिनी सेनापतिप्राया। प्रजानां प्रजायमानानां त्रयाणां लोकानां जनित्री विद्यात्मकत्वेन ब्रह्मस्वभावत्वात्। यत एवैका सती बहुधा विवृत्ता परिणता वा, तत उच्यते हे उषः व्युच्छ अविद्यातमःपटलमपसारय। यतस्त्वमजीर्णा स्वयं जरारहिता, अतः सर्वमन्यदविद्यानिर्मितभेदजालं जरय नाशय ब्रह्मभूयमस्मान् गमयेति यावत्।। ५ ।।

**।। इति द्वितीयपञ्चकः।।**

**ऋतस्य धाम प्रथमा व्यूषुष्यपामेका महिमानं बिभर्ति।**
**सूर्यस्यैका चरति निष्कृतानि घर्मस्यैका सवितैकां नियच्छते।। १।।**

एकैवोषाः पञ्चधा विभज्यते अवान्तरभेदेन। या प्रथमा व्यूषुषी विशिष्टोषाः, सा ऋतस्य यज्ञस्य सत्यस्य वा धाम आस्पदं ब्राह्मः सारस्वतो हि सकलसत्यसङ्कल्पो यज्ञाद्यारम्भयोगः। एका द्वितीया पुनरपामवश्यायजलानां महिमानं माहात्म्यं बिभर्ति। एका तृतीया पुनः सूर्यस्य निष्कृतानि चरति दिनकार्याणि सम्पादयति पुरुषपक्षिप्रभृतिचेष्टारूपाणि। सवितैकां नियच्छते, पञ्चमीं सविता ग्रसतीत्यर्थः, उत्कटतेजस्कसवितृरूपेण निवर्तत इति यावत्।। १ ।।

**एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम्।**
**तेन दस्यून्व्यसहन्त देवा हन्ताऽसुराणामभवच्छचीभिः।। २ ।।**

एकाष्टका तपसा संयमानुष्ठानादिना, तप्यमाना प्रजापतिनानुष्ठीयमाना सती, गर्भं जजान जनितवती। कम्। इन्द्रम्। महिमानं महान्तम्। तेन चेन्द्रेण देवा दस्यून् वृत्रादीन् व्यसहन्त अभिबभूवुः न्यक्कृतवन्तः। महेन्द्रो हन्ता असुराणामभवत् शचीभिरभिचारादिक्रियाभिः। अथवा आदित्यस्तान् जघान। असुरा अत्र मेघाः। देवा रश्मयः। शच्योऽभिघातक्रियाः।। २ ।।

**अनानुजामनुजां मामकर्त सत्यं वदन्त्यनुयच्छ एतत्।**
**भूयासमस्य सुमतौ यथा यूयमन्या नो अन्यामति मा प्रयुक्त।। ३।।**

इयमुषाः अनानुजामकनिष्ठं सन्तं परमात्मरूपतया अनुजमविद्याविभक्तेन रूपेण मामकर्त कृतवती। कालपरिवृत्तिवशेन हि ज्येष्ठकनिष्ठता भवति, कालात्मिका चोषाः। अनुयच्छे अभ्यर्थये एतत् सत्यं वदन्ती वादयन्तीमुषसम्। सत्यसंकल्पत्वात् सत्यं वदन्तीत्युच्यते। किं तदर्थये। भूयासमस्य सुमतौ, अस्य परमात्मनः शोभनायां मतौ नित्ये ज्ञाने आनन्दात्मनि भूयासं स्यां ब्रह्मत्वं प्राप्नुयामित्यर्थः। यथा यूयमुषसः परमप्रभास्थिताः, तथा स्याम्। अन्या नो अन्यामति मा प्रयुक्त, अन्या एका उषाः नोऽस्माकं अन्यामुषसं मा अतिप्रयुक्त पूर्वा पूर्वा उषा अपरामपरामुषसमक्रमस्य कारयित्रीमस्माकं मा कार्षीदित्यर्थः, उत्तरोत्तरा उषसोऽस्माकमविद्याविनाशकारिण्यः सन्त्विति यावत्।। ३ ।।

**अभून्नु नः सुमतौ विश्ववेदा आष्टा प्रतिष्ठामाविदे न गावम्।**
**भूयासमस्य सुमतौ यथा यूयमन्या नो अन्यामति मा प्रयुक्त।। ४।।**

हे आष्टाः व्यापिकाः उषसो विश्ववेदाः सर्वधनः सर्वस्य च वेत्ता प्रजापतिः नोऽस्माकं सुमतावभूत् भवतु शोभनां मतिं करोत्वित्यर्थः। प्रतिष्ठामाविदे न गावं, अहं परब्रह्मणि प्रतिष्ठामाविदे लभेय। नशब्द उपमार्थीयः। गामिव, गौरिव। यथा पङ्के महति मग्ना गौस्तत्रैव प्रतिष्ठां लभते, तद्वत्। अथवा गौर्वाक् सर्वार्थेषु प्रतिष्ठा तां विनार्थानवगमात्। यथोक्तं - 'न सोऽस्ति प्रत्ययो लोके ........।' इति ।। ४ ।।

**प्रथमा ह व्युवास सा धेनुरभवद्यमे।**
**सा नः पयस्वती दुहामुत्तरामुत्तरां समाम्।। ५ ।।**

प्रथमा आद्या सर्गादिभिर्वा उषा व्युवास व्युष्टा। प्राचीना सा धेनुरभवत् भूता यमे संयते प्रजापतौ। एतद्धेनुसम्बन्धादेव पञ्चनाम्नी गौः पूर्वमन्त्रस्थिता। सा धेनुरूपेण विवृत्ता परिणता वा सती उत्तरामुत्तरां समां तुल्यां धेनु दुहां दोग्धु पूरयतु, यज्ञोपयोगिनीं धेनुपरम्परामस्माकं सम्पादयत्वित्यर्थः।। ५ ।।

**।। इति तृतीयः पञ्चकः।।**

**देवा ग्रावाणो घोषमकृत हविष्कृण्वन्तः परिवत्सरीयम्।**
**एकाष्टके सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं ते।।**

हे देवाः कर्मणि द्योतमानाः ग्रावप्रभृतयः दृषदुपलोलूखलमुसलाः यूयं घोषमकृत शब्दं कृतवन्तः। किं कुर्वन्तः। परिवत्सरीयं हविष्कृण्वन्तः, परिवत्सरः संवत्सरः तत्र भवं परिवत्सरीयं सोमरसतण्डुलपिष्टादिकम्। हे एकाष्टके वयं ज्योक् चिरकालं जीवेम त्वत्प्रसादात्। कीदृशाः। ते तुभ्यं बलिहृतो हविषो दातारः, सुप्रजसः शोभनप्रजायुक्ताः, सुवीराः सुपुत्राः। पुनर्वचनमतिशयार्थम्।

**।। इत्येकषष्टितमी काण्डिका।। ६१ ।।**



## ।। अथ द्विषष्टितमी काण्डिका।।

**गवा चेदष्टका स्यात्पशुना वा तदुक्तम्।। १ ।।**

चेच्छब्दो यद्यर्थे। निश्चितेऽपि च चेछ्छब्दो दृष्टो वेदाश्चेत्प्रमाणमिति। स्थालीपाकेन गवा वा च्छागेन वा अष्टका भवति। यदा गवा, तदा स्थालीपाकस्थानेऽपि गौस्त्यक्तव्या पित्रुद्देशेन ब्राह्मणाय दातव्येत्यर्थः। यदा तु च्छागेन, तदा अतिदेशमाह तदुक्तमिति। आदावेव पशुकल्प इत्युक्तम्। तदेव तन्त्रमिह ज्ञेयमित्यर्थः। एतावांस्त्विह विशेषः – पितृभ्यस्त्वा जुष्टमवकृन्तामीति वपाकर्तनं कर्तव्यमिति।। १ ।।

**वह वपामिति वपां जुहुयात्।। २ ।।**

'वह वपां जातवेदः' इत्यादिना वपां जुहुयात् प्राचीनावीती दक्षिणाभिमुखः।।

**पेशीरवदानस्थानेऽङ्गारिणीः कुर्यात्।। ३ ।।**

दीर्घमांसलताः पेश्यः। ता अवदानस्थानेभ्य उद्धृत्य अङ्गारिणीः कुर्यात् अङ्गारेषु पचेत्, न स्थाल्यामित्यर्थः।। ३ ।।

**यथाकामं मज्जुका।। ४ ।।**

मज्जुका वपानिर्मितो यूषः, यथाकामं यथा सम्पद्यते तथा कार्येत्यर्थः। सा च स्थाल्यामेव पक्तुं शक्यते, न शूले। यदि तु केनापि प्रयोगेण शूले पक्तुं शक्येत विगलनधर्मात्मिका सती, तदा न वार्यत इत्युक्तं भवति।। ४ ।।

**ये समाना इति द्वाभ्यां स्थालीपाकस्य पेशीनां जुहोति।। ५ ।।**

ये समाना इति द्वाभ्यां स्थालीपाकेन पेशीभिश्च यथासंख्यं जुहुयात्। 'ये समानाः समनसः पितरः' इति स्थालीपाकस्य, 'ये समानाः समनसो जीवाः' इति पेशीनाम्।। ५ ।।

**स्विष्टकृद्धर्मेण वहान्नं वह मांसं जातवेदः पितृभ्य इति जुहुयात्।। ६ ।।**

स्विष्टकृद्धर्मेण कर्तव्यः स्वकाले कर्तव्यः। मन्त्रेण विशेषमाह – 'वहान्नं जातवेदः' इति स्थालीपाकस्विष्टकृदिति मन्त्ररूपाऽन्यथाकृत्या 'वह मांसं जातवेदः' इति त्र्यङ्गिस्विष्टकृदिति। ऋतुतिथ्यादिकं पूर्ववत्।

**वह वपां जातवेदः पितृभ्यो यत्रैतान्वेत्थ निहितान्पराके।**

**मेदसः कुल्या उप तान्स्त्रवन्तु सत्या एषामाशिषः सन्तु कामैः।।**

हे जातवेदः प्राप्तधन जातविज्ञान वा पितृभ्यो वपां वह प्रापय, यत्र पराके परलोके कर्मभिर्निहितान् स्थितानेतान् पितॄन् वेत्थ जानासि। तांश्च त्वया प्रापिता मेदसः कुल्या उपस्त्रवन्तु पितृसमीपे वहन्तु। ताश्चाशिषः प्रकृताः कामैरभिलाषैर्विषयीकृताः सत्याः सन्तु।।

**ये समानाः समनसः पितरो यमराज्ये।**

**तेषां लोकः स्वधानमो यज्ञो देवेषु कल्पताम्।।**

ये समानास्तुल्याकृतयः समनसश्च तुल्यचित्ताः पितरो यमराज्ये पितृलोके तिष्ठन्ति, तेषां स्वधानमोऽस्तु। यज्ञश्चायं तेषामस्तु। तथा तेषां पितॄणां लोको देवेषु मध्ये कल्पतामवकल्पताम्।।

**ये समानाः समनसो जीवा जीवेषु मामकाः।**

**तेषां श्रीर्मयि कल्पतामस्मिंल्लोके शतं समाः।।**

ये मामकाः पितरो जीवा जीवन्तो जीवत्स्वेव मध्येऽवस्थिताः समानाकृतयः समानचित्ताश्चास्मिंल्लोके मनुष्यत्वं प्राप्ताः, तेषां श्रीःमयि कल्पतां शतं समाः शतं वर्षाणि अनेन कर्मणा। वहान्नं वह मांसमिति गतार्थम्।। इत्यष्टकामन्त्रः।। ६ ।।

**।। इति द्विषष्टितमी काण्डिका।। ६२ ।।**



## ।। अथ त्रिषष्टितमी काण्डिका ।।

अष्टकायज्ञादूर्ध्वं श्राद्धमाह -

**हविरर्हानुपवेश्य।। १ ।।**

**पितॄनावाहयिष्यामीत्युक्त्वा।। २ ।।**

**अपयन्त्वसुरा इति द्वाभ्यां तिलैः सर्वतोऽवकीर्य।। ३ ।।**

**एत पितर आगच्छत पितर आ मे यन्त्वन्तर्दधे पर्वतैरिति जपित्वा।।**

**यास्तिष्ठन्त्यमृता वाग्यन्मे मातेत्ययुग्भ्यः पाद्यमानीय।। ५ ।।**

**उदकानि चानयेदेताभिरेव।। ६ ।।**

हविः स्वधां श्राद्धभोजनमर्हन्ति, ये ते हविरर्हाः स्मृत्युक्ता वेदविदादयः पतितादिवर्जाः प्रकृतकर्मयोग्याः। तानुपवेश्य, वैश्वदेवे द्वौ प्राङ्मुखौ पित्र्ये त्रीनुदङ्-मुखानास्तीर्य दर्भासनेषु, ततः पितॄनावाहयिष्यामीति ब्राह्मणेभ्योऽनुज्ञामर्थयते। पितृयज्ञग्रहणं प्राधान्यात्। तेनादौ विश्वेदेवावाहना कार्या। ततश्च आवाहय इति पङ्क्तिपावनैरनुज्ञातः पूर्वं वैश्वदेवविषये अपयन्त्वसुरा इति द्वाभ्यां - 'यवैस्तिलार्थं कुर्वीत वैश्वदेवे न संशयः।' इति परिशिष्टानुसारेण सर्वतो यवविकरणेनासुरावका-शापासनां कृत्वा 'ओमासश्चर्षणीधृतः' इति विश्वेदेवानावाहयेत्। आवाहनमाह्वानम्। अनन्तरं पित्र्ये 'अपयन्त्वसुराः' इत्याभ्यामेव तिलानां सर्वदिक्केन विकरणेनासुरा-वकाशमपास्य पितॄनावाहयेत् 'एत पितरः' इत्यादिभिश्चतुर्भिः। एतन्मन्त्रजप एव ह्यावाहनम्। ततो 'यास्तिष्ठन्ति' इति पञ्चभिः पाद्यं पादार्हमुदकं ब्राह्मणसंख्यया प्रति-पात्रमानयेत्। केभ्यः। अयुग्भ्यो ब्राह्मणेभ्यः, अयुग्मरूपेण ये त्रयः स्थिताः पित्र्ये तदर्थमित्यर्थः। प्रदर्शनार्थं चैतत्। तेन युग्भ्यामपि वैश्वदेवाभ्यां अर्घ्यपाद्यानयनं, पञ्चकापक्षे वा अयुग्भ्य इति विज्ञेयम्। आनीय च ब्राह्मणपात्रेषु सिञ्चेत् 'दक्षिणं पादम्' इति द्वाभ्याम्। तत एताभिरेव पञ्चभिर्ऋग्भिरुदकान्यानयेत्। उदकानीति बहु-वचनलिङ्गात् पात्रभेदेनोदकमानयेदिह, तत्साहचर्यात्पाद्येऽप्येवम्। उदकानि त्वर्घार्हाः पुष्पतिलसुगन्धद्रव्यान्विता आपोऽत्र।। १-६ ।।

**आदित्या रुद्रा वसव इत्येनान्समीक्ष्य।। ७ ।।**

**अग्नौ करवाणीत्युक्त्वा।। ८ ।।**

**अग्निं परिस्तीर्य सोमाय पितृमते स्वधानमोऽग्नये कव्यवाहनाय स्वधा-नम इत्यग्नौ हुत्वा।। ९ ।।**

**ये मामकाः पितर एतद्वः पितरोऽयं यज्ञ इति तिसृभिः कल्पितान्न-मभिमृशति।। १०।।**

अर्घ्यदानानन्तरमादित्या रुद्रा वसव इत्यादिना ब्राह्मणान् समं कृत्वा वीक्षते, ततोऽग्नौ करवाणीति ब्राह्मणान् पृष्ट्वा कुर्वित्यनुज्ञातो दक्षिणाग्रैर्दर्भैः परिस्तीर्य दक्षिणाभिमुखः प्राचीनावीती सोमाय पितृमते स्वधानमोऽग्नये कव्यवाहनाय स्वधा-नम इति प्रधानान्तेनाग्नावाहुतिद्वयं जुहुयात्। पुनरग्निग्रहणं पिण्डपितृयज्ञवद्भूमौ प्रक्षेपो मा विज्ञायि। तदनन्तरमेतद्व इत्यादिभिस्तिसृभिः कल्पितं पात्र एकोद्धृतमन्नैकदेश-मभिमृशेत्। ततः स्तोकस्तोकं पात्रेषु दद्यात्। अन्ये तु पात्रेषु दत्तमिति मन्त्रलिङ्गा-त्पात्रेषु परिशिष्टस्याभिमर्शनमाहुः। यदि पात्रशब्देन भोजनाधारा उच्यन्ते, अथापि ब्राह्मणा उभयथा अतीतपरिवेशनक्रिया प्रतीयते। पूर्वव्याख्यानेऽपि पात्रे देयं हवि-रिति लिङ्गमाहुः।। ७-१० ।।

**एषा व ऊर्गामासु पक्कमिति च क्षीरं घृतं वासिच्य।। ११ ।।**

एषा व ऊर्गिति आमासु पक्कमिति क्षीरं घृतं वा वैकल्पिकं विसृष्टेऽन्ने आसिञ्चेत्। अन्ये तु वाशब्दं समुच्चयार्थं वर्णयन्ति। तेन एषा व ऊर्गिति क्षीरमासिञ्चेत्, आमासु पक्कमिति घृतं मन्त्रलिङ्गात्। वैकल्पिकस्तु पक्षो रूढतरः। पक्कशब्दः क्षीरेऽपि हि युज्यते, तेन मन्त्रलिङ्गमविशिष्टम्।। ११ ।।

**अमुष्मै स्वधानमोऽमुष्मै स्वधानम इति यथालिङ्गमनुमन्त्र्य भोजयेत्।।**

अमुष्मायिति सामान्यनिर्देशेन विशेषो लक्ष्यते। तेन पितृपितामहप्रपितामह-नामानि चतुर्थ्यन्तानि प्रतीयन्ते सगोत्रप्रवराणि कठाय कश्यपगोत्राय पञ्चप्रवराय देवदत्ताय स्वधानम इत्यादीनि। भोजयेदिति भुञ्जानान्प्रयुञ्जीत।। १२ ।।

**प्राश्नन्तु भवन्त इत्युक्त्वा यन्मे प्रकामादिति भुञ्जानान्समीक्ष्याहो-रात्रैर्यद्वा क्रव्यात्स्वधां वहध्वमिति चैताभिः।। १३ ।।**

यन्मे प्रकामादित्यनेन यद्वः क्रव्यादित्यादिभिस्त्रिभिर्भुञ्जानान्समीक्षेत समं कृत्वा। ऋगपेक्षया त्वेताभिरिति निर्देशः।। १३ ।।

**पृथिवी दर्विरिति निपरणं कुर्यात्।। १४ ।।**

पृथिवी दर्विरित्यादिभिस्त्रिभिस्त्रीन् पिण्डान् पितृपितामहप्रपितामहानां दक्षिणाग्रदर्भेषु कल्पयेत् पूजयेच्च यथाचारम्।। १४ ।।

**येऽत्र पितरः प्रेता इति वासांसि निदध्यात्।। १५ ।।**

येऽत्र पितर इत्यादिना पिण्डानामुपरि वासांसि आच्छादनानि निदध्यात्। तानि तु कार्पासतन्तुरूपाणि रूढानि।। १५ ।।

**ऊर्जं वहन्तीरित्यपः परिषिच्य।। १६ ।।**

ऊर्जं वहन्तीरित्यादिना पिण्डेषु परिषिञ्चेत्। ता अपि मन्त्रलिङ्गादन्नस्यन्दिनीः कुर्यात्।। १६ ।।

**मा मे क्षेष्ठेति सतृणमन्नमभ्युक्षेत्।। १७ ।।**

मा मे क्षेष्ठेति मन्त्रेण। सर्वाभ्युक्षणं तु अन्नमन्नमिति मन्त्रगताद्वीप्सानिर्देशाद्गम्यते।। १७ ।।

**विषदमन्नमानीय कच्चित्सम्पन्नं भोरित्युक्त्वा तृप्यन्तु भवन्त इत्युक्त्वा।।**

विषदं निर्मलं मोदकप्रभृति सकलं लेशमुद्धृतं पात्रे समाधाय कच्चित्सम्पन्नं भोरिति वदेत्। ततः सुसम्पन्नमिति ब्राह्मणैरुक्ते शेषमन्नमिति च प्रश्नस्योत्तरे इष्टेभ्य इति च भणिते, अग्निदग्धाश्च ये जीवा इत्यनेन दक्षिणाग्रास्तीर्णदर्भोपरि सर्वसिद्धे सजले अञ्जलिना दक्षिणाभिमुखेन प्राचीनावीतिना प्रक्षिप्ते सत्यनन्तरं 'तृप्यन्तु भवन्तः पितरः' इत्यादिमन्त्रषट्कं पठेत् पितृपितामहप्रपितामहमातृपितामहीप्रपितामहीतृप्तिलिङ्गकम्। अत एव मन्त्रलिङ्गान्निपरणस्वधानमस्करणप्रभृतिषु मात्रादीनां नामोच्चारणसहितमन्त्रक्रियामाहुः। अत्र तृप्यन्तु भवन्तः पितर इति बहुवचनं पितृव्याद्यपेक्षम्। यथोक्तम् -

'भ्रातृणामेकजातानामेकश्चेत्पुत्रवान्भवेत्।
सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत्।।' (९.१८२) इति ।। १८ ।।

**तृप्तानाचामयित्वा यन्मे रामः शकुनिरिति प्रदक्षिणं कृत्वा प्रत्येत्याभि-रमन्तु भवन्त इत्युक्त्वा देवाश्च पितरश्चेत्यनुवाकशेषेणोपतिष्ठते।। १९ ।।**

आचमनमाचामः। तं कृत्वा आचामयित्वा प्रीतान् यन्मे राम इत्यादिना प्रदक्षिणं यथा भवति तथा प्रत्येत्य प्रत्यावृत्य, अभिरमन्तु भवन्त इत्युक्त्वा, अभिरताः स्म इति प्रत्युक्ते सति, देवाश्च पितरश्चेत्यादिना अनुवाकशेषेण ब्राह्मणा-नामुपस्थानं कुर्यात् दक्षिणां दत्त्वा यथाशक्ति। अथ मन्त्रार्थविवृतिः -

**ओमासश्चर्षणीघृतो विश्वे देवास आगत।**
**दाश्वांसो दाशुषः सुतम्।।**
**विश्वे देवास आगत शृणुता म इमं हवम्।**
**एदं बर्हिर्निषीदत।।**

वैश्वदेव्यावनुष्टुभौ। मधुच्छन्दस आर्षम्। हे विश्वे देवा आगत आगच्छत, हे ओमासः, अव रक्षणादिषु पठ्यते, अवन्ति रक्षन्ति तर्पयन्ति वा ये ते ओमासः, औणादिको मप्रत्ययः 'च्छ्वोः शूडनुनासिके च' (६.४.१९) इत्यूठ् 'आद्गुणः' ओमा एव ओमासः 'आज्जसेरसुक्।' चर्षणयो मनुष्याः, तान् धारयन्ति चर्षणीधृतः। दाश्वांसो दाशुषः सुतं, 'दाशृ-दाने' इत्यस्य दाश्वानिति निपातः 'दाश्वान्साह्वान्मीढ्वांश्च' (६.१. १२) इति, दाशुषो दानशीलस्य यजमानस्य सुतं पुत्रं दाश्वांसः दानशीलाः। यजमानसुतं ददति ये, ते सम्बोध्यन्ते। हे देवा आगच्छत इमं मे मम हवमाह्वानं शृणुत आकर्णयत, आकर्ण्याह्वानमागत्य च एदं बर्हिर्निषीदत इदं बर्हिरास्तीर्णं स्थितमतोऽत्र आ निषीदत उपविशत।

**अपयन्त्वसुराः पितृरूपा ये रूपाणि प्रतिमुच्याचरन्ति।**
**परापुरो निपुरो ये हरन्त्यग्निष्टांल्लोकात्प्रणुदत्वस्मात्।। १ ।।**
**अपेतो यन्त्वसुराः ये पितृषद।**
**उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः।**
**असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु।। २ ।।**

तूखानामार्षम्। अनुवाकद्वयेऽपि पितरो देवताः। आद्या वर्धिनी, उदीरता-मिति त्रिष्टुप्। असून् रान्तीत्यसुरा दैत्या यज्ञविध्वंसकाः। ते अपयन्तु अपगच्छन्तु

अपसरन्तु, इतः स्थानात् पलायन्तामित्यनेन मन्त्रद्वयेन यवतिलविकरणेन बाध्यमानाः सन्तः। कीदृशाः। ये रूपाणि स्वानि प्रतिमुच्य पितृरूपा भूत्वा मायया आचरन्ति चेष्टन्ते। परापुरो निपुरो ये हरन्ति, परान् पृणन्तीति परापुरः 'पृञ्-तर्पणे कान्तौ च' इत्यस्य परापूर्वस्य क्विपि 'उदोष्ठ्यपूर्वस्य' (७.१.१०२) इत्युत्वरपरत्वे शसि परापुर इति रूपम्। एवं निपूर्वस्य निपुर इति। तत्र परापुर इति ब्राह्मणार्थं हविरुच्यते, निपुर इति तु पिण्डार्थम्। परापुरो निपुरश्च हविर्विशेषान् ये मायया हरन्ति, तान् असुरान् अस्माल्लोकादग्निः प्रणुदतु अपसारयतु, आस्तां तावद्यज्ञभूमिः, लोकादप्यस्माद्भूमि-लोकाख्यादपसारयतु अग्निरसुरानित्यर्थः। अपेतो यन्त्वसुरा ये पितृषदः, पितॄन् सीद-न्त्युपसर्पन्ति पितृदत्तहविषोऽपहाराय ये ते पितृषद इतः स्थानादपयन्त्वसुराः। उदीरतामवर इति त्रिस्थानानां पितॄणां यज्ञभूमावागमनमनया आशास्यते। वसवो रुद्रा आदित्याश्च भूम्यादिस्थाना यथाक्रमं पितृपितामहप्रपितामहाः। तथाच श्रुतिः - 'वसवः पितरो रुद्राः पितामहा आदित्याः प्रपितामहाः।' इति। अवरे अवरस्थानाः पितरो वसुरूपा उदीरतामागच्छन्तु। उत्परासः, उदित्युपसर्गः ईरतामित्यनेनानुवृत्तेन संबध्यते, परे एव परासः परस्थाननिवासिनः आदित्यरूपाः प्रपितामहाः उदीरता-मागच्छन्तु। उन्मध्यमाः, मध्यमाश्चान्तरिक्षवासिनः पितामहा रुद्ररूपा उदीरताम्। कीदृशाः। सोम्यासः सोममर्हन्तीति सोम्याः, तर्हि महेन्द्रः प्रातःसवनादिषु सोमं वहति, सोम्या एव सोम्यासः। असुं य ईयुः, य इहलोके प्राणांस्त्यक्त्वा परलोके असुं प्राणमीयुः प्राप्ताः पुनः कर्मवशेन प्राणिनः सम्पन्ना। अवृकाः अकर्तना अनुप-घातका इति यावत्। ऋतज्ञाः सत्यज्ञाः यज्ञज्ञा वा। ते नोऽवन्तु पितरो हवेषु, ते पितरस्त्रिस्थाना अपि हेवेष्वाह्वानेषु सत्सु नः अस्मानागच्छन्तु रक्षन्तु वा।

**एत पितरो मनोजवैरागच्छत पितरो मनोजवैः।**
**ये निखाता येऽपरुप्ता गर्भाद्येऽवपेदिरे।**
**सर्वांस्तानग्न आवह पितॄन्हविषे अत्तवे।।**
**आगच्छत पितरो मनोजवसः पितरः पितरः शुन्धध्वम्।**
**आ मे यन्तु पितरो भागधेयं विराजाहूताः सलिलात्समुद्रात्।**
**अस्मिन्यज्ञे सर्वकामांल्लभन्ता मक्षीयमाणानुपजीवन्त्वेनान्।**
**अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या।**

**दिवा दिग्भिरनन्ताभिरन्तरन्यान्पितॄन्दधे।।**

**अन्तर्दध ऋतुभिरहोरात्रैः ससन्धिकैः।**

**अर्धमासैश्च मासैश्चान्तरन्यान्पितॄन्दधे।।**

ये निखाता इत्यनुष्टुप्। विकरभागिनामाह्वानं क्रियते येभ्यः 'अग्निदग्धाश्च ये जीवाः' इति भूमौ विकरो दीयते। अन्तर्दध ऋतुभिरित्यनुष्टुप् परपित्रवकाशनिवारणी। हे पितरः एत आगच्छत। कैः । मनोजवैः मनस इव जवो वेगो येषां तैरेव विमानादिभिः। आगच्छतेत्यत्राप्यागम एवार्थः, त्वरातिशयार्थं तु पुनर्वचनम्। ये निखाताः, न तु दग्धाः, भूमौ खनिं कृत्वा निहिताः - 'ऊनद्विवार्षिकं प्रेतं निखनेयुः सजातयः।' (मनु.५.६८) इति। येऽपरुप्ताः, जले क्षिप्ताः। ये च गर्भे एव सन्तोऽवपेदिरे अवपन्ना नष्टाः विस्रुताः, यदुद्देशेनोच्यते - 'गर्भस्रावे गर्भसम्मिता रात्रयः।' इति। तान् सर्वान् पितॄन् हे अग्ने आवह प्रापय। किमर्थम्। हविषे अत्तवे हविरत्तुं भक्षयितुम्। हविष इति व्यत्ययेन द्वितीयार्थे चतुर्थी। अत्तवे इति तुमर्थे तवेप्रत्ययः।

हे पितरो मनोजवसः मनोवेगयुक्ताः सन्त आगच्छत। हे पितरः शुन्धध्वमिदं हविः शुद्धं पवित्रं कुरुत। मे मम सम्बन्धि भागधेयं हविर्भागं पितर आयन्तु आगच्छन्तु विराजेति विराडग्निर्यजमानो वा, तेनाहूताः सर्वे समागच्छन्त्वित्यर्थः। आगत्य चास्मिन् पितृयज्ञे सर्वे आकारिताः सन्तः सर्वान् कामान् काम्यमानान् हविर्विशेषांल्लभन्तां प्राप्नुवन्तु। प्राप्य चैनान्कामान् अक्षीयमाणान् अन्यैरसुरादिभिरनुपभुक्तानुपजीवन्तु भक्षयन्तु। प्राप्तमपि हि कश्चिद्भोक्तुं न लभते, तदर्थं वा अभ्यर्थना।

अहमन्यान् पितॄन् परपितॄनन्तर्दधे अन्तर्हितान् व्यवहितान् करोमि। कैरन्तर्दधे। कया च। पृथिव्या महत्या। तथा दिवा स्वर्गेण, दिग्भिः पूर्वादिभिरनन्ताभिर्व्यापिनीभिः अहमन्यान्पितॄनन्तर्दधे पित्रन्तराणि। तथा ऋतुभिर्वसन्तादिभिः अहो रात्रैर्दिवसैः ससन्धिकैः ससंध्यैरर्धमासैर्मासैश्चान्यान् पितॄनन्तर्दधे। वाक्यचतुष्टयेन मन्त्रचतुष्कमेतदाह्वाने।

पर्वतैर्मेर्वादिभिः।

**यास्तिष्ठन्ति या धावन्ति या अद्वग्धाः परिसस्रुषीः।**

**अद्भिर्विश्वस्य धर्त्रीभिरन्तरन्यान्पितॄन्दधे।।**

**अमृता वागमृता आपोऽग्निर्वाचोऽमृतं तत्त्रिवृदेकधाम ताभिर्मत्प्रत्ताभिः स्वधया मदध्वमिहास्मभ्यं वसीयोऽस्तु देवाः।।**

**यन्मे माता प्रलुलोभ यच्चचारानुव्रतम्।**
**तन्मे रेतः पिता वृङ्क्ता माभिरन्योऽवपद्यताम्।।**
**यन्मे पितामही प्रलुलोभ यच्चचारानुव्रतम्।**
**तन्मे रेतः पितामहो वृङ्क्तां माभिरन्योऽवपद्यताम्।।**
**यन्मे प्रपितामही प्रलुलोभ यच्चचारानुव्रतम्।**
**तन्मे रेतः प्रपितामहो वृङ्क्तां माभिरन्योऽवपद्यताम्।।**

यास्तिष्ठन्तीत्यनुष्टुप्, यन्मे मातेति च। यास्तिष्ठन्ति स्थावररूपाः तडागादिगाः, या धावन्ति नद्यादिगताः, या अद्रुग्धाः अनुपहिंसिता नित्या मेध्याः, या परिसस्रुषीः परिस्रवन्त्यो ह्रदप्रभवाः, ताभिः सर्वाभिर्विश्वस्य लोकत्रयस्य धर्त्रीभिः पाद्यार्थ-माह्रियमाणाभिरन्यान् पितॄन् अन्तर्दधे।

अमृता वाक्, वाक् स्तनयित्नुरूपा अमृता अविनाशिनी। एवमापोऽपि अमृता मेध्याः। अग्निर्वाचोऽमृतं, मेध्याया वाचोऽग्निर्वैद्युतोऽमृतं तत्कृतत्वात्तस्याः तत्त्रिवृदेकधाम, तदेतत् त्रिवृत् त्रयमेकधाम एकाश्रयं, एको हि मेघस्त्रयस्याश्रयः। कस्य त्रयस्य। अपां वाचोऽग्नेः। ताभिर्मत्प्रत्ताभिः स्वधया मदध्वं, हे देवा ऋत्विजः पितरो वा अद्भिः पाद्यादिभिर्मया प्रकर्षेण दत्ताभिर्मदध्वं तृप्यत स्वधया वा। स्वधया हि पितरो माद्यन्ति, यथोक्तम् -

'यथा सुराणाममृतं पितॄणां च स्वधा यथा।
सुधा यथा च नागानां तथा गङ्गाजलं नृणाम्।।' इति।

इहास्मभ्यं वसीयोऽस्तु देवाः, हे देवाः इहलोके अस्मदर्थं वसीयो भवतु यज्ञोपयोग्यमन्नादिकमतिशयेन वशगतं सुलभमस्तु।। स्त्रीव्यभिचाराद्दोषाशङ्कायां भिषजितुमाह यन्मे मातेति।

'यादृशं भजते हि स्त्री सूते गर्भं तथाविधम्।।' (मनु० ९.९) इति हि स्मरणात् क्षेत्रमप्रधानम्। श्रुतिरपि बीजप्राधान्यमाह -

'अप्रमत्ता रक्षत तन्तुमेनं मा वा परे क्षेत्रे बीजमवाप्सुः।
जनयितुः पुत्रो भवति संप्रदाये मोघं लभते क्षेत्रे तन्तुमेतम्।।'
(आप.ध.सू.२.६.१३.६)

इति। यन्मे माता प्रलुलोभ परपुरुषे आध्यानादिकं चकार, एतदेव च अननुव्रतं

कुत्सितं व्रतं चचार चरितवती, तद्रेतो मम दोषभूतं पिता वृङ्क्तां वर्जयतु अपसारयतु। आभिश्च पाद्यादिभिरन्यो मात्रा यो ध्यातः, स मावपद्यतां आगान्मासौ हविर्ग्रहीतुम्। माभुरन्योवपद्यतामिति केचित्पठन्ति, तत्र आभुशब्दो मुधानिष्फलादिपर्यायः, मा निष्फलमागादन्यः। गतार्थमन्यत्।

**आदित्या रुद्रा वसवो मे सदस्यास्तेषां सख्ये स्वधया मदध्वम्।**

**स्वधां वहध्वममृतस्य योनिं यात्र स्वधा पितरस्तां भजध्वम्।।**

त्रिष्टुप्। हे पितरः, आदित्या रुद्रा वसवश्च मे मम सदसि भवाः अत्र यज्ञभूमौ स्थिताः सहचरा मित्राणि तेषामादित्यादीनां सख्ये वर्तमाना यूयं स्वधया मदध्वं तैः सह, स्वधां वहध्वमिति स्वधां भजध्वम्। कीदृशीम्। अमृतस्यामरणधर्मस्य योनिं कारणम्। हे पितरः अत्र परलोके या योग्या स्वधा, तां भजध्वं सेवध्वम्। पितॄनुद्दिश्य यत्त्यज्यते अन्नं, सा स्वधेत्युच्यते।।

**सोमाय पितृमते स्वधानमः।**

**अग्नये कव्यवाहनाय स्वधानमः।।**

सोमः पितृमान्देवता, अग्निः कव्यवाहनश्च। तद्यागेन हि पितृतृप्तिः श्रूयते - 'तत्सोमं पितृमन्तं यजन्ति सोमपास्तत्पितॄन्यजन्ति द्वे वा अग्नेस्तन्वा हव्यवाहन्या देवेभ्यो हव्यं वहति कव्यवाहन्या पितृभ्यः।।' इति। स्वधानम इति सम्प्रदानार्थीयो निपातसमुदायः। द्वावपिच स्वधानमःशब्दावन्ननामसु पठ्येते। अथवा नमोऽन्नं हविः स्वधा संपद्यतामग्नये देयमित्यर्थोऽनुमन्तव्यः।।

**ये मामकाः पितरः पार्थिवासो ये अन्तरिक्षे दिवि ये समुद्रे।**

**वाचमास्वा अमृता बभूवुस्तेऽस्मिन्यज्ञे सर्वकामांल्लभन्ताम्।।**

**एतद्वः पितरो भागधेयं पात्रेषु दत्तममृतं स्वधावत्।**

**अक्षीयमाणमुपजीवन्त्वेनं मया प्रत्तं स्वधया मदध्वम्।।**

**अयं यज्ञः परमो यः पितॄणां पात्रे देयं हविरद्यमग्नेः।**

**मनश्च वाक्च पितरो वः प्रदानैरश्विभ्यां प्रत्तं स्वधया मद्ध्वम्।।**

ये मदीयाः पितरः पृथिव्यामन्तरिक्षे दिवि च व्यवस्थिताः कर्मवशेन मानुषादिवाय्वादितारादिरूपत्वं प्राप्ताः, समुद्रे च जलचररूपत्वमापन्नाः, ये च सूक्ष्मां स्वप्रकाशां

परब्रह्मरूपां निर्विभागां वाचमाप्त्वा प्राप्य अमृता अमरणधर्मका बभूवुः सम्पन्नाः, ते सर्वे अस्मिन् पितृयज्ञे सर्वकामांल्लभन्तामुद्देश्याः सम्पद्यन्ताम्।

हे पितरः एतद्वो युष्माकं भागधेयमेव भागः। किं तत्। यत्पात्रेषु दत्तं, पात्राण्यत्र विद्वांसो ब्राह्मणा मित्राणि वा, अमृतममरणकारि अमृतमिव वा, स्वधावत् स्वधाशब्दयुक्तम्। अत एनं हविर्भागं मया प्रकर्षेण दत्तं पितृगणा उपजीवन्तु भुञ्जताम्। अनया स्वधया हे पितरो मदध्वम्।

अयमेव परम उत्कृष्टो यज्ञो यः पितॄणाम्। अत्र हि हविः पात्रे देयं, पात्रेषु विद्वद्ब्राह्मणेषु दियते न त्वग्नौ हुत्वा भस्मीभावमापाद्यते, अपात्राणि वा पात्राणि तेषु स्थाप्यते। अग्नेश्च जाठरस्याद्यमदनीयं भवति। किञ्च अत्र यज्ञे हे पितरः, मनसा वाचा प्रकृष्टैश्च दानप्रकारैर्दानक्रियया अरिक्तभावापन्नैरुदकदानादिभिः प्रकर्षेण दत्तं हविर्वो युष्मभ्यमश्विभ्यां च देवताविशेषाभ्यां देवभिषग्भ्यां प्रत्तमिति स्तुतिः, हस्तौ वाश्विनौ तौ हि सर्वक्रियां व्याप्रुतः। हे पितरः ईदृश्या स्वधया मदध्वम्।

**एषा व ऊर्गेषा वः स्वधा तामत्त च पिवत च मा च वः क्षेष्ठाः येह पितर ऊर्ग्देवता च तस्यै वयं ज्योग्जीवन्तो भूयास्म।।**

**आमासु पक्वममृतं निविष्टं मया प्रत्तं स्वधया मदध्वम्।**
**वैश्वदेवे हविषि पिन्वमानं विश्वेषु भूतेषु पृथङ्निविष्टम्।।**

हे पितरो विश्वे देवाश्च एषा भक्तादिका वो युष्माकं ऊर्क् अन्नं, एषा च घृतदधिरूपा क्षीररूपा वा स्वधा उभयरूपापि वा ऊर्क् बलं स्वधा च तामन्नरूपामत्त भक्षयत, क्षीरघृतरूपां तु पिबत। मा च इयमपि वः युष्माकं क्षेष्ठाः क्षयं विनाशं मा गात्। हे पितरः या इह यज्ञे ऊर्क् अन्नं देवता पितृरूपा, तस्यै तदर्थं वयं ज्योक् चिरकालं जीवन्तो भूयास्म चिरकालं यागं कुर्यामेत्यर्थः।

आमासु अपक्वासु ओषधिषु गोषु मांसादिसमूहात्मिकासु पक्वं भोगयोग्यतां प्राप्तं क्षीरं घृतं वा निविष्टं स्थितं अमृतमिव, तत् मया युष्मभ्यं दत्तम्। तेन स्वधाभूतेन मदध्वम्। वैश्वदेवे हविषि पिन्वमानं, मिश्रीभवत् वैश्वदेवग्रहणं प्राथम्यात् वैस्वदेवे पित्र्ये च हविषि अन्तर्भवत् क्षीरं घृतं वा। विश्वेषु सर्वेषु भूतेषु स्त्रीप्रभृतिषु सक्षीरत्वेन पृथक् निविष्टमिति क्षीरघृतस्तुतिः।

**अमुष्मै स्वधानमोऽमुष्मै स्वधानमः।।**

नमोऽन्नं पितृपितामहप्रपितामहानां स्वधा भवत्वित्यर्थः।।

एतदनन्तरं प्राश्नन्तु भवन्त इत्यनुमतं कृत्वा भोजयेत्। चतुर्थ्यन्तपितृपितामह-प्रपितामहानां नामयोगेन च स्वधानमस्कारः पृथिवी ते पात्रमित्यनेन सघृतमन्नमभिमृश्य तदन्ते कर्तव्यः। ततोऽनुमतदानम्।

**पृथिवी ते पात्रं द्यौरभिधानं ब्राह्मणस्य मुखे अमृतं जुहोम्यूर्गस्यूर्जो दा ऊर्जं मे देह्यूर्जं मे धेह्यन्नं मे देह्यन्नं मे धेह्यक्षितिरसि मा मे क्षेष्ठामुत्रामुष्मिंल्लोक इह च।।**

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।**

**समूढमस्य पांसुरे।। विष्णो हव्यं रक्षस्व विष्णो कव्यं रक्षस्व।।**

ते सघृतान्ना पृथिवी मही तव पात्रं पार्थिवानि पात्राणि द्वयरूपाणि वर्णितानीत्यर्थः। अभिधानं च तव दिव्यन्तरिक्षे वर्तमानः शब्दो मन्त्रादिस्तव वाचक इत्यर्थः। अत एवम्भूतममृतममरणकारि पीयूषसदृशं ब्राह्मणस्य मुखे त्वां जुहोमि। असि त्वमूर्क् अन्नम्, ऊर्जो दाः ऊर्जः बलस्य त्वं दाता। अत ऊर्जं मे मह्यं देहि, तथोर्जं धेहि विधेहि कुरु बलमुत्पाद्य मह्यं प्रयच्छेत्यर्थः। एवमन्नं देहि अन्नं मे धेहीति। अक्षितिरसि, असि त्वमक्षितिरक्षयधर्मकं प्रवाहरूपेण। अतो मा मे क्षेष्ठाः विच्छेदस्तव मा भूदमुत्र मद्गृहे, इह इहलोके अत्र जन्मनि अमुष्मिंश्च परलोके जन्मान्तरे च मा मे क्षेष्ठाः।

इदं विष्णुः प्रजापतिः विचक्रमे पराक्रान्तवान्, त्रेधा लोकत्रयात्मना पदं निहितवान्। चतुर्थपदमस्य पांसुरे अविद्यारजसा च्छन्ने जीवात्मगणे समूढं निमग्नं जीवात्मत्वेनैव व्यामूढमतथापि तथा सर्वजीवात्मसु स्थितमित्यर्थः।। अत उच्यते हे सर्वमय विष्णो हव्यकव्ये रक्षस्व गोपाय राक्षसादिभ्यः।।

**यन्मे प्रकामादुत वाप्यकामादसमिद्धे ब्राह्मणेऽब्राह्मणे वा।**
**यत्स्कन्दति निर्ऋतिं पाथ उग्रामग्निष्टत्सर्वं शुन्धतु।।**
**उशन्तस्तेन पितरो मदन्तां तेन पूतेन देवता मादयन्ताम्।।**
**अहोरात्रैः ससन्धिकैरर्धमासैर्मासैर्ऋतुभिः परिवत्सरैः।**
**संवत्सरस्य क्लृप्तीभिरन्तरन्यान्पितॄन्दधे।।**
**यद्वः क्रव्यादजहादेकमङ्गं पितृलोकं जनयञ्जातवेदाः।**

**तद्व एतेन पुनराप्यायतामरिष्टासः पितरो मादयध्वम्।।**

**स्वधां वहध्वममृतस्य योनिं यात्र स्वधा पितरस्तां भजध्वम्।**

यन्मे मम पाथः अन्नं निर्ऋतिं भूमिं स्कन्दति पतति दानवमातरं वा गच्छति अविधानोपहतत्वाद्गन्तुमिच्छति, तत् सर्वमग्निः शुन्धतु पवित्रीकरोतु। तेन च शोधितेन पितरो मदन्तां हृष्यन्तु। किं कुर्वन्तः। उशन्तः कामयमानाः। किञ्च। तेनानेन पूतेन पवित्रेण सता देवता अपि मादयन्तां विश्वेदेवात्मिका मादयन्तामिति स्वार्थे णिच् माद्यन्तु। रामो राज्यमकारयदित्यादौ हि स्वार्थे णिच् दृश्यते। कीदृशीं निर्ऋतिम्। उग्रां भूमिपक्षे दुष्टलेपादिना अपवित्रभूतां, दानवमातृपक्षे तु प्रचण्डाम्। अशुद्धत्वे कारणमाह - प्रकामात् श्रद्धातिशयात् बाहुल्यात् वा दीयमानं स्कन्दति पतति भूमौ निर्ऋतौ वा गच्छति ब्राह्मणैरुपेक्षिततत्वात्, अकामाद्वा श्रद्धाभावाद्दीयमानं निर्ऋतिं गच्छति, असमिद्धे वा ब्राह्मणे मूर्खे दुराचारदूषिते वा यद्दीयते प्रच्छन्नत्वादब्राह्मणे वा, तत् निर्ऋतिं स्कन्दति तदुत्संसर्गोऽपवित्रीभूतमयोग्यं करोतीत्यर्थः। अहोरात्रैरिति अन्तर्दधे पर्वतैरित्यादिना गतार्थम्। संवत्सरस्य क्लृप्तयो याभिः संवत्सरः कल्प्यते परिच्छिद्यते, तास्तु घटिकानालिकादयः।

यद्वः क्रव्यादजहादिति त्रिष्टुप्। इह प्रेतानां यदङ्गं श्मशानाग्निना दह्यते, तत् परलोकस्थानां विशेषकर्मवशेन उत्पद्यते। यत्तु अदग्धं, न तज्जायत इति, तेन विकलानि पितृशरीराणि भवन्ति। तत्पूरणायेदमुच्यते – हे पितरो वो युष्माकं यदङ्गं क्रव्यादजहात् तत्याज न ददाह, क्रव्यं अपक्कं मांसमत्तीति क्रव्यात् श्मशानाग्निः, एकग्रहणमुपलक्षणार्थम्, तत् जातवेदाः जातप्रज्ञानो जातधनो वा वैदिकक्रियादिना आहवनीयादिः पुनरप्येतेन कर्मणा आप्यायतां युष्माकं पूरयतु वर्धयतु। अतश्च हे पितरो यूयमरिष्टासः अरिष्टाः अनुपहिंसिताः सन्तोऽनेन कर्मणा मादयध्वम्। किं कुर्वन् जातवेदा विकलमङ्गमाप्याययतु। पितृलोकं जनयन्, पितृशरीराणि उत्पादयन्, हेतौ शतृप्रत्ययः, पितृलोकजननाय, अर्जयन्वसतीतिवत्। हे पितरः स्वधां वहध्वं प्राप्नुत। कीदृशीम् अमृतस्य योनिम्, अमरणधर्मत्वस्य कारणम्। या अत्र परलोके योग्या स्वधा, तां भजध्वं विभजध्वं वा अनुचरेभ्यः। यदपेक्षयोच्यते निपरणे 'ये चात्र त्वानु' इति।

नारायणस्यार्षं 'मधु वात ऋतायते' इति त्र्यचं पठेत्, ओंभुर्भुवःस्वस्तत्सवितुरिति च त्रिः। दक्षिणाग्रान्दर्भानास्तीर्य यास्तिष्ठन्ति० इत्यनेन भूपृष्ठे दर्भतिलोदकेनावनेजनं स्वधा। उशन्तस्त्वा हवामह० इति पठेत्। तिलास्तोयं०।

**पृथिवी दर्विरक्षिता तृप्तिः स्वधानुपदस्ता तां पृथिवीं दर्विमक्षितां तृप्तिं स्वधामनुपदस्तामग्निरिव पृथिवीमुपजीवासौ ये चात्र त्वान्वेषा ते स्वधा।। १ ।।**

**अन्तरिक्षं दर्विरक्षिता तृप्तिः स्वधानुपदस्ता तामन्तरिक्षं दर्विमक्षितां तृप्तिं स्वधामनुपदस्तां वायुरिवान्तरिक्षमुपजीवासौ ये चात्र त्वान्वेषा ते स्वधा।। २ ।।**

**द्यौर्दर्विरक्षिता तृप्तिः स्वधानुपदस्ता तां दिवं दर्विमक्षितां तृप्तिं स्वधामनुपदस्तां सूर्य इव दिवमुपजीवासौ ये चात्र त्वान्वेषा ते स्वधा।। ३ ।।**

एतैस्त्रिभिः पितृपितामहप्रपितामहानां त्रीन्पिण्डान् निपृणाति मन्त्रलिङ्गात्। अग्निवायुसूर्याश्चात्र लोकत्रयस्थाः पित्रादित्वेन भाव्यन्ते, पिण्डेषु च पृथिव्यादिबुद्धिः क्रियते।

इयं पृथिवी दर्विरिवान्नसाधनत्वसामान्यात् दारयति वा दोषान् कर्माद्यनुष्ठानद्वारेण विदुषामिति दर्विः पृथिवी अक्षिता अविनाशिनी इतरदर्विविलक्षणा, तृप्तिः प्रीतिहेतुत्वात्, स्वधा प्रथमपिण्डरूपा पृथिवी, अनुपदस्ता 'दसु-उपक्षये' अनुपहिंसिता, तां पृथिवीं दर्विमक्षितां तृप्तिं स्वधामनुपदस्तां पृथिवीं प्रथमपिण्डरूपां उपजीव भुङ्क्ष्व हे पितः। क इव। अग्निरिव, यथा अग्निः पृथिवीमुपजीवति भौमस्तदधिपतित्वात्, तद्वत्। ये चात्र त्वानु, ये चात्र परलोके त्वामनु स्थिताः तव अनुचरभूताः, तेऽप्युप- जीवन्तु पिण्डमेतत् सानुचर उपजीवेत्यर्थः। एषा स्वधा भवत्विति शेषः।। अनेनैवेतरौ गतार्थौ। अन्तरिक्षं दर्विस्तमसो विदारणादन्नसाधनत्वाद्वा। द्यौर्दर्विर्दुःखनिवारणात् स्वर्गस्य निरतिशयसुखात्मकत्वात्।

**अत्र पितरो मादयध्वम्। येऽत्र पितरः प्रेता युष्मांस्तेऽनु य इह पितरो जीवा अस्मांस्तेऽनु येऽत्र पितरः प्रेता यूयं तेषां वसिष्ठा भूयास्थ, य इह पितरो जीवा वयं तेषां वर्षिष्ठा भूयास्म।। एतानि वः पितरो वासांस्यतो नोऽन्यत्पितरो मा यूढ्वं वीरान्नः पितरो दत्त।।**

हे पितरः ये प्रेता मृताः सन्तः अत्र परलोके स्थितास्ते युष्मान् अनुसरन्तु युष्मदनुयायिनो भवन्तु। हे पितरो ये प्रेताः सन्तः इहलोके स्थितास्ते अस्माननुसरन्तु,

ये परलोके स्थितास्तेषां मध्ये यूयं वसिष्ठाः अतिशयेन वसुभिर्धनैः पूर्णा भूयास्थ सम्पद्यध्वम्। हे पितरो ये जीवाः स्थिताः इह अस्मिंल्लोके स्थितास्तेषां मध्ये वयं वर्षिष्ठा वर्षैर्धनादिभिर्वा वृद्धतमा भूयास्म सम्पद्येमहि। वः युष्मभ्यं एतानि वासांसि कार्पासतन्तुरूपाणि दत्तानि। अतो नोऽन्यत्पितरो मा यूढ्वम् 'यु-मिश्रणे' यदन्यददत्तं भृत्याद्यर्थं परिशेषितमन्नादिकं, तत् स्वकीयेन मिश्रितं कृत्वा मा हार्षुः। हे पितरो नोऽस्मभ्यं वीरान् पुत्रान् दत्त।

**ऊर्जुं वहन्तीरमृतं घृतं मधु पयः कीलालं परिस्रुतं स्वधा स्थ पितॄन्मे तर्पयत।।**

आप उच्यन्ते – हे आपः स्वधा स्थ पितॄणां हविर्भवथ, ततश्च मम पितॄन् तर्पयत। किं कुर्वत्यः। ऊर्जमन्नं बलममृतममरणकारि पीयूषं वा वहन्त्यः प्रापयन्त्यः, घृतं मधु कीलालं चान्नरसं सद्योजातं परिस्रुतं क्षीरं च वहन्त्यः। अद्भ्यो हि सर्वं जायते इति सर्वं तत्र शक्त्यात्मना स्थितम्।

मन्त्रलिङ्गाच्च घृतमिश्राभिरद्भिरभिषेकः पिण्डानां कर्तव्यः।

**मा मे क्षेष्ठा बहु मे पूर्तमस्तु ब्रह्माणो मे जुषन्तामन्नमन्नम्।**
**सहस्रधारममृतोदकं मे पूर्तमस्त्वेतत्परमे व्योमन्।।**

हे अन्न मे मम मा क्षेष्ठा क्षयं मा गाः अविच्छिन्नं भव। पूर्तं वैदिकं कर्म श्राद्धादिकं बहुविपुलं विपुलबलं च अस्तु भवतु। ब्रह्माणो ब्राह्मणा ममान्नमन्नं सर्वस्य हविष्यान्नस्य अंशं जुषन्तां सेवन्तामदन्तु, सहस्रधारं सहस्रशाखं सहस्रधारं वा अपरिमितस्थितिकमित्यर्थः। कीदृशम्। अमृतोदकं अमृतमिवोदकं व्यञ्जनं क्षीरादिकं यस्य तत्। यत्पूर्तं यज्ञोपयोगि, तत् परमे व्योमन्नस्तु परब्रह्मप्राप्तये भवतु। एतच्च भुक्तपरिशिष्टमभ्युक्षणं परमे व्योम्नि वर्तमानं पवित्रं भवतु।

**अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम।**
**भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्।।**

स्पष्टम्।

**यन्मे रामः शकुनिः श्वापदश्च यन्मेऽशुचिर्मन्त्रकृतस्य प्राशत्। वैश्वानरः सविता तत्पुनातु तस्मिन् पूते देवता मादयन्ताम्।। तेन पूतेन पितरो मदन्ताम्।।**

मन्त्रेण कृतं मन्त्रकृतं पित्र्यं हविः। तस्यांशं यदशुचिः प्राणिपाशः प्राशत्

प्राश्नादुच्छिष्टं कृत्वा दूषितवान् अलक्षितः, तद्वैश्वानरः औपसदोऽग्निः पुनातु पवित्रं करोतु। तस्मिंश्च पूते पवित्रिते सति देवता विश्वेदेवा माद्यन्तु। पितरश्च तेन पूतेन माद्यन्तु। कोऽसावशुचिः। रामः शकुनिः श्वापदश्च, रामः काकः शकुनिः पक्षीति सामान्यविशेषसमानाधिकरणः, शुन इव पदं यस्य स श्वापदो मार्जारादिः।

**अभिरमन्तु भवन्तोऽभिरताः स्मः। देवाश्च पितरश्चैतत्पूतमेवोपजीवन्तामस्मिंल्लोके मां धत्त जीवेम शरदः शतं पश्येम शरदः शतम्।**

**अथास्मभ्यमूर्जुं धत्तं ज्योतिर्धत्ताजरं न आयुर्यदन्तरिक्षं पृथिवीमुत द्यां यत्पितरं मातरं वा जिहिंसिमाग्निर्नस्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता।।**

देवा विश्वे देवाः पितरः पितृपितामहप्रपितामहादयः एतत्कर्म पवित्रमुपजीवन्तां भुञ्जताम्। हे देवाः अनेन कर्मणा प्रीताः सन्तोऽस्मिंल्लोके मां धत्त चिरं स्थापयत दीर्घायुष्कं मम कुरुतेत्यर्थः। शरदः शतं जीवामो वयं त्वत्प्रसादात्। एवं वर्षशतं पश्येम अविकलेन्द्रियाः स्यामेत्यर्थः। अथ तथा अस्मभ्यमूर्जं बलमन्नं च ज्योतिर्दीप्तं ब्रह्मवर्चसादिकमजरं चाविनाशि दीर्घमायुः धत्त ददत। किञ्च। यदन्तरिक्षमन्तरिक्षस्थं पक्ष्यादिकं पृथिवीस्थितं च, स्वर्गस्थितं देवताविशेषं जिहिंसिम हिंसितवन्तो वयमनुपकृतवन्तोऽपूर्णकर्मानुष्ठानेन अशुद्धसङ्कल्पादिना विराधितवन्तः, एवं पितरं मातरं वा यज्जिहिंसिम विराधितवन्तस्ततो यदेनः पापमुत्पन्नं, तस्माद्गार्हपत्यसदृशोऽग्निरस्मान्प्रमुञ्चतु वियोजयत्। अन्यान्यपि यानि पापानि चकृम वयं कृतवन्तस्तेभ्योऽपि विमुञ्चत्वयमग्निरस्मान्।

**तृप्यन्तु भवन्तः पितरो ये च भवतोऽनु ये चास्मास्वाशंसन्ते तृप्यत।**
**तृप्यन्तु भवन्तः पितामहा ये च भवतोऽनु ये चास्मास्वाशंसन्ते तृप्यत।**
**तृप्यन्तु भवन्तः प्रपितामहा ये च भवतोऽनु ये चास्मास्वाशंसन्ते तृप्यत।**
**तृप्यन्तु भवत्यो मातरो याश्च भवतीरनु याश्चास्मास्वाशंसन्ते तृप्यत।**
**तृप्यन्तु भवत्यः पितामह्यो याश्च भवतीरनु याश्चास्मास्वाशंसन्ते तृप्यत।**
**तृप्यन्तु भवत्यः प्रपितामह्यो याश्च भवतीरनु याश्चास्मास्वाशंसन्ते तृप्यत तृप्यत तृप्यत।**

**अमुकस्यामुकगोत्रस्य दत्तमन्नमक्षयमस्तु स्वधा।।**

अस्मान्मन्त्रलिङ्गात् षण्णां श्राद्धम्। हे पितरो भवन्तस्तृप्यन्तु। ये च भवतोऽनु, येऽपि युष्मदनुचरास्ते तृप्यन्तु। तृप्यन्तु इति वचनं पितृव्याद्यपेक्षमित्युक्तम्। एवं पितामहादिष्वपि यथायथं योजनीयम्। ये चास्मास्वाशंसन्ते, अन्येऽपि ये अस्मास्वाशंसनं हविराशां कुर्वन्ति अदग्धादयः, तेऽपि तृप्यन्तु अनेन कर्मणा। गतार्थमन्यत्। अन्ते त्रिस्तृप्यतेरभ्यासोऽतिशयार्थः।

'दातारो नः प्रवर्धन्तां वेदाः सन्ततिरेव च।
श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विति।।' (मनु०३.२४९)

'अन्नं च नो बहु भवेदतिथींश्च लभेमहि।
याचितारश्च नः सन्तु मा च याचिष्म कञ्चन।।' एवमस्तु।

निगदव्याख्यातम्।

अथ कुशविसर्जनम् -

**वाजे वाजेऽवत वाजिनी नो धनेषु विप्रा अमृता ऋतज्ञाः।**
**अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः।।**

हे वाजिनो देवाः पितरश्च नोऽस्मान् वाजे वाजे अन्ने अन्ने अवत रक्षत। हे विप्रा ब्राह्मणाः, तेषु हि विश्वेदेवबुद्धिः पितृबुद्धिश्च, तदुद्देशेन भोजितेषु ब्राह्मणेष्वियम्, अथवा 'प्रा-पूरणे' विशेषेण पूरका विप्राः पितरो विश्वेदेवाश्च अमृताः अमरणधर्मकाः, ऋतज्ञाः सत्यज्ञा यागज्ञा वा, अस्य मध्वः मधुररसस्य भागं पुनः पनः पिबत, मादयध्वं च पुनः पुनः। सम्प्रति तु तावत्तृप्तत्वात् यात गच्छत देवगमनैर्मार्गैर्यैरध्वभिर्देवा गच्छन्ति।

आ मा वाजस्येति परिषेकः।

**आ मा वाजस्य प्रसवो जगम्यादा मा द्यावापृथिवी विश्वरूपे।**
**आ मा गन्तां पितरं मातरं चा मा सोमो अमृतत्वेन गम्यात्।।**

माशब्देन लक्ष्मीरभिधास्यते। मा लक्ष्मीः कर्त्री आ जगम्यात् आ समन्तात् स्थिरा भूयात् मा गच्छेत्। मा लक्ष्मीः कीदृशी। प्रसवः प्रसूता धनपुत्रादिद्वारेणोत्पत्तिकारिका। कस्य। वाजस्य नारायणस्य। द्यावापृथिवी च आ जगम्यात् आगच्छतां

द्यौराकाशात्स्वर्गस्थानात्, पृथिवी भूमिस्थानाद्वा स्वर्गलोकादाजगम्यात्। मा लक्ष्मीः कीदृशी। विश्वरूपा विश्वस्य व्यापिका विश्वमयी च सा विश्वव्यापिका, तथा मदीयं पितरं मातरं च मा लक्ष्मीः स्वयं सार्धं गृहीत्वा आगन्ताम्। हे सोम त्वमागम्यात्। सह केन। अमृतेन सह अमृता अमरणरूपवस्तुना सह। मा लक्ष्मीश्च आगम्यात्।

पृच्छां सम्पाद्य अमुकस्यामुकगोत्रस्य सांवत्सरिकं श्राद्धमच्छिद्रमस्तु एवमस्तु। तिलोदकं स्वधा उदकतर्पणं स्वधा।

**।। इति त्रिषष्टितमी काण्डिका।। ६३।।**



## ।। अथ चतुःषष्टितमी काण्डिका ।।

अथान्वष्टकाश्राद्धं -

**द्वितीयस्य।। १ ।।**

**प्रथमोद्धृतं हविष्यैरुपसिच्यावाहनादि सिद्धं सम्प्रदानम्।। २ ।।**

**पूर्वेण निपरणं व्याख्याततम्।। ३ ।।**

द्व्यामुष्यायणस्य द्विधा श्राद्धं स्मृत्योक्तम्। परिग्रहीतृगोत्रेण जनयितृगोत्रेण तन्त्रेण कुर्यात् आवृत्त्या वा। तत्र यदा तन्त्रेण, तदा प्रदाने निपरणे च मन्त्रोहः - अमुष्मै स्वधानम इति। अत्र जनकप्रतिग्रहीत्रोर्नाम चतुर्थीद्विवचनान्तमुच्चारयितव्यं देवदत्तयज्ञदत्ताभ्यां स्वधानम इत्यादि निपरणेऽपि अग्निरिव पृथिवीमुपजीवतं देवदत्त-यज्ञदत्तौ ये च वामन्वित्यादि। आवृत्तिपक्षे परिग्रहीतुः पूर्वं कृत्वा पश्चाज्जनकस्य कुर्यात्। तत्र द्वितीयश्राद्धप्रकारोऽनेनोच्यते। द्वितीयस्येत्यत्र सूत्रे प्रकारं वक्ष्याम इत्यध्याहर्तव्यम्। द्वितीयस्य जनकश्राद्धस्येतिकर्तव्यतां वक्ष्यामो द्व्यामुष्यायणकर्तृ-कस्येत्यर्थः, अथवा द्वितीयस्य पितुर्बीजिनः श्राद्धं पृथग्वक्ष्याम इति व्याख्येयम्। यद्वा एकोऽपि कृत्रिमपुत्रादिर्भिद्यते कुलद्वयसम्बन्धभेदात्। तत्र प्रतिग्रहीतुः श्राद्धे कृते जनकस्य श्राद्धं कुर्वाणः स एव द्वितीय उच्यते। तस्य द्वितीय इत्युच्यमानतामा-पन्नस्य द्वितीयश्राद्धं वक्ष्याम इत्यर्थः। एकसङ्घातेनैव या रसवती कृता, ततः प्रतिग्रहीतृश्राद्धकरणात्प्रथममेवोद्धृत्य सर्वान्नं पृथक् स्थापयितव्यं सव्यञ्जनम्। तच्चोप-ग्रहीतृश्राद्धानन्तरं हविष्यैर्दधिक्षीरमधुप्रभृतिभिरुपसिञ्चेत्। तत आवाहनादि सम्प्र-दानमनुवाकशेषेणोपस्थानान्तमन्येषु ब्राह्मणेषु कुर्यात्। सिद्धमित्यनेन पूर्वोक्तप्रकारं निर्दिशति आवाहनाद्युपस्थानान्तं पूर्वोक्तप्रकारं निर्दिशति आवाहनाद्युपस्थानान्तं पूर्वोक्तमन्यूनातिरिक्तं पुनः कुर्यात्। स्थालीपाकादिकमेव तु तन्त्रेणोपकरोति। प्रथ-मोद्धृतं हविष्यैरुपसिच्यावाहनादि सिद्धं सम्प्रदानमित्यस्यापरा व्याख्या - प्रथमं परिग्रहीतृश्राद्धार्थमुद्धृतं यस्मात् तत् प्रथमोद्धृतं, तत् यातयामत्वदोषापसारणाय हविष्यैः क्षीरादिभिरुपसिच्य तत एवावाहनाद्युपस्थानान्तं सकलं सिद्धं पूर्वज्ञातमेवा-

वृत्त्या कुर्यात्, अन्यत् स्थालीपाकादि सकृत्कृतं तन्त्रेणोपकरोति प्रयासाद्यदि वा कालभेदात्। पूर्वेण निपरणं व्याख्यातमिति, निपरणं यथादर्शितमेव कर्तव्यं, तत्र पूर्ववदूहः कर्तव्य इत्यर्थः। अन्या व्याख्या - निपरणं पूर्वेण ग्रन्थेन यथा व्याख्यातं वर्णितं, तथैव कर्तव्यं, नतु वक्ष्यमाणान्वष्टक्यवदिति। सर्वथा स्थितमेतत् सारतो द्यामुष्यायणेनावृत्तिपक्षे हविरर्हानुपवेश्येत्यादिकमेवोपस्थानान्तमावर्तनीयं, नतु स्थालीपाकादिकं तस्य तन्त्रत्वात्। यत्तु पूर्वेण निपरणं कार्यं पितामहप्रतितामह-योरत्रैव तन्त्रेण नामोच्चारणं कर्तव्यं द्वितीयतृतीयपिण्डौ निपृणाति इति व्याख्यातं पूर्वैः, तच्चिन्त्यं प्रचुरसाधुप्रयोगपर्यालोचनेन। तदेवं तन्त्रपक्षे द्वौ वैश्वदेवौ तावत्तन्त्रेण भवतः जनयितुस्तत्पितुस्तत्पितामहस्य, परिग्रहीतुस्तत्पितुस्तत्पितामहस्य। एवं मात्रा-दीनामप्यपरस्त्रिकस्तन्त्रेण ज्ञेयः। तेनाद्यपक्षे स्थालीपाकादि सकलं तन्त्रं, तत्र सामान्यविधानेनैव तन्त्रपक्षस्य गतार्थत्वादिहाप्रदर्शनमूहमात्रस्य सुगमत्वात्। आवृत्तौ तु शेषोऽभिधानमपेक्षत इति सूत्रकारेणेह पृथक् प्रयतितम्।। १-३ ।।

**।। इति चतुःषष्टितमी काण्डिका।। ६४ ।।**



## ।। अथ पञ्चषष्टितमी काण्डिका ।।

**प्रातरन्वष्टक्यम्।। १ ।।**

**एतेनैव धर्मेण।। २ ।।**

अष्टकायाः अनु पश्चाद्भवमन्वष्टक्यमित्यन्वर्थिकेयं संज्ञा अन्वष्टक्यमिति। एतच्च केचिदष्टकाया अङ्गं वदन्ति, केचित्तत्सदृशं विकारभूतं कर्मान्तरम्। तत्रोभयथापि तत्कालत्वे प्राप्ते कालान्तरमाह प्रातरिति नवम्यां कर्तव्यमित्यर्थः। एतेनैव धर्मेणेति सर्वनाम्ना प्रकृतस्य द्वितीयस्य श्राद्धस्य परामर्शः। यथा द्वितीयश्राद्धे स्थालीपाकादिकं न क्रियते, सम्प्रदानावाहनाद्युपस्थानान्तमन्यूनातिरिक्तमनुष्ठीयते, तद्वदन्वष्टक्य इत्यर्थः ।। १-२ ।।

विशेषमाह -

**सम्प्रदाय निपरणं कुर्यात्।। ३ ।।**

अन्वष्टक्ये हविरर्हानुपवेश्यावाहनाद्युपस्थानान्तं कृत्वा निपरणं कुर्यात्, न तु मध्ये, पूर्ववदिति शेषः।। ३ ।।

निपरणस्यात्र विशेषान्तरमाह -

**षट् कर्षूः कुर्याद्दक्षिणायताः पूर्वापराः प्रादेशमात्रीश्चतुरङ्गुलपृथ्वीस्तावदन्तरास्तावदवखाताः।। ४ ।।**

कर्षूः खनिरुच्यते। षट् गर्तान् कुर्यात् दक्षिणायताः दक्षिणोत्तररेखया आयताः दीर्घाः। किं प्रमाणं दैर्घ्यमित्यपेक्षायामाह प्रादेशमात्रीः प्रादेशमात्राः। पूर्वापराः पूर्वपश्चिमभावेन पङ्क्त्या स्थिताः। चतुरङ्गुलपृथ्वीः पार्श्वतश्चतुरङ्गुलपरिमाणाः पूर्वपश्चिमरेखायाः। तावदन्तराः, चतुरङ्गुलपरिमाणमेव चासामन्तरं व्यवधानं कर्तव्यं पङ्क्तिरूपेण निर्मितानाम्। तावदवखाताः चतुरङ्गुलपरिमाणा एव ता अधः खननीयाः।।

**तासां दक्षिणतः खराः।। ५ ।।**

कर्तव्या इति शेषः। खरा मृत्तिकास्थलानि। ते तासां कर्षूणां दक्षिणेषु भागेषु षट् कर्तव्याः।। ५ ।।

**तेष्वग्नीन्विहृत्यावोक्ष्य कर्षूर्दक्षिणाग्रान्दर्भानास्तीर्य पिण्डपितृयज्ञावृता पूर्वासु तिसृषु निधाय मञ्ज्ञानमुपनिनीय दुग्धेनाभितः परिषिच्य ये चात्र रसाः स्युरेतद्भवद्भ्य इत्युक्त्वा, तृप्यन्तु भवन्त इत्युक्त्वैवमपरासु स्त्रीभ्यो दद्यान्मञ्ज्ञवर्जं सुरां तूपनिनयेत्।। ६ ।।**

**मन्थेनाभितः परिषिञ्च्य ये चात्र रसाः स्युरेतद्भवतीभ्य इत्युक्त्वा तृप्यन्तु भवत्य इत्युक्त्वा, प्रेष्याः पिण्डान्भक्षयेयुर्निषादा वाग्नावप्सु वा ब्राह्मणं वा भोजयेत्।। ७ ।।**

तेषु खरेषु जानुदघ्नेषु औपसदादुद्धृत्य विहृत्य परिस्तीर्य पर्युक्ष्य परिसमूह्य चाग्नीन् कर्षूश्चावोक्ष्य अवसिच्य कर्षूषु दक्षिणाग्रान्दर्भानास्तीर्य, उक्तस्य पिण्डपितृयज्ञस्य आवृत् इतिकर्तव्यता पृथिवी दर्विरित्यादिमन्त्रादिका, तया पूर्वासु पूर्वदिग्वर्तिनीषु तिसृषु कर्षूषु त्रीन् पिण्डान् पितृपितामहप्रपितामहेभ्यो निधाय, मञ्ज्ञानं च पिण्डसमीपे यूषलक्षणं स्थापयित्वा, सर्वतश्च सर्वपिण्डान् दुग्धेन परिषिच्य, अन्येऽपि ये रसवत्यां सिद्धा रसाः सन्ति तैरपि पिण्डान् सर्वतः परिषिच्य, एतदन्नं भवद्भ्यः पितृपितामह-प्रपितामहेभ्यो देवदत्तादिभ्य इत्युक्त्वा, तृप्यन्तु भवन्तः पितर इत्युक्त्वा च, एवमेवा-परासु, अपरदिग्भागवर्तिनीषु तिसृष्ववशिष्टासु कर्षूषु स्त्रीभ्यो मात्रादिभ्यस्त्रीन् पिण्डान् पृथिवी दर्विरित्यादिप्रकारेण दद्यात्। एतावांस्तु विशेषः – मञ्ज्ञानं तत्र नोपनिनयेत्। मञ्ज्ञस्थाने तु सुरां विकृतयवरसरूपामुपनिनयेत्। मन्थेन चोदकाबिलीकृतसक्तु-रूपेण सर्वतः परिषिञ्चेत् अन्येऽपि ये रसास्तैरपि सिञ्चेत्। एतद्भवतीभ्यो मात्रादिभ्य इत्युक्त्वा तुप्यन्तु भवत्यो मातर इत्यादि चोक्त्वा पिण्डानां प्रतिपत्तिं कुर्यात्। कथम्। प्रेष्या भृत्या अनुज्ञाताः सन्तः पिण्डान्भक्षयेयुः, धीवरा वा सुरास्पर्शदूषित-त्वात्, अप्स्वग्नौ वा क्षेप्तव्याः। ब्राह्मणं वा भोजयेत्पिण्डान् ये सुराभिष्यन्दसंस्पर्शेन अदूषिताः प्रथमास्त्रयः।। इत्यन्वष्टक्यम्।।

**।। इति पञ्चषष्टितमी काण्डिका।। ६५ ।।**



## ।। अथ षट्षष्टितमी काण्डिका ।।

**अथ प्रथमश्राद्धस्याष्टकया धर्मो व्याख्यातः ।। १ ।।**

अथशब्द आनन्तर्यार्थः। यदुक्तं - 'शुचिर्भूतः पितृभ्यो दद्यात्।' (४६.१) इति, तत्राग्न्युत्पत्त्यनन्तरमेव प्रथमश्राद्धं क्रमप्राप्तमपि नोक्तं विकृतेः प्रकृतितन्त्रापेक्षितया प्रकृतितन्त्रपरिज्ञानं विना दुरधिगमत्वात्। अष्टकाविकारा हि सर्वश्राद्धानि प्रकृतौ ज्ञातायां सुखेन सूयन्ते इत्यष्टकानन्तरं शुचिभूतस्यैकादशेऽहनि प्रथमश्राद्धमधुनारोप्यते। किञ्च प्रथमश्राद्धस्यामङ्गलप्रायत्वेन लोके प्रसिद्धत्वात् प्रचुरपुरुषार्थाभिहिताग्न्याधानान्तरमभिधानं न कृतमित्यप्याहुः। अत एवाथशब्दो मङ्गलमपि तन्त्रेण द्योतयतीति वर्णयन्ति। अतश्चायमर्थः – अथ प्रकृत्यधिगत्यनन्तरं प्राप्तप्रस्तावस्य प्रथमश्राद्धाभिधानस्य सामान्येनाष्टकया धर्मो व्याख्यातः। धर्म इतिकर्तव्यता विध्यन्त इत्येवंभावः प्रकार इति पर्यायाः।। १ ।।

विशेषमाह -

**एकवन्मन्त्रानूहेत्।। २ ।।**

एकोद्दिष्टत्वादतिदेशप्राप्तस्य मन्त्रगतस्य पितृनाम्नो बहुवचनान्तस्यैकवचनमूहेत् कर्मसमवेतार्थप्रकाशनेन मन्त्राणामुपकारकत्वात्। एकेनार्थेन तुल्यमेकवत्। वैश्वदेवप्रथमपशुश्राद्धेषु न सन्ति ते तावत्, अतो नात्रोहानूहविवेकोऽस्ति। यद्यपि च - 'दूष्यते वा ऋचोऽक्षरं यदेतदूहितं तस्मादृक्षु नोहेद्ब्राह्मणवदूहेद्विकृती यथार्थं यजूँषि।।' इति निषिद्ध ऋचामूहः, तथापि सूत्रकारवचनप्रामाण्यादूहः क्रियते। यत्र हि स्तत्यादिना अनूहितान्येव ऋगक्षराणि सङ्गच्छन्ते, तत्र सर्वथा नोहनीयान्यृक्षु इति निषेधस्य तात्पर्यम्। असति तु गत्यन्तरे 'सर्वानर्थक्याद्वरमेकदेशविकारः' इति न्यायोऽप्यत्र अनुगुणोऽस्ति तत्र स्पष्टार्थमूहविषयो निदर्श्यते। इह पितृशब्दोऽनन्तरप्रमृते वर्तते यस्य श्राद्धमाम्नातं गुरुपितामहमातुलभ्रातृप्रभृतेः। अत एव मातुलादिपदं नोहनीयमिति गम्यत एकवदित्यस्यान्यपरिसङ्ख्यार्थत्वात्। सम्बन्धिशब्दे हि पितृशब्दे भ्रात्रादिषु केनोहो वार्यते। तस्मात्पितृशब्दो रूढोऽनन्तरप्रमृते श्राद्धकर्मसु। अत एवावाहनादिवाक्यतः पितृशब्दो मातृपितृपितामहप्रभृतिष्वपि वर्ततेऽष्टकादिषु।

न हि बहूनां श्राद्धे प्रस्तुते कस्यचिदावाहनं कस्यचिन्नेति युज्यतें बहुवचनं चैकत्र। एवं स्थिते एकोद्देष्टे प्रथमश्राद्धे मन्त्रप्रयोगपद्धतिरियम् - प्राथम्यात् प्रथमपञ्चकेन स्थालीपाकस्याज्यभागान्तं हुत्वा ऋतुतिथ्यादिकं यथायथं कृत्वा हविरर्हमुपवेश्य पितरमावाहयिष्यामीत्युक्त्वा ओमावाहयेत्यनुज्ञात अपयन्त्वसुरा इति तिलान्विकिरेत्। अत्रोत्तरत्र -

**उदीरतामवर उत्पर उन्मध्यमः पिता सोम्यः।**
**असुं य इयायावृक ऋतज्ञः स नोऽवतु पिता हवेषु।।** इति।
**एहि पितर्मनोजवैरागच्छ पितर्मनोजवैः।**
**यो निखातो योऽपरुप्तो गर्भाद्योऽवपेदे।**
**सर्वं तमग्न आवह पितरं हविषे अत्तवे।।**

एके त्वाहुः 'ये निखाताः' इति अत्र प्रायेण वक्तव्यं विकरभाजो ह्येतदामन्त्रणं विकरश्च प्रथमश्राद्धे नास्ति।

**आगच्छ पितर्मनोजवः पितः पितः शुन्धस्व।**
**आ मे यातु पिता भागधेयं विराजाहूतः सलिलात्समुद्रात्।**
**अस्मिन्यज्ञे सर्वकामांल्लभतामक्षीयमाणमुपजीवत्वेनम्।**

अन्तर्दध इत्याद्यविशिष्टम्। अमृता वागित्यादौ स्वधया मदस्व, इहास्मभ्यं वसीयोऽस्तु देव, देवशब्दोऽपि हि पितरि व्याख्यातुं शक्यते, अत्र विश्वेदेवाभावेऽपि। यन्मे मातेत्येक एवाविशिष्टः। आदित्या रुद्रा इत्यत्रापि स्वधया मदस्व स्वधां वह पितस्तां भजस्व। अग्नौकरणमविशिष्टम्।

**यो मामकः पिता पार्थिवो योऽन्तरिक्षे यो दिवि यः समुद्रे।**
**यो वाचमास्वामृतो बभूव सोऽस्मिन्यज्ञे सर्वकामांल्लभताम्।।**
**एहि पितर्भागधेयं पात्रे दत्तममृतं स्वधावत्।**
**अक्षीयमाणमुपजीवत्वेनं मया प्रत्तं स्वधया मदस्व।।**
**अयं यज्ञः परमो यः पितुर्मनश्च वाक्च पितस्ते।**
**प्रदानैः स्वधया मदस्व।।**
**एषा त ऊर्गेषा ते स्वधा तामद्धि च पिब च मा च ते क्षेष्टा येह पिता ऊर्क्।**
**मया प्रत्तं स्वधया मदस्व।।**

यन्मे प्रकामादित्यादौ उषंस्तेन् पिता मदतामिति। अहोरात्रैरित्यविशिष्टम्। यद्वः क्रव्यादित्यत्र यत्ते क्रव्यात् तत्त एतेन अरिष्टः पितर्मादयस्व, एवं स्वधां वह पितस्तां भजस्व। पृथिवी दर्विरित्यविशिष्टम्। उत्तरौ तत्र न स्तः। ये पितः प्रेतास्त्वा तेऽनु य इह पितर्जीवा वयं तेषां वर्षिष्ठा भूयास्म।

**एतत्ते पितर्वासांसि। अतो नोऽन्यत्पितर्मा यूथाः।**
**वीरान्नः पितर्देहि। पितरं मे तर्पयत।।**

मा मे क्षेष्ठेत्यविशिष्टम्। यन्मे राम इत्यत्र तेन पूर्तेन पिता मदताम्। देवता मादयन्तामित्यस्य त्वनूहोऽसमवेतार्थत्वात् विश्वेदेवानामत्र अभावात् सावित्रादिवदत्र स्तुत्यर्थत्वादसमवेतार्थत्वेन। एवं विश्वेदेवाश्च पिता चेत्याद्यनुमन्तव्यम्।। २ ।।

विशेषान्तरमाह -

**पेश्यः प्रातरित्यनियमः।। ३ ।।**

अष्टकायाः पशुर्विकल्पितः। पशुपक्षे च पेश्योऽवदानस्थाने चोदिताः। ता अतिदेशेन प्रथमश्राद्धे विकल्प्यमानपश्वनुकामित्वेन प्राप्ताः सत्यो नियमाभावविशिष्टा-भावा उच्यन्ते पेशीषु स्वेच्छा कर्तव्या नवेति। पेशीद्धारेण च पशौ स्वेच्छोक्ति-रियम्। विकल्पपक्षे हि पाक्षिको नियमः स्यात्। एवं यत्प्रकृतावन्वष्टक्यं, तस्यापी-हातिदेशेन नित्यप्राप्तस्य अनियमः उच्यते ।। ३।।

विशेषान्तरमाह -

**तिस्रः कर्षूः कुर्यात्।। ४ ।।**

अनियतायामन्वष्टक्यकर्तव्यतायां सत्यां यदा कदाचिदन्वष्टक्यं प्रथमश्राद्धे कुर्यात्, तदा तिस्र एव कर्षूः कुर्यात्, नातिदेशप्राप्ताः षडिति नियमोऽयम्। कर्षूसङ्ख्यया चाग्नीनपि त्रीन् कुर्यात्।। ४ ।।

**त्रिष्वग्निषु कृत्वैकैकं पिण्डमुत्सृज्य प्रथमामन्नस्य पूरयेद्दधिमध्विति द्वितीयां, घृतमांसमिति तृतीयाम्।। ५ ।।**

त्रिष्वग्निषु यथाप्राप्तहोमान् कृत्वा पित्रुद्देशेनैकैकस्यां कर्ष्वामेकैकं पिण्डं क्षिपेत् पृथिवी दर्विरिति मन्त्रेणावृत्तिभाजा। तत्र प्रथमामन्नस्य नानाप्रकारस्य हवि-ष्यस्य भागेन पूरयेत्, द्वितीयां तु दधिमध्विति पूरयेत्, निपातानामनेकार्थत्वादिति-

शब्दः करणशक्तिप्रधानोऽधिकरणशक्तिप्रधानान्तःशब्दवत्, दधिमधुभ्यां द्वितीयां पूरयेदित्यर्थः। घृतमांसमिति तृतीयां पूरयेदिति समानम्। पूर्वेण वपाक्षीरादिपरिषेकोऽपि प्रकृतिवत्, एतत्ते, तृप्यतु भवानिति।।·५ ।।

**एवं मासि मासि।। ६ ।।**

प्रतिमासमेषैव कर्तव्यता नवश्राद्धानामित्यतिदेशार्थः।। ६ ।।

**एवं सांवत्सरिकम्।। ७ ।।**

संवत्सरे भवं सांवत्सरिकं सपिण्डीकरणमप्येवमित्यतिदेशार्थः, अथवा संवत्सरे भवं सांवत्सरिकमिति व्युत्पत्तिर्ज्ञेया। द्विधा हि स्मृतिर्दृश्यते। काचिदाह सपिण्डीकरणादूर्ध्वं त्रिपुरुषमेव कर्तव्यम्। यथाह मनुः -

'यः सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोजयेत्।
विधिघ्नस्तेन भवति पितृहा चोपजायते।।' इति।

अपरा त्वेकोद्दिष्टमेवाह प्रतिसंवत्सरं श्राद्धम्। यथाह याज्ञवल्क्यः -

'मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सरम्।
प्रतिसंवत्सरं चैव श्राद्धमेकादशेऽहनि।।' (१.९.२५५)इति।

मासिकातिदेशेन हि एकोद्दिष्टत्वमतिदिष्टम्। न च एवं सति विरोधः विकल्पेनोभयोरनुग्रहात् उदितानुदितवद्वा शाखाभेदेन व्यवस्थानात् कुलदेशभेदेन वा। सर्वशाखाप्रत्ययबुद्धिसर्वस्थितिप्रत्ययमेकैकं कर्म युक्तम्। इह चैवमादिन वितन्यते। स्मृतितन्मीमांसासिद्धेषु स्मार्तेषु क दाचन मन्त्रादिविनियोगार्थमिदम्।। ७ ।।

सपिण्डीकरणे विशेषमाह -

**चतुर्थं पिण्डमुत्सृज्य त्रैधं कृत्वा पिण्डेषु निदध्यात्।। ८ ।।**

अर्थात् पितृपितामहप्रपितामहानां दद्यात्।। ८ ।।

भागनिधाने मन्त्रानाह -

**संसृजतु त्वा पृथिवी वायुरग्निः प्रजापतिः। संसृजध्वं पूर्वोभिः पितृभिः सह।। समाना वः सं वो मनांसीति।। ९ ।।**

संसृजत्वित्यनेन सहान्तेन, समाना व इत्यादिना सं वो मनांसीत्यादिना च त्रयेण प्रक्षिपेदेकैकत्रेत्यर्थः। तत्र शाखान्तरीया प्रथमा पठिता। द्वे तु -

**समाना व आकूतानि समानि हृदयानि वः।**
**समानमस्तु वो मनो यथा वः सुसहासति।। २ ।।**
**सं वो मनांसि सं व्रता समु चित्तान्याकरत्।**
**अमी ये विव्रता स्थन तान्वः संनमयामसि।। ३ ।।**

हे पितस्त्वां पृथिवी संसृजतु। कैः। पूर्वैः पितृभिः सह पितृपितामह-प्रपितामहैरित्यर्थः। एवं वायुरग्निः प्रजापतिरित्येकैकं सम्बन्धनीयम्। संसृजध्वमिति व्यत्ययेन बहुवचनम्। त्वं च हे पितः संसृजस्व। यथाश्रुतं वा हे पितृपितामहप्रपितामहा यूयमप्यनेन सह संसृजध्वम्।

संसृष्टानां च सतां युष्माकमाकूतानि इच्छाः समानानि सन्तु परस्परानु-कूलानीत्यर्थः। तथा हृदयानि समानानि युष्माकं सन्तु। समानं च मनो ज्ञानं धनं वास्तु। यथा वः सुसहासति, यथा युष्माकं सह कार्याणि सुष्ठु भवन्ति।

युष्माकं मनांसि ज्ञानानि, चित्तानि हृदयानि, व्रतानि कर्माणि समाकरं समा-कार्षम्। संशब्दाः सर्वे करोतिना सम्बध्यन्ते समार्थाः सन्तः। ये च युष्माकं मध्ये विव्रता विरुद्धचेष्टास्तानहं संनयाम्यनेन कर्मणा परस्परानुकूलचेष्टान् करोमी त्यर्थः।।

**एवमुदकानि।। १० ।।**

पाद्यानि अर्घ्याणि चतुर्थे पात्रे निधाय पिण्डवत्पितृपात्रेषु अनेनैव मन्त्रत्रयेण निदध्यादित्यतिदेशार्थः। अत्र पात्रपिण्डचतुष्ट्वेन ब्राह्मणचतुष्ट्वम्। निपरणं पुनः पश्चा-दावाहनाद्युपस्थानान्तं कृत्वाऽन्वष्टक्यादिवत्। तथाच -

**चतुर्भ्यश्चार्घ्यपात्रेभ्य एकं वामेन पाणिना।**
**गृहीत्वा दक्षिणेनैव पाणिना च तिलोदकम्।।** इति ।। १० ।।

**।। इति सपिण्डीकरणम्।।**
**।। इति षट्षष्टितमी काण्डिका।। ६६ ।।**



## ।। अथ सप्तषष्टितमी काण्डिका ।।

उक्तं सर्वश्राद्धानामष्टकाविकारत्वम्। तत्र यानि पञ्चम्यादौ पुत्रकामादि-श्राद्धानि लोके प्रसिद्धानि, यानि च नान्दीमुखप्रभृतीनि विवाहोपनयनतीर्थयात्रा-विशेषप्राप्तिविद्वद्वरद्विजोत्तमगृहागमनादिनिमित्तानि विश्वजिदधिकरणनयकल्पितस्वर्ग-फलकानि, तानि प्रथमाष्टकाप्रकाराणि। यानि त्वभणितनिमित्तान्येवानन्तरकथित-स्वरूपाणि मेदोघृतकुल्यादिपितृतर्पणाद्यर्थार्थवादबलेन मांसविशेषसाध्यानि, तानि द्वितीयमांसाष्टकाविकारत्वेन गम्यन्ते। यानि तु पिण्डान्वाहार्यशब्दवाच्यानि अमा-वस्याद्वादशीसंक्रान्त्यादिनिमित्तकानि उक्तनयेन स्वर्गफलकानि नित्यानि च होमाग्नि-ष्टोमनिदर्शनेन, तानि च मांसाष्टकाविकारत्वेन प्रतीयन्ते। तदेतद्भेदत्रयं क्रमेण भणति-

**अथेतरस्य श्राद्धस्याष्टकया धर्मो व्याख्यातः।। १ ।।**

अथेत्यानन्तर्यार्थः प्रकृतिज्ञानपूर्वकस्य विकृतिज्ञानस्य निदर्शितत्वात्। इतरस्य नान्दीमुखादेरमांससाध्यस्य धर्म इतिकर्तव्यतादिपर्यायोऽष्टकया प्रथमया व्याख्यातः।। १ ।।

प्रथमाष्टकाप्रकारत्वमेव व्यंक्तुमाह -

**प्रथमेन पञ्चकेन।। २ ।।**

आज्यमिति स्थितमेव।। २ ।।

**आवाहनादि सिद्धं सम्प्रदानम्।। ३ ।।**

सम्प्रदानमपि सिद्धमविचारितमेव सर्वप्रकृतिविकृतिसाधारणत्वात्।। ३ ।।

**पूर्वेण निपरणं व्याख्यातम्।। ४ ।।**

पूर्वेणाष्टकाप्रकारेण निपरणं कर्तव्यं, नत्वन्वष्टकाप्रकारेण कर्षूकरणादिनेति। व्याख्यातं विशेषेण कथितं पूर्वैः।। ४ ।।

**।। इति सप्तषष्टितमी काण्डिका।। ६७ ।।**



## ।। अथ अष्टषष्टितमी काण्डिका ।।

**अथेतरस्य पशुश्राद्धस्याष्टकया धर्मो व्याख्यातः।। १ ।।**

**मध्यमेन पञ्चकेन।। २ ।।**

प्रधानहोम इति शेषः।। २ ।।

**आवाहनादि सिद्धं सम्प्रदानम्।। ३ ।।**

गतार्थम्।। ३ ।।

**पूर्वेण निपरणं व्याख्यातम्।। ४ ।।**

**।। इत्यष्टषष्टितमी काण्डिका।। ६८ ।।**



## ।। अथ एकोनसप्ततितमी काण्डिका ।।

**अथेतरस्य मासि मासि श्राद्धस्याष्टकया धर्मो व्याख्यातः।। १ ।।**

इतरस्य प्रथममासव्यतिरिक्तस्य आमावस्यादेस्तृतीयाष्टकया धर्मो व्याख्यातः। अस्य पिण्डान्वाहार्यमिति संज्ञा प्रसिद्धा पिण्डदानानन्तरं ब्राह्मणभोजनस्य आहरणात् प्रदानादन्वर्थिकेयं संज्ञा।। १ ।।

**उत्तमेन पञ्चकेन।। २ ।।**

तृतीयेन पञ्चकेनाज्यभागान्ते स्थालीपाकस्य होमः तृतीयाष्टकावत्।। २ ।।

**पूर्वेण निपरणमिति।। ३ ।।**

गतार्थम्। अन्ये तु पूर्वेण निपरणमिति सर्वत्रेत्थं व्याचक्षते - पूर्वेण पृथिवी दर्विरित्यनेनैव निपरणं, नतु उत्तराभ्यामिति नियमार्थमेतत्। इदं त्वखिलार्यजनानुष्ठानविपरीतम्। किञ्चैकोद्दिष्टत्वं चापतेदेवम्। उक्तं हि -

'वसवः पितरो भूम्यधिपतयो रुद्राः पितामहा अन्तरिक्षाधिपतय आदित्याः प्रपितामहास्तृतीयलोकाधिपतयः।' इति। तत्र पितृप्रकाशसमर्थत्वाऽत्प्रथममन्त्रस्य मन्त्रलिङ्गबलेन एकोद्दिष्टत्वं प्राप्नोति मुनिवचनबलेन त्वन्यत्र विनियोगो नास्ति क्षीणत्वादर्थापत्तेरन्यार्थत्वेन वचनस्योपपन्नत्वात्।। ३ ।।

**।। इत्येकोनसप्ततितमा काण्डिका।। ६९ ।।**



## ।। अथ सप्ततितमी काण्डिका ।।

एवं 'शुचिर्भूतः पितृभ्यो दद्यात्' (४६.१) इति प्रसक्तानुप्रसक्तं निवर्त्य फाल्गुनीपाकयज्ञमविशिष्टमाह-

**अथ फाल्गुन्यां तैलापूपस्य जुहोति।। १ ।।**

फाल्गुने मासि पौर्णमासी फाल्गुनी। तस्यां तैलपक्वेन गोधूमादिमयेनापूपेन होमः कर्तव्यः। अथशब्दः श्राद्धानन्तरतां भणन् श्राद्धप्रकरणनिवृत्तिस्वस्त्ययन-भविष्यत्त्वद्योतनद्वारेण मङ्गलमभिद्योतयति।। १ ।।

अधुना जुहोतिशब्दश्रवणात्पाकयज्ञतन्त्राभावाऽऽशङ्कानिवारणाय यज्ञप्रतीतये देवतां मन्त्रं चापूपहोमे दर्शयति यज्ञस्य होमान्तत्वोपदर्शनाय।

**अर्यमा देवता ये ते अर्यमन्निति।। २ ।।**

अपूपमन्त्रे अर्यमा देवता, संबन्धश्च यवस्य। ये ते अर्यमन्निति मन्त्रः।। २

**अथेन्द्राण्याः।। ३ ।।**

जुहोतीत्यनुषज्यते। द्रव्यमन्त्रौ त्वत्र वक्ष्येते प्रकरणसमाप्तौ।। ३ ।।

**प्रससाहिष इति तुण्डिलस्य जुहोति।। ४ ।।**

तुण्डा यस्य विद्यते स तुण्डिलो मध्योन्नतः पुरोडाशाकृतिस्तण्डुलपिष्टादि-पक्वः किलाटलेपिकादिर्वा। तेन प्रससाहिष इति मन्त्रेण जुहोति।। ४ ।।

**गोलका रुद्रदैवत्याः।। ५ ।।**

गोलका यवमया व्रीहिमया वा गोला इति प्राकृतभाषया (भाषायां) प्रसिद्धाः। ते रुद्रदैवत्याः कर्तव्याः। मन्त्रोऽपि रुद्रलिङ्गकोऽर्थात्।। ५ ।।

**अदितिर्द्यौरदितिरिन्द्राणी पत्येत्योदनयोः शाकपललाक्तयोः।। ६ ।।**

पात्रद्वयोद्धृतावोदनौ। तयोरेकं शाकेनाभ्यज्य मिश्रीकृत्य अदितिर्द्यौरदितिरन्त-रिक्षमित्याहुतिं जुहुयात्, द्वितीयं तु पललेन तिलतण्डुलचूर्णविनिर्मितेनाभ्यज्य इन्द्राण्याः पूर्वोक्ताया, इन्द्राणी पत्या इत्यादिमन्त्रेण जुहुयात्। तदेवं पञ्च हवींष्यत्र प्रधानयागः।

**ये ते अर्यमन्बहवो देवयानाः पन्थानो राजन्दिव आचरन्ति।**
**तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव।।**

अरीन् रागादीन् अमति नाशयति तमोवत् यो ब्रह्मात्मकत्वात् सोऽर्यमा, राजमानत्वाच्च राजा, हे राजन् अर्यमन् नोऽस्मान् रक्ष गोपाय क्लेशेभ्यः। कैः रक्ष। पथिभिर्मार्गैरुपायैः। ये ते बहवो भवन्ति पन्थानः, तत्र ये देवयानाः देवानां प्राणादीनां गमनोपायभूता दिवो द्योतमानात्परब्रह्मण आचरन्ति आगच्छन्ति, तैः पथिभिरुपायैरस्मान्रक्ष। नाहं मलिनवैषयिकसुखादानद्वारेण रक्षामभ्यर्थये, किन्तु मोक्षमिति यावत्। भोगासक्ताभिप्रायेण तु यैर्दिवं स्वर्गमाचरन्ति गच्छन्ति, तैर्नो रक्ष स्वर्गं प्रापयेति योजना। अद्य अस्मिन्नहनि अचिरेणैवेत्यर्थः। सुगेभिः सुगमनैः। किञ्च अधि च ब्रूहि देव, अधिकं ब्रूह्यस्मान् हे देव पितेव मोक्षोपायमाधिक्येनोपदिशेत्यर्थः।

**इन्द्राणी पत्या सुजितं जिगायोदंशेन पतिविद्ये बिभेद।**
**त्रिंशद्यस्या जघना योजनान्युपस्था इन्द्रं स्थविरं बिभर्ति।।**

जगती। उदिति उपसर्गो जयतिना सम्बध्यते। इन्द्राणी शची पत्या भर्त्रा सह स्पर्धमाना सुरतसमये तं पतिं सुजितमुज्जिगाय सुष्ठु जितोऽसीति पुरुषायितेन जित्वा जगर्ज। हेतुमाह - अंशेन पतिविद्ये बिभेद। उदिति भिदिनापीह संबध्यते। पत्युर्विद्या यत्र सुरतव्यापारे पुरुषकर्मणि तत्पतिविद्यम्। तत्र अंशेन भागेन यतः सा शची उद्बिभेद उद्भिन्ना अधिकतरकौशला जाता। किञ्च त्रिंशद्योजनानि यस्या जघनं, योजनशब्दोऽङ्गुलिनामसु पठितः, अतिवैतत्यार्थं वा त्रिंशद्योजनग्रहणं विततजघनत्वाच्च इन्द्रं जितवतीत्यर्थः। यतोऽसावुपस्थे नितम्बे स्थविरं प्रवृद्धतरमपीन्द्रं बिभर्ति धारयति तस्मात्स्वव्यापारं संस्थाप्य शोभना इन्द्रं जयतीति अर्थ उत्तानः। परमार्थस्तु - इन्द्राणी विद्या, तस्याः पतिरिन्द्रः परमात्मा। सा चं अंशेन भागेन तादात्म्यादुज्जिगाय व्याप्तवती स्पर्धया विततजघनतया, हन्तीति जघनमविद्याविनाशकारिसामर्थ्यमाह। इन्द्रं स्थविरं वृद्धं अविद्याजरया वासनादिना व्योमवज्जीवात्मादिरूपेण व्यवधीयमानमुपस्थे स्वरूपे बिभर्ति धारयति विरोधिनीमविद्यां व्यावर्त्य। प्रकृष्टपुरुषार्थोपायत्वपर्यवसायिसरस्वतीरूपविद्याप्रशंसेयम्। यथोक्तमस्माभिः -

'अवावरीं धीतिमिरस्य पीवरीं
संसारसिन्धोः परमार्थदृश्वरीम्।

सुधीवरीं सत्पुरुषार्थसम्पदां
नमामि भक्त्या परया सरस्वतीम्।।' इति।

**प्रससाहिषे पुरुहूत शत्रूञ्ज्येष्ठस्ते शुष्म इह रातिरस्तु।**
**इन्द्राभर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीनाम्।।**

जगती। हे इन्द्र पुरुहूत बहुभिराहूत त्वं शत्रून् प्रससाहिषे साहयसि अभिभवसि। भवतो ज्येष्ठोऽतिशयेन प्रशस्तः शुष्मो बलम्। किञ्च त्वं रेवतीनां रैयुक्तानां मुक्तादिधनवतीनां सिन्धूनां नदीनां पतिरतस्त्वत्प्रसादादिहास्मद्गृहे रातिर्दानं यागादिप्रवृत्तिरस्तु भवतु। आ भर दक्षिणेन वसूनि, धनानि दक्षिणेन हस्तेनाभर आहर धनपतिस्त्वम्।

**मृडा नो रुद्रोतनो मयस्कृधि क्षयद्वीराय नमसा विधेम ते।**
**यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु।।**

व्याख्यातेयम्।

**अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।**
**विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्।।**

अदितिरदीनात्मा विद्यात्मिका सरस्वती। सा द्यौः स्वर्गः पृथिवी चेत्यर्थस्तद्विवर्तपरिणामाभ्याम्, अन्तरिक्षं च। अन्तरिक्षपक्षे सर्वगतत्वेन सर्वमप्यदितिः, पृथिवीपक्षे लोकत्रयस्थितजनाप्याऽयकत्वेन सह हेतुत्वेन च तथा स्तुतिः। अदितिर्माता निर्मात्री। सैव पिता पालयित्री। सैव च पुत्रः पावयित्री। विश्वे सर्वे देवा अदितिरदितिरेव। पञ्चजना अदितिरेव।

'मनुष्याः पितरो देवा गन्धर्वा असुरास्तथा।
रक्षांसि जायमानत्वाज्जनाः पञ्च प्रकीर्तिताः।।'

यच्च जातं किञ्चित्, यच्च जनित्वं जनिष्यमाणं, तत् सर्वमदितिरेव।। इति फाल्गुनी।।

**।। इति सप्ततितमी काण्डिका।। ७० ।।**



## ।। अथ एकसप्ततितमी काण्डिका ।।

**गावो भग इति द्वाभ्यां गोयज्ञस्य ।। १ ।।**

गवां प्रसूतानां स्वास्थ्यपुनः सद्गर्भग्रहणाद्यर्थो वसन्ते यज्ञो गोयज्ञः। अश्रुत-द्रव्येषु आज्यं हविश्चतुर्गृहीतं यवव्रीहिनिर्मितं वा यावकादि दृष्टार्थेषु लोके स्वस्त्य-यनेषु प्रवृत्त्यर्थत्वात्। प्रायेण पलाशादिस्रुवेण होम उपनयनादौ दृष्टत्वात्।। १ ।।

प्रायेण स्वस्त्ययनानि इत ऊर्ध्वं दृष्टार्थानि, श्रावण्यष्टकादिप्रभृतीन्यदृष्टार्था-न्यपि। अत्रैवावसरे प्रथमकर्मफलार्थं स्वस्त्ययनमाह -

**सीरा युञ्जन्तीति तिसृभिरायोजनीयस्य।। २ ।।**

आयोजनं बलीवर्दसम्बन्धः प्रयोजनं यस्य यज्ञस्य स आयोजनीयः तस्य जुहुयात् सीरा युञ्जन्तीत्यादिभिस्तिसृभिर्ऋग्भिः।। २ ।।

**प्रथमोत्तमाभ्यां युनक्ति।। ३ ।।**

सीरा युञ्जन्तीति या प्रथमा गायत्री, पूषायुनक्तीति च या उत्तमा द्विपदा त्रिष्टुप्, ताभ्यां युगान्तरे बलीवर्दान् युनक्ति यूपैः संयोजयतीत्यर्थः। युनक्तियोक्त्रयतीति-शब्दौ बलीवर्दानां यूपसंयोजने रूढौ।। ३ ।।

**मध्यमया फालम्।। ४ ।।**

युनक्त सीरेति मध्यमया फालं युनक्ति।। ४ ।।

**शुनं सुफाला इति प्रदक्षिणं द्वे कृषति।। ५ ।।**

शुनं सुफाला इत्यादिकया ऋचा प्रदक्षिणं कृत्वा द्वे सीते कृषति।। ५ ।।

**लाङ्गलं पवीरवमित्यपरे द्वे।। ६ ।।**

लाङ्गलं पवीरवमित्यादिकया अन्ये द्वे सीते कृषति।। ६ ।।

**घृतेन सीतेति सीतायज्ञस्य।। ७ ।।**

घृतेन सीतेति मन्त्रेण सीतायज्ञस्य जुहुयात्। कार्तिकशुक्लद्वादश्यां यवबीज-वपनोपक्रमाय सीतायज्ञस्य आर्येषु प्रसिद्धेर्यत्र वीरणादिमयी सीता कुमारीदेवता विरच्यते।। ७ ।।

**या ओषधय इति बीजवपनीयस्य ।। ८ ।।**

बीजं वपनीयं यस्य स बीजवपनीयो यज्ञः। तस्य या ओषधय इत्यादिना जुहुयात्। सीतायज्ञानन्तरमेवैष यज्ञस्ततो यवबीजवपनम् ।। ८ ।।

**विमुच्यध्वमिति विमोचनीयस्य।। ९ ।।**

अत्रापि प्रयोजनार्थीयस्तद्धितः। विमुच्यध्वमित्यादिना विमोचनीययज्ञस्य जुहुयात्। सर्वबीजवपनसमाप्तावयं यज्ञः स्वस्तये।। ९ ।।

**त्रातारमिन्द्रमिति द्वे पर्ययणस्य।। १० ।।**

पर्ययणं खलप्राप्तानां व्रीहीणां क्षोदनं बलीवर्दचरणैर्गाहनं यत्र गाहिकेति प्रसिद्धिरार्याणाम्। तत्प्रयोजनस्य यज्ञस्य त्रातारमिन्द्रमित्यादिना द्वयेन जुहुयात्। पर्ययणे द्वे साधने इति तु सूत्रान्वयः।। १० ।।

**एवं प्रथमोद्वपनस्य ।। ११ ।।**

प्रथमोद्वपनं व्रीह्यादीनां नवनिष्पन्नानामाद्यं वपनम्। तत्प्रयोजनस्य यज्ञस्य त्रातारमिन्द्रमिति द्वे साधनभूते ऋचौ।। ११ ।।

**उदुत्तमं मुमुग्ध्युदुत्तं वरुणेति वरुणयज्ञस्य।। १२ ।।**

तडाकप्रतिष्ठाकालेऽयं वरुणयज्ञः।। १२ ।।

**सं वरत्रां हिरण्यकेशमवटमिति कूपयज्ञस्य।। १३ ।।**

नवकूपप्रतिष्ठाकालेऽयम्।। १३ ।।

**प्र वां दंसासीति मण्डपानाम्।। १४ ।।**

तमेव यज्ञं कृत्वा कूपसंस्कारार्थं मण्डपानां यवमयानां हुत्वा शेषं भक्षयेदिति शेष इति माथुरप्रभृतयः। अन्ये मण्डपानामिति पाठं दृष्ट्वा व्याचक्षते किल - मण्डमुदकमुच्यते, मण्डं पिबति इति मण्डपः सेतुर्नद्यादितरणोपायः। तेषां प्रतिष्ठार्थं यज्ञं कुर्यात् प्र वां दंसासीतिमन्त्रेण होमान्तम्। कश्मीरेषु च एतद्बाहुल्येन कर्म दृश्यत इत्यादित्यदर्शनेन व्याख्यातम्।। १४ ।।

**देवेभ्यो वनस्पत इतिं वनस्पतियज्ञस्य।। १५ ।।**

फलतरुरोपणकालेऽयम्।। १५ ।।

**वनस्पते वीड्वङ्ग इति रथयज्ञस्य।। १६ ।।**

नवनिर्मितरथारोहणार्थम्।। १६ ।।

**धन्वना गा इति द्वाभ्यां धनुर्यज्ञस्य।। १७ ।।**

धनुषो ग्रहणकाले मासवेधकाले चायं क्षत्रियाणां प्रथमकल्पेन, एवं कृष्यङ्ग-कर्म वैश्यानामुक्तमिति ज्ञेयं तेषामेव कृषिवृत्तिस्मरणात्, अनुकल्पेन त्वन्यत्र। यदुक्तम् -

'प्रभुः प्रथमकल्पेऽपि योऽनुकल्पेन वर्तते।
स नाप्नोति फलं तस्य परत्रेति विचारितम्।।' (मनु० ११.३०)

इति ।। १७ ।।

**रात्री व्यख्यदिति द्वाभ्यां रात्रियज्ञस्य।। १८ ।।**

रात्रिजागरणसमयेऽयम्।। १८ ।।

अथ मन्त्रभाष्यम्। तत्र गावो भग इति द्वे पदे -

**गावो भगो गाव इन्द्रो मे अच्छा गावः सोमस्य प्रथमस्य भक्षः।**
**इमा या गावः सजनास इन्द्र इच्छामीद्धृदा मनसा चिदिन्द्रम्।। १ ।।**

हे सजनासः समाना जनाः, इमा या गावस्ता अहमच्छा इच्छामि आभिमुख्येन इच्छामि अभिलषामि हृदा हृदयेन, मनसा, चिदिति निपातश्चार्थे, मनसा च मननेन। किमर्थम्। इन्द्रं यष्टं सान्नाय्येन। इन्द्रयागेनापि किमिति चेत्, इन्द्र इच्छामि भवितुमिति योजनीयम्। नित्यनैमित्तिककर्मानुष्ठानेन ज्ञानसहकारिणा मोक्षाभिधान-परमात्मलयो भवति। किञ्च गावः सोमस्य प्रथमस्य भक्षः, गाव इति व्यत्ययेन षष्ठ्यर्थे प्रथमा, गवां सोमस्य प्रथमस्योत्कृष्टस्य हविषः सान्नाय्यस्याभिषुतरसस्य शेषो भक्षो भवतीति सोमयागेषु। अतो मे मम गाव एव भगः प्रधानं धनं गाव एवेन्द्र, इन्द्रलये हेतुत्वात्।। १ ।।

**न ता अर्वा रेणुककाटो अश्नुते न संस्कृतत्रमुपयन्ति ता अभि।**
**उरुगायमभयं तस्य ता अनु गावो मर्तस्य विचरन्ति यज्वनः।। २ ।।**

अर्वतीत्यर्वा अश्वः। स ता गा न अश्नुते न व्याप्नोति। कीदृशः रेणुककाटः

पार्थिवस्य रजस उद्भेदकः। संस्कारैर्निवारितमलान् द्विजातीन् तृणाति हिनस्तीति संस्कृतत्रः, तं पापिष्ठं ता गावो नाभ्युपयन्ति तस्य समीपमाभिमुख्ये नागच्छन्तीत्यर्थः। किं तर्हि। उरूणि महाप्रभावाणि कर्माणि गच्छति अनुतिष्ठति, उरूपि वेदादीनि वा गायति यः स उरुगायो महाप्रभावो धार्मिकस्तस्य यज्वनः अभयस्य अधर्मभयरहितस्य गृहे अनु विचरन्ति क्रीडन्ति ता गावः। मर्तस्य मर्त्यस्य। उरुगायमिति अभयमिति षष्ठ्यर्थे द्वितीये।। २ ।।

सीरा युञ्जन्तीति तिस्रः। अदितिनिर्ऋत्योरार्षम्। तत्र प्रथमोत्तमाभ्यां युनक्तीत्युक्तम्। प्रथमा गायत्री तावत् -

**सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक्।**
**धीरा देवेषु सुम्नयुः।। १ ।।**

कवयः क्रान्तफालदर्शनाः सीराणि फालानि युञ्जन्ति यूपेषु नियोजयन्ति। युगा वितन्वते पृथक्, युगानि बलीवर्दस्कन्धेषु निदधति पृथक् पृथक्। धीरा देवेषु, विजिगीषुषु द्योतमानेषु वा मध्ये बुद्धिमन्तः। सुम्नयुः, सुम्नयवः व्यत्ययेनैकवचनं, सुम्नं सुखमिच्छन्ति आत्मन इति सुम्नयवः 'क्याच्छन्दसि' इति उप्रत्ययः।

अथोत्तमा -

**पूषा युनक्तु सविता युनक्तु बृहस्पतिः सविता देवो अग्निः।। ३ ।।**

द्विपदा। त्रिष्टुप्। पूषा यूपं युनक्तु दान्तस्कन्धे निदधातु। सविता युनक्त्विति समानम्। एकस्य सवितृशब्दस्य सकलकृषिफलप्रसवक्रियाणां कर्ता वाच्य इत्यपौनरुक्त्यम्।। ३ ।।

मध्यमया फालं युनक्तीत्युक्तम्। सा व्याख्यायते -

**युनक्त सीरा वि युगा तनोत कृतो योनिर्वपतेह बीजम्।**
**गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात्।।**

त्रिष्टुप्। सीराणि फालानि युनक्त यूपेषु योजयत। वि युगा तनोत, युग्यानि वितनुत, अगम्यासु योक्त्राणि विसारयतेत्यर्थः। कृतो योनिः, हलबलीवर्दादिकृतो योनिरस्ति। अत इह क्षेत्रेषु बीजं वपत। गिरा च श्रुष्टिः स भरा असन्नः, नः अस्माकं श्रुष्टिः कीर्तिरसदस्तु कर्षणात्। यज्ञादिद्वारेण श्रूयते या श्रवणक्रियेप्सिततमा सा

श्रुष्टिः। कया। गिरा वाचा श्रुतिस्मृतिरूपया। कीदृशी श्रुष्टिः। सभरा, भर इति तेजोनामसु पठ्यते, हरति साधुमनांसि तमांसि वेति भरः, 'हृग्रहोर्भश्छन्दसि' इति हस्य भत्वम्, सभरा सतेजस्का इत्यर्थः। नेदीय इत्सृण्यः पक्वमेयात्, इदिति पाद-पूरणे, अतिशयेन निकटमचिरेणैव कालेन पक्वं सत् अन्नमस्माकं आ इत्यात् आगच्छतु। सृण्यः, सृण्या इवाकृष्टो हस्ती, सृणिरङ्कुशः।

**शुनं सुफाला वितुदन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः।**
**शुनासीरा हव्यजुष्टिं जुषाणेदं बीजमवतमुप्यमानम्।।**

शुनः वायुः, सीरः आदित्यः। हे शुनासीरौ इदं बीजमवतं, हव्यजुष्टिं जुषाणा, हविर्जोषं जुषमाणौ हविः सेवमानौ, द्विवचनस्य 'सुपां सुलुक्' इत्याकारः। किञ्च युष्मत्प्रसादात् कीनाशाः कर्षकाः शुनं सुखं कृत्वा भूमिं वितुदन्तु व्यथयन्तु पाटयन्तु। तथा सुफालाः सुसंयुक्तफालाः सन्तः एतैर्वाहैर्बलीवर्दैः अभियन्तु अभि-गच्छन्तु प्राप्नुवन्तु फलसमृद्धिम्।

**लाङ्गलं पवीरवं सुशेवं सोमपिच्छरु।**
**उदिद्वपति गामविं प्रस्थावद्रथवाहनं प्रहव्यं च पीवरीम्।।**

पङ्क्तिः। इत् उत्, एतौ निपातौ पादपूरणार्थौ। लाङ्गलं फालं वपति बीजम्। तदेतावन्न तावत् वक्तव्यं धान्यादिकमेवोत्पादयति, किं तर्हि, गवाश्वयागादिकं सर्वं सस्यव्रीह्यादिद्वारेण। बहुलादन्नात् सर्वं हि उद्भवति विक्रयादिमुखेन। अत उच्यते लाङ्गलं गां वपति अविं च वपति रथवाहनं च तुरगादिकम्। कीदृशम्। प्रस्थावत् सवेगगमनम्। प्रकृष्टं च हव्यं वपति यज्ञसाधनं पीवरीं तरुणं युवतिं च लिङ्गव्य-त्ययेन तन्त्रेण। पवीरवं पविश्चक्रनेमिः, पवेरिव रवो यस्य तत् पवीरवं यथाहि रथो गच्छन शब्दविशेषं करोति तथा फालं धरणिं पाटयत। सुशेवं, शेवः सुखं ससुखम। सोमपिच्छरु शरु फालमूर्धा अथवा ये भूमिगताः प्रच्छन्ना दानवादयः सोमं पिबन्ति अपहत्य तान् भूमिविदारणव्याजेन शृणाति हिनस्तीति सोमपिच्छरुफालम्।

**घृतेन सीता मधुना समज्यतां विश्वैर्देवैरनुमतं मरुद्भिः।**
**ऊर्जो भागं मधुमत्पिन्वमानास्मान्सीतेपयसा न्यावववृत्स्व।।**

सीता भूमिदेवता घृतेन मधुना मधुररसेन समज्यतां सन्तृप्यताम्। त्वमपि च सन्तर्पिता सती हे सीते अस्मान् पयसा क्षीरेण सह अभ्याववृत्स्व आभिमुख्येन

आवर्तस्व पुनः पुनः साम्मुख्यं भजस्व। किं कुर्वती। ऊर्जोऽन्नस्य भागं विभजनं देव-ब्राह्मणाद्यर्थं मधुमत् मधुररसयुक्तं पिन्वमाना परिपोषयन्ती। कीदृशं भागम्। विश्वैर्देवै-र्द्योतनै रश्मिभिरनुमतं सम्मतं मरुद्भिर्वायुभिश्च। धरणिसमीरणरविकिरणसंघट्टनघटितं हि सकलमन्नम्।

**विमुच्यध्वमघ्न्या देवयाना अगन्म तमसस्परं ज्योतिरपाम।।**

द्विपदा जगती। हे अघ्न्याः अहन्तव्या विमुच्यध्वमस्मदुपकारेण परलोके देवयाना देवशरीरा भूयास्त। वयमपि युष्मत्प्रसादाहितान्नादिना सत्कर्माणि कृत्वा तमसः अविद्यायाः परम् अगन्म गमिष्यामः, गत्वा च तमसः परं ज्योतिरपाम परं ब्रह्म प्राप्स्यामः।

त्रातारमिन्द्रमिति द्वे।

**त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम्।**
**ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः।।**

व्याख्यातेयम्।। द्वितीया तु -

**उग्रो जज्ञे वीर्याय स्वधावाञ्चक्रिरपो नर्यो यत्करिष्यत्।**
**जग्मिर्युवा नृषदनमवोभिस्त्राता न इन्द्र एनसो महश्चित्।।**

इन्द्रो नोऽस्माकं महश्चित् महत एनसः पापात् त्राता गोपायिता। स हि उग्रः प्रचण्डो जज्ञे जातः वीर्याय रिपुवधाय। स्वधावान् स्वधाया अन्नस्य यज्ञे भोक्ता उत्पादयिता वृष्ट्यादिद्वारेण। नरेभ्यो हितः। अपश्चक्रिः, अप इति कर्मनाम, करोति चक्रिः, कर्म करोति। यत् करिष्यत्, यच्चिकीर्षितम्। जग्मिर्युवा नृषदनं, नरः सीदन्ति अस्मिन् नृषदनं यज्ञः, गच्छतीति जग्मिर्यज्ञस्य गन्ता, युवा नित्यतरुणः समर्थः यौति मिश्रयति चात्मजीवात्मानौ ज्ञानकर्मसमुच्चययुक्त्येति युवा। अवोभि-रवनैः रक्षणप्रकारैस्त्रातेति सम्बन्धः।

**उदुत्तमं मुमुग्धीति उदुत्तमं वरुणेति च द्वे**

**उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत।**
**अवाधमानि जीवसे।। १ ।।**

**उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय।**
**अथा वयमादित्य व्रते तवानागसो अदितये स्याम।।**

शुनःशेपस्यार्षम्। द्वितीया व्याख्याता सन्ध्योपासने। हे वरुण उदुत्तमं पाशं विचृत 'चृती-च्छेदने' विच्छिन्धि, अवाधमानि पाशबन्धनानि विचृत। जीवसे जीवनाय।

**सं वरत्रामिति हिरण्यकोशमवटमिति द्वे।**

**सं वरत्रां दधातन निराहावं कृणोतन।**

**सिञ्चामहा अवतं वयमुद्रिणं विश्वतोऽदस्तमक्षितम्।।**

कूपार्थमुच्यते। वरत्रां बलत्रां पानीयाकर्षणार्थं च चर्ममयीं रज्जुं सन्दधातन। निराहावं कृणोतन, निराहावं जलनिर्गमनमार्गं कुरुत, यतो वयमवतं अवटं कूपगतं सिञ्चामहे सिञ्चामः परिपूरयामः। कीदृशमवतम्। उद्रिणं ऋणा जलधारा उद्‌गतजलधारम्, तथा विश्वतः सर्वतः अदस्तमनुपहिंसितं, अक्षितं अक्षीणम्। कूपखानकादय एवमुच्यन्ते। घटारघट्टादिर्वानिराहावः, निराहूयते आदीयतेऽनेन जलमिति निराहावः।

**हिरण्यकोशमवटं सुवरत्रं सुषेचनम्।**

**उद्रिणं सिञ्चे अक्षितम्।।**

अवटं कूपं सिञ्चे सिञ्चामि पूरयामि। कीदृशम्। हिरण्यकोशं सुवर्णकोशवत् उज्ज्वलं, सुवरत्रं शोभनरज्जुं, सुषेचनमारामं पिपासितहृदयादेः, उद्रिणं ऊर्ध्वप्रवृत्तजलधारं, अक्षितमनुपक्षीणमनवरतोपयुज्यमानजलमपि।

**प्र वां दंसास्यश्विनाववोचमस्य पतिः स्यां सुगवः सुवीरः।**

**उपपश्यन्नश्नवन्दीर्घमायुरस्तमिवेज्जरिमाणं जगम्यात्।।**

व्याख्यातेयम्।

**देवभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम्।**

**प्रदक्षिणेद्रशनया नियूयर्तस्य वक्षि पथिभी रजिष्ठैः।।**

हे वनस्पते अग्रे, त्वमृतस्य यज्ञस्य हवींषि वक्षि प्रापयसि देवेभ्यो देवार्थं, प्रदक्षिणेद्रशनया नियूय, प्रदक्षिण इदिति पादपूरणार्थः प्रदक्षिणं कृत्वा रशनया रज्ज्वा नियूय सम्मिश्रीकृत्य रज्ज्वा प्रापयसीत्यर्थः। पथिभिर्मार्गैः। कीदृशैः। रजिष्ठै रजोयुक्तैः। हे हिरण्यपर्ण सुवर्णपत्र प्रदिवस्ते अर्थं प्रतिदिवसं ते तव प्रयोजनं भवति नित्येषु कर्मसु प्रतिदिनं हविषो वहनात्, अथवा प्रदिवः प्रकृष्टायां दिवि स्वर्गस्थितेभ्यो देवेभ्यस्तव प्रयोजनम्। वनस्पतेरधिष्ठात्री देवता अग्निरत्र सम्बोध्यते।

**वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः।**
**गोभिः सन्नद्धो असि वीडयस्वास्थाता ते जयतु जेत्वानि।।**

वीडुशब्दः संस्तम्भनामसु पठ्यते। वीडूनि परस्परसंस्तम्भनसमर्थानि अङ्गानि यस्य स वीड्वङ्गः। हे वनस्पते रथ त्वं सखा हि अस्माकं, तथा प्रतरणः प्रकर्षेण तारयति अध्वानमिति प्रतरणः, शोभना भटाः सारथ्यादयो यस्य स सुवीरः, गोभिः गोचर्मभिः सन्नद्धः बद्धोऽसि। त्वं वीडयस्व अवस्तभ्नीहि धारय सारथ्यादीन् दृढावयव संश्लेषद्वारेणेत्यर्थः। आस्थाता ते जयतु जेत्वानि तथा अधिष्ठाता स्वामी जेत्वानि जेतव्यानि जयतु।

**धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम।**
**धनुः शत्रोरप कामं कृणोतु धन्वना सर्वाः प्रदिशो जयेम।।**

धन्वना 'ऊधसोऽनङ्' 'धनुषश्च' धनुषा गवादीन् पशून् जयेम। आजिं संग्रामं च धनुषा जयेम। तथा धन्वना तीव्रा उद्धताः समदोऽत्यन्तं मदवतीः शत्रुसेनाश्च जयेम। किञ्च इदं धनुः शत्रोः शातायितुः कामं काम्यमानमभिलषितमखिलमपकृणोतु अपसारयतु विनाशयतु। तथा धनुषा सर्वदिग्वासिनः प्रकृष्टान् योद्धॄन् जयेम।

**वक्ष्यन्तीवेदागनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना।**
**योषेव शिङ्क्ते वितताधिधन्वञ्ज्या इयं समरे पारयन्ती।।**

इयं ज्या गुणः कर्णं कर्णान्तं आगनीगन्ति आकृष्टा सती अतिशयेन आगच्छति। वितताधिधन्वन्, धनुषि वितता विस्तारिता, पारयन्ती शक्नुवती समरे संग्रामे। किञ्च आकृष्यमाणा शिङ्क्ते अव्यक्तं शब्दं करोति वक्ष्यन्तीव विवक्षुरिव कर्णमागनीगन्ति, इदिति पादपूरणार्थः। किञ्च परिषस्वजाना समाश्लिष्यन्ती। केव। योषेव सुन्दरी, सापि परिरिरंसुरेवं भवति।

**रात्री व्यख्यदायती पुरुत्रा देव्यक्षभिः। विश्वा अधि श्रियोऽधित।।**
**उप ते गा इवाकरं वृणीष्व दुहितर्दिवः। रात्रि स्तोमं न जिग्युषी।।**

एते व्याख्याते।

**।। इति प्रकीर्णयज्ञमन्त्राः।।**

**।। इत्येकसप्ततितमी काण्डिका।। ७१ ।।**

## ।। अथ द्वासप्ततितमी काण्डिका ।।

**समुपहतेऽद्भुते वा शान्त्यै शमीशमुकशाम्यवाकमश्वत्थप्लक्षन्यग्रोधोदुम्बरं दूर्वा च दर्भपिञ्जलानि सुमनश्चापामार्गं सर्वबीजानि सीतालोष्टं गोमयं हिरण्यं वल्मीकवपां चाद्भिः संसृजति सं वः सृजामीति द्वाभ्याम्।। १।।**

सम्यगुपघातः समुपहतं व्याधिदुर्भिक्षशत्रूदयादिस्तस्मिन् सति, अद्भुते वा अद्भुतमकालोत्थमुल्काधूमकेतुगगनाङ्गणपटहरवाकर्णनदुःस्वप्नाद्यनिष्टसूचकं तस्मिंश्च सति, शान्त्यै शान्त्यर्थं शम्यादीनि षोडश द्रव्याणि अद्भिः सह संसृजति मिश्रयतीत्यर्थः वानस्पत्यान्यन्तर्भावयतीत्यर्थः। पूर्वमेवोद्धृत्य प्रोक्षणकूर्चं कुर्यात् सदाचारात्। सीता हलविलिखिता भूमिस्तस्या लोष्टो मृत्पिण्डः। सम्मिश्रणं तु, सं वः सृजामीति द्वाभ्यां मन्त्राभ्याम्। आज्यभागान्ते चायं संसर्ग इष्टः।। १ ।।

**या ओषधय इत्यनुवाकेन संयूय।। २ ।।**

या ओषधय इत्यादिना अनुवाकेन संयोज्यालोडयतीत्यर्थः।। २ ।।

**अपास्मदेत्विति चतसृभिः सम्प्रोक्षणम्।। ३ ।।**

अपास्मदित्यादिभिश्चतसृभिर्ऋग्भिराज्यभागान्ते सम्प्रोक्षणं तावदेकं कुर्यात्। अथ कस्येदं सम्प्रोक्षणम्। अश्वेभाजपुरुषरथगृहक्षेत्रप्रभृतेः, तथा सदाचारात् -

**पारम्पर्यवशायात आचारो वेदपूर्वकः।**
**प्रमाणं वेदसंयोगभाजामाचमनादिवत्।। ३ ।।**

**देवाद्भुतेषु यन्नो भयमित्यष्टर्चेन स्थालीपाकस्य जुहोति।। ४ ।।**

देवाद्भुतेषु देवाश्रयेषु चन्द्रार्कादिदोषेषु भयनिमित्तेषु सत्सु यन्नो भयमित्यष्टाभिः ऋग्भिः स्थालीपाकेन अष्ट आहुतीर्जुहुयात्।। ४ ।।

**यद्देवा देवहेडनमिति तिसृभिः।। ५ ।।**

तदनन्तरं यद्देवा इत्यादिभिस्तिसृभिस्तिस्र आहुतीरन्याः स्थालीपाकस्य जुहुयात्।। ५ ।।

**भद्रं कर्णोभिरिति चतसृभिः।। ६ ।।**

चतस्र अन्या आहुतीः स्थालीपाकस्य जुहुयात्।। ६ ।।

**उक्तं सम्प्रोक्षणम्।। ७ ।।**

अस्मिन्नेवावसरे पूर्वोक्तमेव अपास्मदेत्विति चतसृभिः सम्प्रोक्षणं द्वितीयं कुर्यात्।। ७।।

**धूर्भिरुपधूर्भिश्च हुत्वा पुनः सम्प्रोक्षणम्।। ८ ।।**

स्थालीपाकानन्तरमृतुतिथ्यादयः प्रागुक्तनयेन स्विष्टकृदङ्गभूताः कर्तव्याः। ततो धुर उपधुरश्चान्या आहुतयः कार्याः। ततः स्विष्टकृदादितन्त्रं समापनीयम्। ततस्तृतीयं प्रोक्षणं कर्तव्यमिति तात्पर्यतो ज्ञेयम्।। ८ ।।

अथ मन्त्रभाष्यम् -

**सं वः सृजामि हृदयं संसृष्टं मनो अस्तु वः।**
**संसृष्टास्तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः।।**
**सं या वः प्रियास्तन्वः सं प्रिया हृदयानि वः।**
**आत्मा वो अस्तु सं प्रियः सं प्रियास्तन्वो मम।।**

अनुष्टुभौ। वेधसो वैष्णवस्यार्षम्। वः युष्माकं शमीप्रभृतीनां हृदयं सारं संसृजामि संयोजयामि परस्परं सम्बद्धं करोमि यद्वा सीतादीनां अधिष्ठात्र्यो देवताः संसृज्यन्ते, तासां च हृदयादिसम्भवः यजमानेनास्पदादिसम्बन्धनिभेन, अधर्मापसारणाय हृदयादीनामद्भिः संसर्ग आशास्यते। संसृष्टं सम्बद्धमेककार्यसम्पादनक्षमं युष्माकं मनो अस्तु मदीयं युष्मन्मनोभिर्युष्मदीयं च परस्परम्। एवं तन्वस्तनवः संसृष्टा युष्माकं सन्तु। प्राणो जीवः संसृष्टो भवतु।। १ ।।

या वो युष्माकं तनवस्ताः प्रियाः, तथा हृदयानि चित्तानि प्रियाः प्रियाणि सुखकारीणि संसन्तु सम्यक् भवन्तु। मदीया अपि शरीरादयः शान्तिकर्मणि करणीये श्रेयस्कराः सन्तु इत्यर्थः।। २ ।।

या ओषधय इत्यादिरनुवाकः। अनुष्टुप् छन्दः। आथर्वणस्य भिषज आर्षम्। प्राधान्यादोषधीस्तुतिः। तं क्रमेण व्याख्यास्यामः -

**या ओषधयः प्रथमजा देवेभ्यस्त्रियुगं पुरा।**
**मनै नु बभ्रूणामहं शतं धामानि सप्त च।। १ ।।**

या देवेभ्यः प्रथमजा ज्येष्ठा ओषधयः, कियता कालेन ज्येष्ठाः, त्रियुगं पुरा त्रिभिर्युगैः पूर्वभूता ज्येष्ठा इत्यर्थः, तासामोषधीनां बभ्रूणां पक्वरसयोगेन पाटलानामहं धामानि स्थानानि नामानि तेजांसि च मनै मन्ये जानामि। कियन्ति। शतं सप्त च सप्ताधिकं शतमित्यर्थः, पुरुषस्य मर्माणि सप्ताधिकं शतं, तान्येवौषधीनामित्याहुः।।

**शतं वो अम्ब धामानि सहस्रमुत वो रुहः।**
**अधा शतक्रतवो यूयमिमं मे अगदं कृत।। २ ।।**

समुदायादुद्धृत्यैकस्या ओषधेः सम्बोधनम्। हे अम्ब ओषधे शतं धामानि युष्माकं सहस्रमुत धामानि सहस्रं चेत्यर्थः, असङ्ख्यानि धामानीत्यर्थः। अधा अथ सम्मिश्रीकरणानन्तरं शतक्रतवो बहुकर्माणो मम सम्बन्धिनमिमं सम्मिश्रितद्रव्यसमूह-मगदं विषापसारणसमर्थं कृत कुरुत।। २ ।।

**पुष्पवतीः प्रसुमतीः फलिनीरफला उत।**
**अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः।। ३ ।।**

याः पुष्पवत्यः सुमनःप्रभृतयः, याश्च प्रसवेन गुल्ममञ्जर्यादिना युक्ता यवाद्याः, याश्च फलिन्यो मुद्गाद्याः, याश्च फलपहिताश्चन्दनाद्याः, याश्च वीरुधः, ताः सर्वा एताः पारयिष्णवो नः पारयन्तु विघ्नोपशान्तिमित्यर्थः। अश्वा इव सजित्वरीः, यथा बडबा वेगवाहिन्योऽन्योन्यस्पर्धया जयनशीला अश्वारोहं पारं नयन्ति, तथा ओषधयः सन्तु इत्यर्थः।। ३।।

**ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे।**
**रपांसि विघ्नतीरित रक्षश्चातयमानाः।। ४।।**

'उष-दाहे' इत्यस्य किल ओषशब्दः, ओषं दाहं विप्लवं धयन्ति नाशयन्तीति ओषधयः। हे मातरः ओषधयो यूयं यथार्थेन नाम्ना प्रसिद्धाः। ततो देवीरोषधीः युष्मान् अहमुपब्रुवे ब्रवीमि, रपांसि पापानि विघ्नतीः नाशयन्तीः।। ४।।

**अश्वत्थे वो निषदनं पर्णे वो वसतिः कृता।**
**गोभाज इत्किलासथ यत्सवनाथ पूरुषम्।। ५।।**

हे ओषधयः यत् यस्मात् अश्वत्थे युष्माकं निषदनमवस्थानं पर्णे च पलाशे वसतिर्निवासः कृतः संसर्गेऽन्योन्यान्वितत्वसम्पादनात्, यतश्च गोभाजः गवां सेवकाः आप्यायका आसथ भवथ, तथा पुरुषं सनवाथ 'वन-षण-सम्भक्तौ' पुरुषं विभजथ ओदनादिद्वारेण सन्तर्पयथ, एवम्भूता भवत्यः प्रस्तुतकार्यं कुर्वन्तु इत्यर्थः।। ५।।

**अश्वावतीं सोमावतीमूर्जयन्तीमुदोजसम्।**
**आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये।। ६।।**

अहं सर्वा ओषधीः आवित्सि आवेद्मि। अश्वावतीमित्यादौ व्यत्ययेनैकवचनम्, अश्वानां पोषिकाः। सोमावतीं सोमलतापरिपोषिकाः। ऊर्जयन्तीः बलमुत्पादयन्तीः। उदोजसम् उद्गतेन ओजसा बलेन युक्ताः। एवम्भूता सर्वा आवेद्मि, अतोऽस्मा अरिष्टतातये सन्तु ताः सर्वाः 'रुष-रिष-हिंसायाम्' रिष्टं हिंसितमरिष्टं श्रेयः, तननं ततिर्विस्तारः, तदर्थमस्माकं सन्तु। अथवा अश्वा इति तेजोनाम, सोम इति शीतनाम, तेन शीतोष्णवीर्यवतीरित्यर्थः।। ६।।

**यदौषधयः समग्मत राजानः समिताविव।**
**विप्रः स उच्यते भिषग्रक्षोहामीवचातनः।। ७।।**

यदा यस्मिन्काले ओषधयः समग्मत सङ्गताः परस्परं सम्बद्धा भवन्ति राजान इव समितौ सङ्ग्रामे महाबलपराक्रमाः, तदा तत्प्रसादादेव प्रयोक्ता ओषधीनां शान्तिकर्मणां च भिषक् वैद्यो विप्रश्च विद्वान् ब्राह्मणो यथायथं रक्षोहा रक्षःप्रभृतीनां हन्ता, अमीवानं व्याधिरोगं चातयति नाशयतीत्यमीवचातन उच्यते, नान्यदा। शान्तिकर्मणि प्रयुज्यमाना ओषधय एव शमीप्रभृतयो रक्षःप्रभृतीनुपद्रवकारिणो घ्नन्ति, पञ्चमूलप्रभृतयश्च ओषधयो ज्वरादिरोगान्। तत्सम्बन्धमात्रेण ब्राह्मणवैद्यप्रभृतयः कीर्तिमासादयन्तीति तात्पर्यम्। स विप्र उच्यते, रक्षोहा स भिषगुच्यते अमीवचातनस्तदेति सम्बन्धः।। ७।।

**उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते।**
**धनं सनिष्यन्तीनामात्मानं तव पूरुष।। ८।।**

शुष्मा बलनाम। उदित्युपसर्ग ईरत इत्यनेन सम्बध्यते। ओषधीनां शुष्मा बलानि सामर्थ्यानि उदीरते उत्कर्षेण उत्साहे प्रेरयन्ति कुशलिनो वयं सम्पन्ना इति

तत्प्राप्तावध्यवसायोपादानम्। का इव। गाव इव गोष्ठात्, गोस्थानाद्गाव इव क्षीरादिसामर्थ्येन उत्साहकारिण्य ओषधय इत्यर्थः। कीदृशीनामोषधीनाम्। धनं द्रविणं सनिष्यन्तीनां विभजमानानां ददतीनाम्। किं धनम्। आत्मानम्, ओषधीनामुपयुज्यमानानां न स्वरूपं नश्यति, अत आत्मानमेव ता ददतीति गवादिभ्य उपकारिभ्यो व्यतिरेकः। आत्मव्यतिरेकेणैव परोपकरातिशयमोषधयः कुर्वन्तीति महाप्रभावत्वेन स्तुत्यतिशयः। केन रूपेण सनिष्यन्तीनाम्। तव पूरुष, हे पुरुष तव कृते अयं पुरुष आत्मा अस्माभिः समर्पितस्त्यक्त इति भणित्वा आत्मानं धनं वितरन्ति ता जीमूतवाहनप्रायाः। यथोक्तम् -

'निजनागकुलप्राणैः प्राणान् रक्षति वासुकिः।
स्वप्राणैस्तु परप्राणान्वपुर्जीमूतवाहनः।।' इति।। ८।।

**अति विश्वाः परिष्ठाः स्तेन इव व्रजमक्रमुः।**
**ओषधयः प्राचुच्यवुर्यत्किञ्च तन्वो रपः।। ९।।**

अतिशब्दः अक्रमुरित्यनेन सम्बध्यते। विश्वाः सर्वाः परिष्ठाः समन्तात् स्थिताः ओषधयोऽत्यक्रमुः अतिशयेन क्रामन्ति गच्छन्ति। कं गच्छन्ति। व्रजं शान्तिकरणोद्यतं ब्राह्मणसमूहं ज्वरादिशमनोद्यतमोषधिसङ्घम्। यद्येवं किमिति शम्यादिवत् सर्वा न दृश्यन्ते इति चेदत आह - स्तेन इवेति प्रच्छन्नरूपेणेत्यर्थः। आगच्छन्त्यः किं कुर्वन्तीति चेदत आह प्राचुच्यवुर्यत्किञ्च तन्वो रपः, रपः पापं, यत्किञ्च तनोः शरीरस्यात्मद्वारकमस्ति, तत्सर्वं प्राचुच्यवुः प्रकर्षेण च्यावयन्ति।। ९।।

**यास्त आतस्थुरात्मनमाविविशुः परुष्परुः।**
**तास्ते यक्ष्मं विबाधन्तामुग्रो मध्यमशीरिव।। १०।।**

व्याध्याद्युपद्रुतमुद्दिश्योच्यते। या ओषधयस्तवात्मानं सोपद्रवं शरीरमाविविशुः प्रविष्टाः, परुष्परुरातस्थुः पर्व पर्व व्याप्यास्थिताः रसपरिणतिद्वारेण, तास्ते यक्ष्मं व्याधिं बाधन्तां नाशयन्तु। क इव कम्। उग्रो मध्यमशीरिव, मध्यमलोके अन्तरिक्षे शेते मध्यमशीर्मेघोऽन्धकारो वा, उग्रः पुनर्वायुरादित्यो वा, यथा प्रचण्डो वायुर्मेघमपसारयति आदित्यो वा तमस्तथा तव ओषधयो व्याधिमपनयन्तु।। १०।।

**यदहं वाजयन्निमा ओषधीर्हस्त आदधे।**
**आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा।। ११।।**

यत् यदा अहमोषधीर्हस्ते आदधे गृह्णामि, किं कुर्वन्, वाजयन् स्तुवन्नित्यर्थः, अथवा वाजशब्देनान्नवाचिना तत्कार्यं बलं लक्ष्यते बलमाचरन्, तदा यक्ष्मस्य रोगस्य आत्मा पुरा पूर्वं शीघ्रमेव विनश्यति। कस्येव। जीवगृभो यथा, जीवं गृह्णाति जीव-गृहो घातकश्चौरादिस्तस्य यथा राजाधिकृतहस्तनिगृहीतमात्रस्य आत्मा पूर्वमेव नश्यति त्यक्तजीवाशतया मृतप्रायो भवति चेष्टाविहीनस्तद्वत्।। ११।।

**निष्कृतिर्नाम वो माताथो त्वमसि निष्कृतिः।**
**सरः पतत्रिणीः स्थ यदामयति निष्कृत।। १२।।**

हे ओषधयः, वो युष्माकं निष्कृतिर्नाम माता निर्मात्री। निष्कृतिः प्रतिविधानं, प्रजापतिर्निष्कृतिः सर्वप्रतिपादनेषु समर्थत्वात्। अथो अतो हेतोः हे ओषधयः यूयं निष्कृतयो भवथ कारणानुरूपत्वात् कार्यस्य। त्वमसि भवसि निष्कृतिरिति व्यत्ययेनैकवचनम्। अतः सरः पतत्रिणीः स्थ, सरन्तीति सरः वेगवत्यः पतत्रिण्य इव स्थ भवथ सम्पद्यध्वम्। यदामयति रुजति व्याध्यादिकं, तन्निष्कृत, 'कृती-छेदने', निःशेषेण कृत नाशयत।। १२।।

**साकं यक्ष्म प्रपत चाषेण किकिजीविना।**
**साकं वातस्य ध्राज्या साकं नश्य निहाकया।। १३।।**

हे यक्ष्मरोग चाषेण पक्षिविशेषेण हिंसनपिशुनेन सह प्रपत प्रकर्षेण गच्छ दूरम्। कीदृशेन चाषेण। किकिजीविना किकीति शब्दानुकृतिः, शब्दं कुर्वन् यो जीवति प्राणान् धारयति स किकिजीवी, तेन। अन्योऽपि चाष उच्यते योऽसम्बद्धं प्रलपति पिशुनादिः। सहि वेगगामी भवतीति सहगमने त्वरितत्वमिह विवक्षितम्। एवमुत्तरत्र। साकं वातस्य सम्बन्धिन्या ध्राज्यया गत्या प्रपत। साकं नश्य निहाकया निहन्तीति निहाका तया विद्युता साकं नश्य प्रध्वंसखेत्यर्थः।। १३।।

**अन्या वो अन्यामवत्वन्यान्यस्या उपावत।**
**ताः सर्वाः संविदाना इदं मे प्रावता वचः।। १४।।**

हे ओषधयः वो युष्माकं मध्ये अन्या अन्यामवतु परस्परमात्मानं रक्षतेत्यर्थः, अन्या अन्यस्याः समीपं गच्छतु, प्रीणातु इष्टां वा। एवमन्योन्यं सर्वा उपावत परस्परयोगक्षेमेण सङ्घातावस्थां भजध्वम्। ताः सर्वाः समूहावस्थां तुल्ययोगक्षेमत्वं

चापन्ना इदं मे वचनं प्रावत पालयत सत्यार्थं कुरुत। यूयं हि संविदानाः चैतन्यवत्योऽधिष्ठातृदेवद्वारेण।। १४।।

**अवपतन्तीरवदन्दिवोऽन्तेभ्यस्परि।**
**यं जीवमश्नवामहै न स रिष्याति पूरुषः।। १५।।**

ऋषिराह - किल भूमिलोकोपकाराय ओषधयः स्वर्गादवतीर्णाः। ताश्च अवपतन्त्यः अवतरन्त्यः दिवोऽन्तेभ्यस्परि दिवोऽन्तान् लक्षणीकृत्य इदं वक्ष्यमाणमवदन् उक्तवत्यः। किं तत्। जीवं प्राणमश्नवामहै व्याप्नुमः। स नरो न रिष्याति हिंसां न प्राप्नोति यं रसवीर्यपरिणामद्वारेण प्राणिनं व्याप्स्यामः। तस्य हिंसा मा भूदिति बृहस्पत्यादिदेवेभ्यो वरं गृहीत्वा तदनुज्ञाताः सत्य ओषधयो मर्त्यलोकमागता इति यावत्।। १५।।

**याः फलिनीर्या अफला अकोशाः कोशिनीश्च याः।**
**बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः।। १६।।**

याः फलिन्यो व्रीह्याद्याः, याश्च फलविहीनाः सुमनःप्रभृतयः, तथा याः कोशयुक्ता मुद्गाद्याः, कोशशून्याश्च यवाद्या बृहस्पतिप्रसूता बृहस्पतिमुखैर्देवैरनुज्ञाताः, ताः सर्वा नोऽस्मानंहसः पापान्मुञ्चन्तु पापकृतत्वादापदां तदपसारेण रोगादीनां निवारणमभ्यर्थ्यते।। १६।।

**याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः।**
**बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः।। १७।।**

या इदं मदीयाभ्यर्थनवचनं शृण्वन्ति निकटवर्तितया, याश्च न शृण्वन्ति यतो दूरं परागताः दूरे स्थितास्ता अस्मान् पापात् मुञ्चन्तु इति समानम्।। १७।।

**याः सोमराज्ञीर्वरुणस्य राज्ञो**
**यासां विश्वे देवा अधिपतयश्च सर्वे।**
**या अन्तरिक्षे दिवि याः पृथिव्यां**
**ता नः स्तुता ओषधीः पारयन्तु।। १८।।**

सोमो राजा यासां ताः सोमराज्यश्चन्द्रविमुक्तावश्यायाऽऽप्यायिताः, याश्च वरुणस्य राज्ञः सम्बन्धिन्यः, यासां च विश्वे सर्वे देवा अधिपतयः, याश्चान्तरिक्षे

दिवि पृथिव्यां वा अधिष्ठातृदेवतारूपेण स्थिताः, ताः सर्वाः स्तुत ओषधयोऽस्मान् पारयन्तु।। इत्यनुवाकः।।

अपास्मदेत्विति प्रोक्षणे चतस्रः।

**अपास्मदेतु निर्ऋतिर्नेहास्या अपि किञ्चन।**
**अगोतां नाष्ट्रां पाप्मानं सर्वं तदपहन्महे।। १।।**
**अपास्य नैर्ऋतान्पाशान्मृत्योरेकशतं च ये।**
**अपास्य ये सिनाः पाशा मृत्योरेकशतं सुवे।। २।।**
**ये ते पाशा एकशतं मृत्योर्मर्त्याय हन्तवे।**
**तांस्ते यज्ञस्य मायया सर्वानवयजामहे।। ३।।**
**देवीमहं निर्ऋतिं बाधमानः पितेव पुत्रं दमये वचोभिः।**
**या जायमानस्य जायमानस्य शिरो देवी प्रति सूरिर्विचष्टे।। ४।।**

उशनसः काव्यस्यार्षम्। देवता निर्ऋतिः। तिस्रोऽनुष्टुभः। व्याख्याताश्चैताः।। यन्नो भयमित्यष्टौ। ब्रह्मण आर्षम्। अग्निर्यविष्ठो देवता। जगती छन्दः।

**यन्नो भयं गृहमागादबुद्धं यद्देवतः पितृतो यन्मनुष्यतः।**
**अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः।। १।।**

यत् किञ्चित् भयमबुद्धमज्ञातं सत् अस्माकं सम्बन्धि गृहादिकमागात् आगतं देवतः देवेभ्यः, एवं पितृतो मनुष्यतो वा, तत् अग्निः प्रणुदातु अपसारयतु भयम्। कीदृशोऽग्निः। यविष्ठः अतिशयेन युवा तरुणः समर्थ इति यावत्। तदपसारणाच्च अस्मत्सम्बन्धिनीभ्यः प्रजाभ्यः पशुभ्यश्च शं सुखमस्तु प्रजार्थं पश्वर्थं सुखमस्तु इत्यर्थः। उशब्दः समुच्चयार्थः।। १।।

**यदद्भुतं प्रहितं नो अमित्रैर्गृहे निखातं यदि वापि क्षेत्रे।**
**अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः।। २।।**

नः अस्माकममित्रैः शत्रुभिर्यदद्भुतं प्रहितं निहितं गृहे केशकीलपुत्रिकादिकमभिचारार्थं क्षेत्रे वा निखातं, तत् भयं यविष्ठोऽग्निः प्रणुदातु तत्कृतं भयमपसारयतु। तुल्यमन्यत्।। २।।

**यदद्भुतं प्रहितं नो अमित्रैर्गवां गोष्ठे यदि वा पशूनाम्।**

**अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः।। ३।।**

गवां गोष्ठे निवासस्थाने यदि वा पशूनां सञ्चारस्थाने अमित्रैः शत्रुभिर्भय-निमित्तम् अर्कपर्णादि प्रहितं निहितं, तदग्निरिति समानम्। तथाच श्रूयते - 'यं द्विष्टात्तस्य सञ्चरे पशूनां न्यस्येत्' इति।। ३।।

**यदारोहच्छकटं यद्रथं गौरात्मवधे ज्ञातिवधाय सृष्टः।**

**अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः।। ४।।**

'अथैषां गौरेतेनाभिचरन्यजेत' इत्यभिचारार्थो गोसंज्ञकयज्ञे गौरुत्सर्ग आम्नातः। सच शत्रुवर्गे उत्सृष्टो यं यं रथादिकमाक्रामयति, तस्य तस्य पीडा भवति। तदिदमुच्यते - यदस्माकमात्मनो वधाय ज्ञातीनां वा अस्माकं वधाय गौः सृष्टः उत्सृष्टः सन् शाकटरथादिकमारोहति आक्रामति तस्य चाक्रम्यमाणस्य पीडा भयमापतति यत्, तदग्निरित्यादि तुल्यम्।। ४।।

**यां गोमायुर्वदति यामुलूको याश्च वाचो अशिवा वदन्ति।**

**अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः।। ५।।**

गोमायुः सृगालसंज्ञको यां वाचं वदति अशुभसूचनीं, यामुलूको वदति, अशिवाः सृगाल्यः या वाचो वदन्ति तत्सूचितं भयं, तदग्निरिति समानम्।। ५।।

**यद्धेनुर्धेनुं धयति श्वा वा श्वानं खादति रासभे युगे।**

**अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः।। ६।।**

यत् धेनुर्गौः धेनुं धयति पिबति तदा भयं भवति, श्वा वा श्वानं खादति उपलक्षणमेतत् सजातीयेन भक्षणं सजातीयस्य प्रजानां भयं द्योतयति, यत् रासभे गर्दभे स्वप्ने दृष्टे अधिष्ठिते वा भयं रासभ उष्ट्रारोहणाद्युपलक्षणं, यच्च युगे भयं स्वप्ने पितृयुवतिदर्शनं भयावहम्। युगग्रहणेनानेकपितृसम्बन्ध उपलक्ष्यते। गर्दभे युगे वाहनी-भूते इति वा अस्यार्थो व्याख्येयः। रासभेन सह युगः सम्बन्धः साहचर्यमशुभावह-मिति साहचर्येऽपि योजना समूललक्षणाद्यनुसारेण।। ६।।

**चन्द्रग्रहे सूर्यग्रहे यद्भयमुल्कापाते भूमिचलेऽवस्फूर्जे।**

**अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः।। ७।।**

भूमिचलो भूकम्पः। अवस्फूर्जो विद्युत्पातः।।

**यदद्भुतं यदिह किञ्चिद्भूतं भविष्यदभवद्यदिह कर्हिचित्।**
**अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः।। ८।।**

यदद्भुतं दुष्टचिह्नं कदाचिद्भूतं, यच्च भविष्यति, यच्च अभवत् वर्तमान-मित्यर्थः।। ८।।

**यद्देवा देवहेळनं देवासश्चकृमा वयम्।**
**अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः।। १।।**

अत्र निचुङ्कुणस्यार्षम्, 'हेड़-अनादरे', देवहेडनं देवापराधः। हे देवाः, हे देवास इति द्वे सम्बोधने अतिशयार्थे। हे देवाः यत् देवहेडनं वयं चकृम कृतवन्तः, तस्मादेनसः पापात् विश्वात् समस्तादग्निरस्मान् विमुञ्चतु।। १।।

**यदि दिवा यदि नक्तमेनांसि चकृमा वयम्।**
**वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः।। २।।**

गतार्था।। २।।

**यदि जाग्रद्यदि स्वप्न एनांसि चकृमा वयम्।**
**सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः।। ३।।**

न अत्रापि तिरोहितं किञ्चित्।। ३।।

भद्रं कर्णेभिरिति चतस्रः। विश्वेदेवा देवता। शिशुशैवयोरार्षम्। प्रथमा त्रिष्टुप्। द्वितीया पङ्क्तिः। तृतीया जगती। चतुर्थी त्रिष्टुप्।

**भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः।**
**स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः।। १।।**

यजत्रा यष्टव्या यष्टारश्च व्यशेम प्राप्नुयाम देवहितम्।। १।।

**स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।**
**स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु।।**

स्वस्ति अविनाशमिन्द्रादिरस्माकं विदधातु। श्रव इति धनयशसोर्नाम। वेद इति धननाम ज्ञात्यभिधानं वा, सर्वधनः सर्वज्ञो वा। तार्क्ष्यो गरुडः। स एव अरिष्ट-नेमिरहिंसित अश्वः।। २।।

**पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः।**
**अग्निजिह्वा मनवः सूरचक्षसो विश्वे मा देवा अवसागमन्निह।।**

व्याख्यातेयमपि पृषातकहोमे।। ३।।

**शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम्।**
**पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः।।**

इच्छब्दः पूरणार्थः। 'श्वस-प्राणने अन च', अननम् अन्ति जीवितम् अन्तिशब्दादमो लुक्। हे विश्वेदेवाः नोऽस्माकं शतं शरदो वर्षशतम् अन्ति चक्राः कृतवन्तः, यत्रायुषि तनूनां जरसं वृद्धत्वं चक्राः कृतवन्तः, वर्षशतमध्ये हि वृद्धत्वं भवति, यत्र च पुत्राः पितरो भवन्ति यो हि वर्षशतं जीवति तस्य पुत्रा अपि पितरो भवन्ति, अतो नोऽस्माकं गन्तोर्गन्तुमुद्यतानां वर्षशतान्तं मध्ये अन्तरा आयुर्मा रीरिषत, 'रिषिर्हिंसार्थः' मा हिंसीत् कश्चिदायुरित्यर्थः।। ४।।

ऐन्द्राग्नमित्येका षोडशी।

**ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा नातिविध्यन्ति शूराः।**
**तन्नस्त्रायतां तन्वः सर्वतो महदायुष्मन्तो जरामुपगच्छेम जीवाः।।**

व्याख्यातेयम्। इत्यद्भुतशान्तिः।।

**।। इति द्वासप्ततितमी काण्डिका।। ७२।।**



## ।। अथ त्रिसप्ततितमी काण्डिका ।।

**राका होलाके ।। १ ।।**

होला कर्मविशेषः सौभाग्याय स्त्रीणां प्रातरनुष्ठीयते। तत्र होलाके राका देवता मन्त्रलिङ्गात् यास्ते राके सुमतय इत्यादेः। अन्ये तु व्याचक्षते - एतत् सौभाग्यार्थं कर्म क्वचिद्देशे राकाशब्देन प्रसिद्धं, क्वचित् होलाकशब्देन। तथा देशविशेषे क्वचित् सुखकुमारी होलेत्युच्यते। अतः शब्दभेदादौपाधिकं भेदमाश्रित्य, राका च होलाका च राकाहोलाके इति द्वन्द्वः। वक्ष्याम इत्यध्याहारः। राकाहोलाकापर्यायं कुमारीसुखार्थं यज्ञं विवाहोपक्रमप्रसिद्धानुष्ठानं वक्ष्याम इत्यर्थः ।। १ ।।

तमेवाऽऽह -

**इन्द्राणीमासु नारीष्विति कुमारीणां यज्ञं यजेत् ।। २ ।।**

कुमारीणां सुखार्थं प्रधानस्थाने आज्यभागान्ते यज्ञं यजेदृत्विक् चतुर्गृहीतेनाऽऽज्येन इन्द्राणीत्यादिमन्त्रेण। अत ऊर्ध्वमृतुतिथ्यादि समानम् ।। २ ।।

## ।। इति त्रिसप्ततितमी काण्डिका ।। ७३ ।।

इदानीं शास्त्रान्ते प्रकीर्णं यदवशिष्टं, तदाह -

**देवता अप्रज्ञायमाना आग्नेय्या यजेद्वैश्वदेव्या वा ।। १ ।।**

यत्र कर्मणि देवताविशेषो न प्रज्ञायते मन्त्रब्राह्मणवाक्यशेषेभ्यो बहुदेवतानामश्रुतिसम्मोहितत्वेन, तत्र आग्नेय्या अग्निदेवताकया क्वचित् वैश्वदेव्या वा यजेत व्यवस्थितविकल्पेन, यथा उपनयनचूडाकरणप्रभृतिषु आज्यभागान्ते प्रधानस्थानेऽयमुपदेशः ।। १ ।।

**स्वस्तिपुण्येष्वनादेशे त्रिकाः ।। २ ।।**

स्वस्ति अविनाशस्तदर्थानि स्वस्त्ययनानि स्वस्तिशब्देनोच्यन्ते। पुण्यानि पावनानि संस्कारकर्माणि गर्भाधानान्नप्राशनप्रभृतीनि। तेषु देवताविशेषस्य यत्र अनादेशोऽनुद्देशस्तत्र त्रिकाः प्रधानस्थाने कर्तव्याः। तद्द्योत्याश्च प्रधानदेवतास्त्रिकाः पुनश्चत्वारोऽनुवाकस्था बार्हस्पत्ययाम्यरौद्रवारुणास्तव श्रिये इत्यनुवाकद्वये पठिताः ।।

**महाव्याहृतयोऽष्टर्चं चात्र कल्पयन्ति।। ३।।**

तत्र महाव्याहृतयः प्रसिद्धाः।। ३।।

अष्टर्चं तु विभज्य दर्शयति -

**अग्निर्मूर्धेति चतस्र उपप्रयन्त इति द्वे, कदाचन स्तरीरिति द्वे धुरश्चोपधुरश्च धुरश्चोपधुरश्च।। ४।।**

स्पष्टोऽष्टानां विभागः। धुरश्चोपधुरश्च प्रधानस्थाने यष्टव्याः। शास्त्रान्ते मङ्गलार्थं धुरामुपधुरामभ्यासः। शास्त्रतदर्थप्रतिज्ञातार्थानुष्ठानाऽऽवृत्तिर्हि परमं मङ्गलं तदावृत्त्या द्योत्यते। शास्त्रान्ते च मङ्गलोपसंहार इष्यते। यथोक्तम् - 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलावसानानि च शास्त्राणि प्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणि च भवन्ति।' (म.भा.) इति शुभम्।

अथात्र मन्त्रभाष्यम् -

**यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि।**
**ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा।।**

सीमन्तोन्नयने व्याख्यातेयम्।।

**इन्द्राणीमासु नारीषु सुपत्नीमहमश्रवम्।**
**नह्यस्या अपरं च न जरसा मरते पतिः। विश्वस्मादिन्द्र उत्तरः।।**

इन्द्र आह - आसु सर्वासु नारीषु मध्ये अहमिन्द्राणीमिन्द्रपत्नीमेव सुभगामुत्तमामश्रवं शृणोमि, ततो नहि अस्या अपरं नहि पत्युपासाव्यतिरिक्तः स्त्रीणां गुण आम्नातः। अत इयं सर्वोत्तमा। एतन्माहात्म्यादेव अस्याः पतिरिन्द्रो जरसा वृद्धो नान्यपतिवत् म्रियते। विश्वस्मात् सर्वस्मादिन्द्रः पतिरस्या उत्कृष्टोऽत एव।।

**अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपण्यया।**
**समिद्धः शुक्र आहुतः।।**

व्याख्याता आग्नेय्याम्।।

**स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।**
**स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु।।**

इयमपि वैश्वदेवे विवृता।।

तव श्रिये इति चत्वारस्त्रिकाः। तत्र देवासुराणामार्षम्।

**तव श्रिये व्यजिहीत पर्वतो गवां गोत्रमुदसृजो यदयमङ्गिरः।**
**इन्द्रेण युजा तमसा परीवृतं बृहस्पते निरपामौब्जो अर्णवम्।। १।।**
**बृहस्पते अति यदर्यो अर्हद् द्युमद्विभाति क्रतुमज्जनेषु।**
**यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं धेहि चित्रम्।। २।।**
**बृहस्पतिः समजयद्वसूनि महो व्रजान्गोमतो देव एषः।**
**अपः सिषासन्स्वरप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः।। ३।।**

बार्हस्पत्योऽयं त्रिकः। जगती छन्दः। नक्षत्रयज्ञेषु पूर्वा व्याख्याता। हे बृहस्पते तत् द्रविणं धनं चित्रं हेममहामणिप्रमुखं चायनीयं वा अस्मासु देहि धेहि वा। किं तत्। अतियदर्यः, अतिशयेन अरणीयः सेवनीयो राजादेः। अर्हत् अतिपूज्य-मित्यर्थः। द्युमत् द्युतियुक्तं भास्वन्मणिकनकादिकं विभाति विशेषेण भाति, जनेषु क्रतुमत्। यच्च दीदयत्, अतिशयेन दीप्तियुक्तं, शवसा बलेन हस्त्यादिना युक्तम्। हे ऋतप्रजात, ऋताद्धि सत्यात् प्रजापतेः परब्रह्मणः त्वं प्रकर्षेण जातः, अथवा ऋतेन सत्येन प्रज्ञाविशेषेण युक्तस्त्वं जातः।। २।।

वाग्वै बृहती। तस्याः पतिः सुरगुरुः स्तनयित्नुदेवता वा, वसूनि धनानि गोरूपाणि असुरैरपहृतानि देवताभ्यः समजयत् प्राग्वर्णितसमरोपाख्यानप्रकारेण सेनापतिर्भूत्वा, गाः प्रत्याजहार प्रत्यावर्तयामास, जलानि वा वसूनि वसूनां निमित्त-भूतानि मेघाधिष्ठातृदेवता जयति। महो व्रजान्गोमतः, लिङ्गव्यत्ययेन वसुविशेषण-मेतत्। महो व्रजान् बृहतः समूहान् गोमतः गोसम्बन्धिनः, उदकपक्षे तु गोमतो बलवतो महोव्रजान् मेघान्, स हि तान्वशीकृत्य जलं त्याजयति। अत एव बृहस्पतिर्देवो विजिगीषुः पौरुषेण द्योतमानः, नान्यः। अपः सिषासन्, 'षण-दाने' अपो ददत्। स्वरप्रतीतः, स्वश्च समजयत् द्यां स्वर्गं च जितवान् अप्रतीतः सन् प्रतीतिः प्रतीतं न विद्यते अन्यत्र प्रतीतिरपेक्षया यस्य सोऽप्रतीतः। किञ्च बृहस्पतिर्हन्त्यमित्रमर्कैः सुरगुरुर्मन्त्रैः, मेघदेवता तु अन्नैः।। १।।

**यमो दाधार पृथिवीं यमो द्यामुत सूर्यम्।**
**यमाय सर्वमित्तस्थे यत्प्राणद्वायुरक्षितम्।। १।।**

**यथा पञ्च यथा षड्यथा पञ्च दशर्षयः।**
**यमं यो विद्यात्स ब्रूयाद्यथैकर्षिर्विजानते।। २।।**
**त्रिकद्रुकेभिः पतति षडुर्वीरेकमिब्दृहत्।**
**गायत्री त्रिष्टुप्छन्दांसि सर्वा ता यम आहिता।। ३।।**

यमो देवता त्रिके। अनुष्टुप् छन्दः। यमो दाधारेति व्याख्याता।।

यो यमं विद्यात् जानीयात्, स ब्रूयात् यमस्य स्वरूपम्। कस्मै ब्रूयात्। विजानते विशिष्टज्ञानयुक्तायैव, न तु अज्ञाय। यथैकर्षिः, एक एव ऋषिः परमात्मा यथा जानन् विजानते परमं रहस्यमर्पयति तद्वत्, यथा वा अन्ये ऋषय इन्द्रियादयः जानन्त एव ज्ञानशक्तियुक्तायैव विषयमर्पयन्ति। तत्र पञ्च बाह्येन्द्रियाणि। तान्येव मनोपेक्षया षट्। करणं त्रयोदशविधम्, आत्मा, विषयाश्चेति पञ्चदश।

गायत्र्युष्णिगित्येवमादीनि यानि छन्दांसि, तानि सर्वाणि यमे परमात्मनि आहितानि तद्विवर्तत्वात् तत्परिणामत्वाद्वा। सर्वा ता आहिता इति सर्वत्र, 'शेश्छन्दसि बहुलम्' इति शेर्लुक्। एकमिद्बृहत्, इदिति पूरणे, यत एकमेव बृहत् परमं महत् ब्रह्म अद्वितीयमतः सर्वस्य परमात्मनि आधानम्। त्रिकद्रुकेभिः पतति, त्रिकद्रुकनामानः कर्मविशेषाः, उपलक्षणमिह त्रिकद्रुकग्रहणम्, त्रिकद्रुकादिभिः कर्मभिर्यत् स्वाङ्गादीन् पतति आप्नोति यजमानः फलविशेषान्, तेषां सर्वेषां परमात्मनि आधानम्। यच्च षडुर्वीः, षट् उर्व्यः पृथिव्यन्तरिक्षादयः षड्देवताः महाप्रभावास्ता अपि ब्रह्मणि आहिताः। उर्वीग्रहणमपि इह सर्वदेवतोपलक्षणार्थम्। षडुर्व्यः - पृथिवी, द्यौः, अन्तरिक्षम्, अहः, रात्रिः, ओषधयः।। २ ।।

**मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते।**
**यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु।।**
**अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः।**
**सुम्नायन्नद्विषो अस्माकमाचरा रिष्टवीरा जुहवाम ते हविः।।**
**त्वेषं वयं रुद्रं यज्ञसाधनं वङ्कुं कविमवसे निह्वयामहे।**
**आरे अस्मदमतिं हेडो अस्य तु सुमतिमिद्वयमस्यावृणीमहे।।**

व्याख्यातोऽयं रौद्रस्त्रिकः।। ३।।

**अव ते हेळो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः।**
**क्षयमस्मभ्यमसुर प्रचेतो राजन्नेनांसि शिश्रथः कृतानि।। १।।**
**उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय।**
**अथा वयमादित्य व्रते तवानागसो अदितये स्याम।। २।।**
**तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः।**
**अहेलमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः।। ३।।**

अयमपि चतुर्थस्त्रिको वारुणो व्याख्यातः।। अथाष्टर्चः -

**अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्।**
**अपां रेतांसि जिन्वति।। १।।**
**उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै।**
**उभा दाताराविषां रयीणामुभा वाजस्य सातये हुवे वाम्।। २।।**
**अयमिह प्रथमो धायि धातुभिर्होता यजिष्ठो अध्वरेष्वीड्यः।**
**यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विशे।। ३।।**
**अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः।**
**तं जानन्नग्न आरोह ततो नो वर्धया रयिम्।। ४।।**

एताश्चतस्रो व्याख्याताः।।

**उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये। आरे अस्मे च शृण्वते।। ५।।**
**अस्य प्रत्नामनुद्युतं शुक्रं दुदुह्रे अह्रयः। पयः सहस्रसामृषिम्।। ६।।**

एते व्याख्याते।।

**कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे।**
**उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते।। ७।।**
**परि ते दूडभो रथोऽस्माँ अश्नोतु विश्वतः। येन रक्षसि दाशुषः।। ८।।**

एते व्याख्याते। धुरश्चोपधुरश्चोक्ताः।।

**।। इति चारायणीयमन्त्रभाष्यम्।।**

**।। कृतिः श्रीमदाचार्यवर्यस्वामिभट्टारकहरिपालसूनु-**
**देवपालपूज्यपादानाम्।।**

# सूत्रानुक्रमणिका

**ब**

